CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(अत्र आर्याष्टकं रत्नपुष्पाञ्जलिस्तोत्रं च नेपालराजकीय-कोशागारात् लब्धं श्री सि. आर्. स्वामिनाथार्यमहोदयेन प्रकाशितम् । नरसिंहाष्टकं, श्रीमत्क्रमस्तवः, गुरुपादुकापञ्चकं च ब्रह्मविद्यायां, मातृपञ्चकं शङ्करचरितनिबन्धेषु च प्रकाशि-तम् । अन्यत्सर्वं श्रीरङ्गस्थवाणीविलासमुद्रणालय प्रकाशित शाङ्करग्रन्थावली–जगद्गुरु ग्रन्थमालातः कामकोटिकोशस्थान प्रकाशितशङ्करस्तोत्रग्रन्थेभ्यश्च सङ्कलितम् ।)

**३ वेदान्तादिप्रकरणग्रन्थाः —**



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एषु दुर्वासनाप्रतीकारदशकं, बालबोधसंग्रहाद्याः पञ्च च (११३-११७) ब्रह्मविद्यातः सङ्गृहीताः । अन्ये शाङ्करग्रन्थावलीं—जगद्गुरुग्रन्थमालातः ।

भगवत्पादविरचिताः सङ्कलनेऽस्मिन् अनुदाहृताः मुद्रिता अमुद्रिताश्चेतरे ग्रन्था नामतो निर्दिश्यन्ते ।

१ भाष्यग्रन्थाः —



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**२ व्याख्याग्रन्थाः —**



**३ इतरे प्रकरणग्रन्थाः —**



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आकरः – १ अद्वैतग्रन्थकोशः (इष्टसिद्धीन्द्रसरस्वतीशिष्यः)
२ शङ्कराचार्य (बलदेव उपाध्यायः)

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## FOREWORD

I have great pleasure in writing a foreword to this publication which is unique in many respects. Right from the day Shri Kota Venkatachalam published his book on Indian choronology, the need to reassess the veracity of the prevalent theories concerning the date of Sankara has gained importance. But the Indian scholarly world, particularly in the field of History, accustomed to a long habit of accepting the verdicts of Western Scholars as final, has refused to address itself to this problem. To add to this, the personal prejudices, predilictions and interest of several religious institutions also played a part in ignoring the need to revise the deeprooted ideas about Sankara's date. Some of the institutions founded by Sri Sankara which were subjected to several historical vicissitudes and consequently had lost their unbroken continuity, also found it convenient to accept the theory of 8th century A. D. being the time of Sankara. The publication of a monograph and a book on the date of Mahabharata by Shri Veda Vyas (an IAS Officer of the Andhra Pradesh Cadre), once again brought to the forefront the hollowness of the conclusions arrived at by the western and oriental historians about Indian literature.

After 37 Years of Independence, our intellectual subordination to Western Orientalists is still preventing us from looking at the facts that have emerged in recent past regarding our cultural and literary achievements. Inadvertantly, many Indian scholars

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

are still prepared to accept that the Vedic civilisation is not earlier to the Greek civilisation.

Particularly in the case of Sankaracharya, several pontiffs who adorned the institutions established by the great Philosopher were invariably known by the name of Sankaracharya and hence there have been a tendency to attribute whatever was done or written by later Peethadhipatis, to the earliest of the line. These, so called historical facts though related to different personalities, were jumbled together and the chroniclers compiled them in the name of biography of Sankaracharya. A close perusal of the Madhaviya Sankara Vijaya would reveal that it was the work of a mediocre poet who wantonly attributed his own work to Vidyaranya Madhava. Adding insult to injury, he claims to be Navakalidasa, an appellation which would have never been welcomed by the great philosopher and saint, Vidyaranya. Some more later writers wrote Sankara Vijaya on the lines of the one mentioned above. But all of them do accept that there was an earlier authentic biography of the Great Seer. It is very doubtful whether these authors were personally acquainted with that earliest one.

Without going into the details of the cotroversy, one can definitely say that the Madhaviya Sankara Vijaya and its followers are not dependable historical documents in so far as the biographical facts of Sankara are concerned. In contrast, one can definitely infer that works like Vyasachaliya' Ananda Giri's Sankara Vijaya, Guru Ratnamala and Patanjali Charita are works written by authors who had a direct access to the earliest biography of Sankara

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

before it got mixed up with the lives and works of the later Acharyas in the various Peethas.

The present volume produced by Pt. Radhakrishna Shastri serves as a compilation of the facts mentioned in these earlier sources and to that extent it is a bold attempt to prove that inspite of the publicity and a stamp of authenticity gained by the Madhaviya Sankara Vijaya, it is not a dependable historical document. It has also proved that Śankara's date cannot be after the starting of the Christian era.

While establishing or trying to discover historical facts, one should not be influenced by sentiments or personal predilictions and if by accepting the date of Sankara in the B.C., if some Mutts or institutions are not able to trace their genealogical tree to its roots; it is not going to affect their antiquity nor anybody is going to question their link with the founder Adi Sankara Bhagavatpada. A country which has traced its cultural and historical traditions, even after a break of 300 years of Muslim rule followed by 150 years of British rule can very well accept the fact that these institutions had suffered some eclipses for a longer or shorter duration since the times they were established by Adi Sankara. It is said of Advaita school that it has no need to refute other schools of philosophy to get itself established, whereas other schools have the necessity to disprove Advaita for their existence. The same can be said in respect of the Kamakoti Mutt of Kanchipuram which has the unbroken tradition and hence which can accept all others as belonging to the parampara.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

I once again congratulate Pt. Radhakrishna Shastri for having brought out all the facts in a cogent way and also thank him for giving me an opportunity to write this foreword. I would very much like to see this book translated into all the regional languages and English with proper referencing of the source materials so that this great 'Adhyasa' regarding Sankara Vijaya is once for all removed.

*Dr. C. R. Swaminathan.*
Kariakar.



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# किञ्चिन्निवेदये

श्रीशङ्करविजयमकरन्दो मया सङ्कलितः 1978 वत्सरे। तस्यैव प्रतिकृतिमुद्रणपरिपाट्या प्रणीयते तृतीयमिदं संस्करणं, यत्र मूले टिप्पण्यां प्राक्कथने वा प्रथममुद्रितान्न किमपि विशिष्टं सन्निवेश्यते।

अस्य ग्रन्थस्य सङ्कलने मूलतयोपात्तेषु ग्रन्थेषु श्रीराजचूडामणिदीक्षितस्य श्रीशङ्कराभ्युदयं नाम अष्टसर्गात्मकं काव्यमप्येकतमम्। मनोरमं रसिकजनोपजीव्यं तत् टिप्पण्या योजितं प्रकाश्यतेऽनुपदमेव इति निवेदने कुतुकं मनः। सङ्कलने चैतादृशे मार्गदर्शिनं माधवीयशङ्करविजयग्रन्थकर्तारं उपालभे। नमामि तं पूर्वंगमाचार्यम्। श्रीमाधवः प्राक्तनैः कृतेभ्यः शङ्करविजयेभ्यः सारसंग्रहणं ग्रन्थारंभ एव प्रास्तौत्। 'प्राचीनशङ्करविजये सारः संगृह्यते मया।' "मदीये लघुसंग्रहेऽस्मिन् उद्वीक्ष्यतां शाङ्करवाक्यसारः।" "यथाऽतिरुच्ये मधुरेऽपि रुच्युत्पादाय रुच्यन्तरयोजनार्हा। तथैष्यतां प्राक्कविहृद्यपद्येष्वेषाऽपि मत्पद्यनिवेशभङ्गी।" इति। श्रीमाधवेन मूलतया संभावितोऽयं ग्रन्थ इति परमोपादेयत्वमाकलय्य तस्य प्रकाशनाय प्रवर्ते।

चिराय पूर्णो मनोरथः। श्रीभगवत्पादचरिताब्धितीरे सञ्चरता मया सङ्कलिता यदृच्छालब्धाश्चेमे श्रीभगवत्पादचरितानुभवमुक्ताकणाः। एते भवतां पुरत उपह्रियन्ते। एतेन प्रसीदन्तु मयि जगद्गुरवो भगवत्पादाः तत्प्रतिष्ठापितकामकोटिपीठाधीशाश्च। शम्।

22, वीरेश्वरं अप्रोच रोड्,
श्रीरंगम्-620006

एस्. वी. राधाकृष्णशास्त्री

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# श्रीशङ्करविजयमकरन्दः

## ॥ विषयानुक्रमणिका ॥

आस्वादः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



स्वस्ति श्रीमदखिल भूमण्डलालङ्कार त्रयस्त्रिंशत्कोटिदेवतासेवित कामाक्षी
देवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथ
साक्षात्कारपरमाधिष्ठान सत्यव्रतनामाङ्कित काञ्चीदिव्यक्षेत्रे शारदा
मठसुस्थतानाम् अतुलितसुधारस माधुर्य कमलासन कामिनी
धम्मिल्ल संफुल्ल मल्लिका मालिका निष्यन्द मकरन्दझरी
सौवस्तिक वाङ्निगुंफ विजृंभणानन्द तुन्दिलित मनीषि
मण्डलानाम् अनवरताद्वैतविद्या विनोद रसिकानां
निरन्तरालङ्कृत शान्तिदान्तिभूम्नां सकलभुवन
चक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठा विख्यात यशोऽलंकृतानां
निखिलपाषण्डषण्डकण्टकोत्पाटनेन विशदीकृतवेदवेदान्त
मार्ग षण्मत प्रतिष्ठापकाचार्याणां श्रीमत्परमहंस परिव्राजका
चार्यवर्य श्रीमच्छंकरभगवत्पादाचार्याणां अधिष्ठाने सिंहासना
भिषिक्त श्रीमन्महादेवेन्द्र सरस्वती संयमीन्द्राणामन्तेवासिवर्य

श्रीमच्चन्द्रशेखरेन्द्रसरस्वती संयमीन्द्राणाम्

अन्तेवासिवर्य

श्रीमज्जयेन्द्रसरस्वती संयमीन्द्राणाम्

चरणकमलयोः

साष्टाङ्गप्रणतिपूर्वकं कृतिमिमां समर्पयामः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

|| श्रीगुरुभ्यो नमः ||

|| श्रीमहागणपतये नमः ||

# || श्रीशङ्करविजयमकरन्दः ||

## || प्रथम आस्वादः ||

### मङ्गलाचरणम्

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रपुरं महः || १ ||

दयमानदीर्घनयनां देशिकरूपेग दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीतमातरं वन्दे || २ ||

दयिन्या श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदाराध्यश्रीमद्गुरुचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति मम देवी करुणया || ३ ||

वन्दे चन्द्रमसं चन्द्रशेखरं तमुमापतिम् ।
इन्द्रं सरस्वतीं चन्द्रशेखरेन्द्रसरस्वतीम् || ४ ||

---

(४-५) अथ ग्रन्थारम्भे मङ्गलायतनं श्रीगुरुचरणद्वन्द्वं स्वेष्टदेवतां च नमस्यन्, देशिकरूपेण दर्शितमभ्युदयं, लब्धं वाक्प्रसरं च त्रिभिः आद्यैः श्लोकैर्वर्णयित्वा, महतो विस्तृतस्यागाधस्य श्रीभगवत्पाद-चरितस्य, सङ्कलनोपयोगितया, 'यन्मनसा ध्यायति तद्वाचा वदति' इति स्वमनोवृत्तिव्याप्यतां सम्पादयितुकामः, मनसो व्यापकत्वासिद्धये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकामकोटिपीठेशं श्रीजयेन्द्रसरस्वतीम् ।
तन्मूर्त्या दर्शितक्षेमं भगवत्पादशङ्करम् ॥ ५ ॥

दयमानदीर्घनयना देशिकताभव्यदृश्यदक्षकरा ।
वामकरनिहितदण्डा गुरुमूर्तिर्मुग्धमधुरवदनाऽव्यात् ॥ ६ ॥

---

'चन्द्रमा मे मनसि श्रितः' इति मनोऽधिष्ठात्रीं देवतां भगवन्तममृतकिरणमिन्दुं प्रणमति प्रथमं – वन्दे चन्द्रमसमिति । क्षयिष्णु वर्धिष्णु च भौतिकं तत्स्वरूपं मनःसम्पत्तौ वैकल्यमापादयेद्वेत्याशङ्कया अक्षयमकलङ्कं नित्यं तं शङ्करशिरोभूषणं भावयन्, तद्भावनाबलेन शङ्करमेव ध्यानपथे करुणया स्वयमवतीर्णं प्रणमति – चन्द्रशेखरमिति । एष एव शङ्करः स्वसंकल्यमानकथाप्रतिपाद्यः स शङ्कर इति प्रत्यभिज्ञया पुनः तं प्रणमति – तमिति । केनोपनिषत्प्रतिपाद्या हैमवती बहु शोभमाना सा उमा दयमानदीर्घनयना दयमानदीर्घनयनां गुरुमूर्तिं (भगवन्तं भगवत्पादं च) करुणया अस्मान् परिचाययन्ती तत्पार्श्वे दृष्टा, तया सह तं पुनः प्रणमति – उमापतिमिति । संकलनोपयोगिबलसंपत्त्यै 'इन्द्रो मे बले श्रितः' इति बलाधिष्ठात्रीं देवतां प्रणमति – इन्द्रमिति । अल्पीयस्यपि दुष्करे संकलने नवनवोन्मेषदायिमेधासम्पत्तये धीनामवित्रीं प्रणमति – सरस्वतीमिति । अथ अकस्मात्, ता एताः देवताः 'प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति' इति स्वस्मिन्नजातप्रत्ययः शरणं वृणुते गुरुचरणयोः प्रणिपत्य – चन्द्रशेखरेन्द्रसरस्वतीमिति । उत्तरक्षण एव स्फुरति पुरतः सा गुरुमूर्तिः धृतचन्द्र-चन्द्रशेखर-(शंकर-उमा)इन्द्र-सरस्वतीस्वरूपा गृहीततदभिधाना च, नमस्यति जनेऽस्मिन् करुणया । हृदि नटन्त्याः गुरुमूर्तेः करकमलसञ्जाता सा अन्येव, न, सैव गुरुमूर्तिः पुरतो भान्ती श्रीजयेन्द्रसरस्वतीश्रीचरणाख्या, करुणया चरति भुवने शंकराचार्यरूपा ग्रन्थप्रतिपाद्यं वस्तु मनोवृत्तिव्याप्यं सम्पादयन्तीत्यनुभवन् श्रीचरणान् प्रणमति – श्रीकामकोटिपीठेशमित्यादिना । अन्ते तन्मूर्त्या दर्शितक्षेमं भगवत्पादशङ्करं च ग्रन्थप्रतिपाद्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दण्डालम्बकराम्बुजं पदयुगश्लिष्यद्वटीपादुकं
शीर्षारोपितभक्तदत्ततुलसी।पल्वादिमालाभरम् ।
मार्गाभ्यागतसज्जनाकलितसाष्टाङ्गप्रणामोन्मिषत्
कारुण्यं हृदि भावये गुरुवरं श्रीकामकोटीश्वरम् ॥ ७ ॥

## श्रीगुरुपरंपराध्यानम्

सदाशिवसमारंभां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ ८ ॥

नारायणं पद्मभुवं वसिष्ठं शक्तिश्च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥

श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि ॥ ९ ॥

## एतद्गुरुपरंपरानन्तर्गतप्राक्तनाद्वैताचार्यस्मरणम्

आचार्यं प्रणमामि सादरमहं तं ब्रह्मनन्दीति यः
प्रख्यातो मुनिरत्रिवंश्य उदितः संक्षेपशारीरके ।
छान्दोग्योपनिषच्च येन विवृता वाक्यैर्हि सूत्रात्मभिः
यं ग्रन्थेषु परः पुनः पुनरपि ब्रूते प्रमाणं परम् ॥ १० ॥

छान्दोग्योपनिषद्वाक्यग्रन्थकर्तॄन्नुमो वयम् ।
अद्वैतनिष्ठानाचार्यान् आत्रेयब्रह्मनन्दिनः ॥ ११ ॥

---

(१०-१३) द्रविडालयदर्शनतः । आत्रेयब्रह्मनन्दिनः द्रविडाचार्याः सुन्दरपाण्ड्यो भर्तृहरिश्चेति एते चत्वारः विशुद्धस्य अद्वैतसंप्रदायस्य प्रवर्तकेषु भगवत्पादेभ्यः प्राक्तनेषु पूर्वाचार्येषु अन्यतमाः । ब्रह्मनन्दिनः आत्रेयगोत्राः छान्दोग्योपनिषदर्थविवरणात्मकं सूत्ररूपवाक्यनिचयमण्डितं वाक्यनामकं ग्रन्थरत्नं प्राणैषुः । द्रविडाचार्यास्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचार्यान्द्रविडाख्यया सुविदितान् स्तौमि प्रमाणीकृतान्
श्रीमच्छङ्करदेशिकप्रभृतिभी रामानुजाद्यैरपि ।
छान्दोग्योपनिषत्प्रमेयविवृतिर्यैर्ब्रह्मनन्दीरिता
वाक्याख्याऽतिगभीरसूत्रसरणिर्भाष्येण संभूषिता ॥ १२ ॥

छान्दोग्योपनिषद्वाक्यभाष्यकर्तॄन्नुमो वयम् ।
अद्वैतभावानाचार्यान् द्रविडाचार्यसंज्ञितान् ॥ १३ ॥

आचार्यं सुन्दरं पाण्ड्यं नमामः प्राक्तनं गुरुम् ।
पूर्वोत्तरे च मीमांसे वार्तिकैर्येन मण्डिते ॥ १४ ॥

प्रभवात्परमार्थसंग्रहाच्च प्रणयस्थानममुष्य सिद्धशिष्यः ।
विरतक्षितिरक्षणो विरक्त्या हरिरंहो मम दंहतां स्वशक्त्या ॥ १५ ॥

---

तद्वाक्यग्रन्थरत्नं विमलेन भाष्येण अभूषयन् । तेन चैतेषां निरुपपदमेव वाक्यकारा भाष्यकारा इति प्रथा समजायत । तावुभावपि वाक्य-भाष्यग्रन्थौ इदानीं दैवदुर्विपाकात् अदृश्यतां गतौ । तत्र वाक्यग्रन्थे अष्टौ भाष्यग्रन्थे नव चाहत्य सप्तदशवाक्यानि अद्वैतग्रन्थेषु, वाक्य-ग्रन्थे द्वाविंशतिः, भाष्यग्रन्थे एकादश चाहत्य त्रयस्त्रिंशद्वाक्यानि रामानुजादिग्रन्थेषु चोदाहरिषत । तान्येव दैववशादिदानीमुपलभ्यन्ते । व्यासपूजाकाले अद्वैतिभिर्यतिभिः द्रविडाचार्यपञ्चके मध्यगत्वेन द्रविडा-चार्याः पूज्यन्ते । गौडपादा इव तदानीन्तनैरनभिज्ञातविशिष्टाभिधेयत्वात् देशवाचिद्राविडशब्दसमभिव्याहार्या अभूवन्निति ज्ञायते ॥

(१४) आचार्यः सुन्दरपाण्ड्योऽपि कदा जात इति न ज्ञायते । तन्निर्मितं ग्रन्थमद्य नोपलभामहे । परं, ब्रह्मसूत्रभाष्ये समन्वयाधिकरणान्ते भगवत्पादैरुदाह्रियमाणं "गौणमिथ्यात्मनोऽसत्वे" इत्यादिकं श्लोकत्रयं पद्मपादीयपञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां तत्कर्ता आत्मस्वरूपाचार्यः सुन्दरपाण्ड्यप्रणीतमिति परिचाययति ॥

(१५) जगद्गुरुरत्नमालास्तवतः । अमुष्य श्रीगोविन्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रविडत्रयमात्रेयत्रयं गौडत्रयं तथा ।
अद्वैतबोधसिद्ध्यर्थं नमामः करणैस्त्रिभिः ॥ १६ ॥

## गुरुपरंपरायां संज्ञाभेदः

नारायणः पद्मभवो वसिष्ठः शक्तिश्च तत्पुत्रपराशरश्च ।
व्यासः शुकश्चेति गुरुक्रमोऽयं प्रसिद्ध आस्ते पितृपुत्ररीत्या ॥ १७ ॥

ज्ञानशक्तिबलैश्वर्यवीर्यतेजोभिरन्वयात् ।
भगवत्संज्ञया चेमे स्मर्यन्ते गुरुपुङ्गवाः ॥ १८ ॥

परंपरा शुकाद्या हि गुरुशिष्यक्रमागता ।
शुकशिष्यः परिव्राजामाद्यो गौडश्च जन्मना ॥ १९ ॥

महत्त्वार्थकपादाख्याप्रख्यातः परमो गुरुः ।
भगवत्पादसंज्ञाकौ गोविन्दगुरुशङ्करौ ॥ २० ॥

---

योगीन्द्रस्य । चन्द्रशर्मणः सुताश्चत्वारः भर्तृहरिभट्टिविक्रमवररुचय इति । चन्द्रशर्मैव श्रीगौडपादेभ्यो गृहीतसंन्यासः गोविन्दयोगीन्द्रो बभूव । चन्द्रशर्मणः उत्पन्नोऽयं विषयोपभोगवैतृष्ण्येन निरस्तराज्यचिन्ताभरो निर्वृतः गोविन्दभगवत्पादान् शुश्रूषमाणो नित्यान्तेवासी सर्वोत्तरब्रह्मविद्यां परिगृहीतवान् । वाक्यपदीयादिमहाप्रबन्धनिर्माता । वाक्यपदीये बहुल अद्वैततत्त्वं सुस्पष्टं प्रतिपादयत्ययम् । अद्वैतविद्याचार्येषु प्राक्तनेषु अयं विशिष्टतया गण्यते ॥

(१६) द्रविडात्रेयदर्शनतः । द्रविडाचार्यो भगवत्पादः अप्पयदीक्षित इति अद्वैताचार्यद्रविडत्रयम । (अप्पयदीक्षितस्थाने अभिनवद्रविडाचार्यतया प्रख्यातानां बालकृष्णानन्दसरस्वतीनां गणनमपि साधु ।) दत्तात्रेयो ब्रह्मनन्दी भगवत्पाद इति अद्वैताचार्यात्रेयत्रयम् । गौडपादः सुरेश्वरः गौडब्रह्मानन्दसरस्वती इति अद्वैताचार्यगौडत्रयम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान्पद्यते येन गम्यते बोध्यतेऽपि च ।
इति तौ भगवत्पादाभिख्या साऽन्वेति सार्थिका ॥ २१ ॥

अगताध्वप्रापणेन पादाविव गुरूत्तमः ।
शास्त्रान्तरानवगतब्रह्मबोधोपकारकः ॥ २२ ॥

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशैः
त्रातुं लोकान् भवदवशिखातापपापच्यमानान् ।
त्यक्त्वा मौनं वटविटपिनो मूलतो निस्सरन्ती
शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ॥ २३ ॥

चरतेर्लट्प्रयोगोऽयं भासते सार्थको, यतः ।
शङ्करस्थापितानेकपीठाधिपतयः समे ॥ २४ ॥

प्रथन्ते शङ्कराचार्याः भिन्नदीक्षाभिधा अपि ।
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मकाः ॥ २५ ॥

तद्गुणानेव गायन्तः तद्भेदं विवृण्वते ।
एतेषां शङ्कराद्भेदं कञ्चिन्नोपलभामहे ॥ २६ ॥

श्रीशङ्करादविच्छिन्नसंप्रदायप्रवर्तकान् ।
अद्वैतस्थापने धर्मरक्षायां बद्धकङ्कणान् ॥ २७ ॥

मौलप्राग्दक्षिणोदीच्यपश्चिमाम्नायपीठगान् ।
प्रणुमस्तान्परिव्राजः परहंसान् गुरूत्तमान् ॥ २८ ॥

शङ्करसर्वज्ञादीन् प्रणुमः श्रीकामकोटिपीठेशान् ।
एकोनसप्ततिगुरून् इष्टाप्त्यै श्रीजयेन्द्रान्तान् ॥ २९ ॥

## उपोद्घातः

श्रीमत्समस्तसंपत्समृद्धिसंपूर्णरम्यतोत्कर्षम् ।
कञ्चन कलये कालं सार्धद्विसहस्रवत्सरेभ्यः प्राक् ॥ ३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्मिन्भारतवर्षे समभूत् ह्यानवद्यविद्योति ।
नानाकलाकलापप्रसारविस्तारिकीर्तिकमनीयम् ॥ ३१ ॥

प्रतिदिनमधीयमानश्रुतिपरिपूतद्विजातिकुलशोभि ।
षड्दर्शिनीपटिष्ठद्विजगोष्ठीचिन्त्यमानशास्त्रार्थम् ॥ ३२ ॥

वैदिककर्मठविद्वत्परिषदनुष्ठीयमानबहुयागम् ।
अनवरतमुदितनिर्जरभावितसस्यादिसंपदभिरामम् ॥ ३३ ॥

अस्मिन् भारतवर्षे विषयविदूरा महात्मानः ।
भगवद्ध्यानैकपराः तपसा त्यागेन लेभिरे स्वपदम् ॥ ३४ ॥

अस्मिन् विन्यस्य पदं सुरलोकाद् भारती देवी ।
स्वयमवततार भूमौ येनाभूत् कविगुरुः स वाल्मीकिः ॥ ३५ ॥

सूक्तिसुधारसदानात् अखिलानामोदयन् विबुधान् ।
रूपान्तरगतविष्णुः कृष्णद्वैपायनोऽत्र संजज्ञे ॥ ३६ ॥

सूर्याचन्द्रमसाविव सन्तमसं यौ विधूनुतो जगतः ।
ताभ्यां पूतं भारतवर्षं वर्णयतु कः कथङ्कारम् ॥ ३७ ॥

देहस्य वाङ्मनसयोरपि मलमुन्मूलितं येन ।
तेन पतञ्जलिनेदं वर्षमभूष्यात्मनो जनुषा ॥ ३८ ॥

कर्मज्ञानप्रभजनयोगैरौदार्यवीर्यशीलगुणैः ।
विद्याविवेकशिल्पैः वर्षमिदं प्रागदिद्युतन् बहवः ॥ ३९ ॥

श्रीखण्डखण्डजनिभूरगस्त्यत्रासातिपावनोदेशः ।
दक्षिणसमीरसूतिर्लसति तदं मलयशैलोऽत्र ॥ ४० ॥

---

(३१–४२) भारतगीततः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातेव पोषयन्ती पयसा देशानबाधमङ्कगतान् ।
श्रीरङ्गसङ्गसङ्गतमङ्गलतुङ्गाऽत्र वहति कावेरी ॥ ४१ ॥

मुक्ताकलितं तीर्थं दधती विरजेव याऽवगाहिजनान् ।
मुक्तामयान् वितनुते प्रवहति सरिदत्र ताम्रपर्णी सा ॥ ४२ ॥

तुङ्गापूर्णविगिन्याद्या नद्यः शुभा विराजन्ते ।
स्वच्छाः सुखावगाहाः व्योमस्पृक्पुष्पितद्रुमत्तीराः ॥ ४३ ॥

अहमहमिकया चोलाश्चेराः पाण्ड्याश्च पल्लवा इतरे ।
व्यदधुर्यत्तीरेषु श्रीशेश्वरयोर्महान्ति सद्मानि ॥ ४४ ॥

शङ्करभगवत्पादाः परमाचार्या अवातरन्नत्र ।
ये किल सोपानततिं निरमासत मुक्तिसौधमधिरोढुम् ॥ ४५ ॥

यद्ग्रथितसूक्तिमाला सुदृशां प्रतिदेशमुल्लसति कण्ठे ।
तेषां चरितं बहुभिर्ग्रथितं विस्तीर्णमत्र सङ्कलये ॥ ४६ ॥

अंशे शिवरहस्यस्य नवमे सूचितं तथा ।
मार्कण्डेय्यां संहितायां नातिविस्तरतो मनाक् ॥ ४७ ॥

चरितं गुरुनाथस्य बहवः समवर्णयन् ।
बाल्ये सखा शङ्करस्य पश्चात्तच्छिष्यतां गतः ॥ ४८ ॥

तत्र चित्सुखयोगीन्द्रः प्रथमस्मृतिमर्हति ।
अनन्तानन्दगिर्याख्यः शाङ्करं विजयं व्यधात् ॥ ४९ ॥

यस्याप्रतिहताज्ञः स शङ्करः परमो गुरुः ।
ब्रह्मानन्दो गाणपतः सर्वज्ञात्ममुनीशितुः ॥ ५० ॥

---

(४९) ' अनन्तानन्दगिरिरहं अप्रतिहताज्ञस्य भगवतः शिष्यः, मम परमगुरोरवतारप्रयोजनं वक्ष्ये "—आनन्दगिरीये श्रीशंकरविजये प्रथमे प्रकरणे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधीतशङ्करकथः चकार चरितं महत् ।
श्रीकामकोटिपीठेशो महादेवो गुरूत्तमः ॥ ५१ ॥

सदा व्यासाचलस्थित्या लब्धव्यासाचलाभिधः ।
तेने श्रीभगवत्पादचरितं हृद्यवाङ्मयम् ॥ ५२ ॥

संक्षिप्तमतनोन्नव्यकालिदासाभिधः सुधीः ।
माधवो यं परे प्राहुर्विद्यारण्यं विपश्चितः ॥ ५३ ॥

स्वग्रन्थे माधवः स्तौति प्राच्यं व्यासाचलेश्वरम् ।
धन्यो व्यासाचलो धन्यास्तत्कृतिज्ञा इति स्फुटम् ॥ ५४ ॥

कविर्गोविन्दनाथोऽपि केरलीयो व्यधात्कृतिम् ।
व्यासाचलेशं यः स्तौति शाङ्करे चरिते स्वके ॥ ५५ ॥

"सर्वागमास्पदं वन्दे व्यासाचलमिमं कविम् ।
बभूव शङ्कराचार्यकीर्तिकल्लोलिनी यतः ॥ ५६ ॥

अत्युन्नतस्य काव्यद्रोः व्यासाचलभुवोऽखिलम् ।
अर्थप्रसूनमादातुं न समर्थः" इति स्फुटम् ॥ ५७ ॥

सदाशिवब्रह्मयोगी गुरूणां रत्नमालिकाम् ।
विश्वाधिकात्मबोधेन्द्रादेशात् चक्रे मनोहराम् ॥ ५८ ॥

आत्मबोधयतीन्द्रस्तद्व्याख्याने सुषमाभिधे ।
शाङ्करं चरितं कृत्स्नं सञ्जग्राह ततस्ततः ॥ ५९ ॥

सारस्वतः सदानन्दः चिद्विलासो यतीश्वरः ।
पातञ्जलेऽथ विजये राममद्रमखीश्वरः ॥ ६० ॥

---

(५४) 'धन्यो व्यासाचलकविस्तत्कृतिज्ञाश्च धन्याः" माधवीये (१-१७)



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रत्नखेटश्रीनिवाससुतश्चूडामणिर्मखी ।
विद्वद्वालो लक्ष्मणाढ्यः सच्चिदानन्दसंश्रयः ॥ ६१ ॥

एते चान्ये च बहवोऽवर्णयन् शांकरीं कथाम् ।
कथेयं विस्तृताऽम्शेन भिद्यते तत्र तत्र ह ॥ ६२ ॥

सार्धे वर्षसहस्रे द्वे गते, श्रद्दधिरे यथा ।
प्राक्तनास्तत्सूक्तिगुप्तौ न तथा वृत्तसंग्रहे ॥ ६३ ॥

व्याख्याक्रमोपपन्नत्वात् भक्तिज्ञानोपकृत्त्वतः ।
सूक्तयो रक्षिताः सम्यग् विनैवाक्षरलोपनम् ॥ ६४ ॥

सत्यालङ्करणं वासोभूषणाभं कथानकम् ।
भिद्यते रुचिवैचित्र्यात् सत्यं तेन न भिद्यते ॥ ६५ ॥

विभिन्नं तत्कथावस्तु चात्र सङ्कल्प्यते मया ।
विभ्रामकेऽपि चरितक्रमवस्तुनिरूपणे ॥ ६६ ॥

अविभ्रमं श्रये मार्गं गुरुवर्यैः प्रदर्शितम् ।
सदाशिवात्मबोधाद्यैर्गतं दीप्तं तदुक्तिभिः ॥ ६७ ॥

कलये भगवत्पादान् कलितैः प्राच्यवाक्सुमैः ।
क्लृप्तैर्यथामतिरुचि ग्रथितैः स्वोक्तितन्तुषु ॥ ६८ ॥

इति श्रीशङ्करविजयमकरन्दे प्रथम आस्वादः समाप्तः ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ द्वितीय आस्वादः ॥

### पूर्वाचार्यकथासंग्रहः ।

यद्बोधवशादहं ममेदं तदिहेत्यादिरुदेति भूरिभेदः ।
तदखण्डमनन्तमद्वितीयं परमानन्दमयं पदं श्रयेयम् ॥ १ ॥

वटपादपमूलपट्टभद्रं स्फुटचिन्मुद्रमुदूढमौनमुद्रम् ।
कलितेन्दुकलं कृपासमुद्रं कलये कञ्चन देशिकं विनिद्रम् ॥ २ ॥

कमलाकुचकुम्भकुङ्कुमश्रीकलितोरःस्थलमप्यरागयोगम् ।
करवै मुरवैरिणं महान्तं करुणार्द्रं हृदये कविं पुराणम् ॥ ३ ॥

गरुडाङ्कगभीरनाभिपद्मोदरभूगह्वरनिष्ठनैष्ठिकाग्रयम् ।
चतुराननमाश्रयामि कामं चतुराम्नायवदावदं सदापि ॥ ४ ॥

कुशिकप्रभवास्त्रशस्त्रपालीप्रशमाचार्यकसिद्धहस्तदण्डम् ।
शमवन्तमरुन्धतीसहायं शरणं यामि वसिष्ठमप्रमेयम् ॥ ५ ॥

---

सङ्कलने मूलं – जगद्गुरुनवरत्नमालास्तवतः (श्लो. १-५, ७-१०) यतिसार्वभौमोपहारतः (६) बालमनोरमातः (११) अप्पयदीक्षितेन्द्रकृतनटराजस्तवतः (१२) नटेशविजयतः (१३-२८) पतञ्जलिविजयतः (२९-६०) पुण्यश्लोकमञ्जरीतः (६१) (१-५) निखिलभूतयोनि नित्यशुद्धचैतन्यस्वभावं निर्धर्मकं परं ब्रह्म अध्यारोपापवादाभ्यां प्रदर्श्यते प्रथमम । निरस्तभेदत्रयं निरुपाधिकं सर्वोत्तरं अवगन्तव्यं वस्तु सर्वानर्थप्रहाणाय प्रथमं शरणीक्रियते । तदेव, सगुणं उपक्रान्तगुरुस्तवानुगुण्येन गुरुराजसंज्ञितं आदिदेशिकं वटपादपमूलरूपसिंहासने मूर्धाभिषिक्तं सम्राट् आश्रितरक्षणे विनिद्रं ध्यायते । सर्वविद्यासंप्रदाय प्रथमाचार्यः स देशिकः । तमुपश्लोक्य प्रातिस्विक्येन वेदान्तविद्यागुरुः भगवान्कमलासखः स्तूयते । तदनु अनुपाधिकब्रह्मविद्यैकप्रवचनो ब्रह्मा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिता पितामहो यस्य जगन्माता पितामही ।
तस्मै चित्रचरित्राय वसिष्ठाय नमो नमः ॥ ६ ॥

बहुमित्रसहक्षितीशपापापहसान्निध्यमरोध्यसत्प्रतापम् ।
महदञ्चितमन्त्रयन्त्रशक्तिं मनसा शक्तिमुपैमि सद्विरक्तिम् ॥ ७ ॥

पवनाकुलकाशलेशकल्पं प्रभवादेव पराहताशराशम् ।
प्रणमामि पराशरं मुनीशं प्रचरद्वैष्णवसंहिताप्रकाशम् ॥ ८ ॥

---

स्तूयते चतुर्वेदीप्रवचनधुरीणः । ततस्तदात्मज आत्मविदामग्रेसरो भगवान्वसिष्ठः स्तूयते । (सुषमा) ॥

(६) यतिसार्वभौमोपहारतः ॥

(७) भगवान्वसिष्ठो रविवंश्येन मित्रसहभूपालेन निमन्त्रितः, तद्द्वेषिणा सूदव्यपदेशिना पुरुषादेन कमपि पुरुषं रहसि व्यापाद्य पक्वे मानुषे पललें परिवेषिते, पुरुषमांसेन पैतृकविधिमसहमानः शशाप मित्रसहम्। मित्रसहश्च प्रतिशापप्रदित्सया गृहीतशापोदकोऽपि सानुनयं अमात्यैर्निवर्तितः शापोदकं स्वचरणयोर्विससर्ज । तेन कल्माषितौ तस्य चरणौ । तदेषं कल्माषपादप्रथः कोऽपि पुरुषादो भूत्वा शप्तुर्वसिष्ठस्य सुतमेव शक्तिं कदाचन हन्तुमुद्यतः। शक्तिना समुपदिष्टसकलभुवन-तत्वः तत्याजास्य वधोद्यमं सहैव विषयवाञ्छया। शापादिव संसारादपि मुमुचे । तादृशः शक्तिः अरोध्यसत्प्रभावः अनिवार्यसाध्वनुभावः । महता वसिष्ठेन अञ्चिता प्रापिता मन्त्रयन्त्रशक्तिरस्य । वसिष्ठोपदिष्ट-श्रीविद्याश्रीचक्रादिपर्युपासनया अस्य सिद्ध्यष्टकं प्रवृद्धम् ॥

(८) अन्तर्वत्नीमात्ममातरमाक्रम्य जिघांसोः कल्माषपादस्य हुंकारेणैव परावृत्तिप्रयोजकतया अस्य पराशर इति नाम। पराहता आशरस्य राक्षसस्याशा अनेन । विष्णुपुराणप्रकाशकोऽयम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निगमानपि योऽन्वशाच्चतुर्धा व्यधिताष्टादशधापि यः पुराणम् ।
स च सात्यवतेय ईप्सितं मे सकलाम्नायशिरोगुरुर्विधत्ताम् ॥ ९ ॥

जननीजठरादिव च्यवन् यो जगतो नाद्रवदात्मविद् विपद्भ्यः ।
अनहन्तमहं तमात्मवन्तं भगवन्तं शुकमाश्रये प्रशान्तम् ॥ १० ॥

## पतञ्जलिचरितम् ।

स जयति दिव्यनटेशो नृत्यति योऽसौ चिदम्बरसभायाम् ।
पाणिन्याद्या मुनयो यस्य च कृपया मनोरथानभजन् ॥ ११ ॥

लोकानाहूय सर्वान् डमरुकनिनदैर्घोरसंसारमग्नान्
दत्वाऽभीतिं दयालुः प्रणतभयहरं कुञ्चितं वामपादम् ।
उद्धृत्येदं विमुक्तेरयनमिति कराद् दर्शयन्प्रत्ययार्थं
बिभ्रद्वह्निं सभायां कलयति नटनं यः स पायाच्छिवो नः ॥

कैलासशैलमधिगत्य कदाचिदारात् नारायणः सविनयं प्रणमन् शिवेन ।
आलिङ्ग्य गाढमभिनन्द्य च भद्रपीठे पार्श्वे विचित्रमणिभासिनि वेशितोऽभूत् ॥

---

(९) अद्वैताचार्यो ब्रह्मसूत्रकर्ता अखण्डमेकमेव स्थितं वेदं चतुर्धा, पुराणमष्टादशधा विभक्तवान् ॥

(१०) मातृगर्भादिव सर्वोपप्लवनिदानात् जगतः संसारात् आत्मयाथात्म्यानवगतिनिबन्धनात् निष्क्रामन्, आत्मानमेवाखिलं पश्यन् प्रमातृत्वाद्यनर्थराशिभ्यः विपद्भ्यः यो नामुह्यत् शोकमोहाद्यभिभूतो नाभवत् तमाश्रये ॥ (सुषमा)

(११) अथ गौडाचार्यगोविन्दभगवत्पादयोः शंकरस्य परमगुरुगुरुभूतयोः चरितं संगृह्णन् तदङ्गतया पतञ्जलिचरितमिह प्रथमं प्रस्तौति । सदाशिवसमारम्भायाः शङ्कराचार्यमध्यमायाः गुरुपरम्पराया अन्योऽयमवतारक्रमः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेशयोः सदसि संलपतोर्मुहूर्तं चित्रार्पिता इव बभुः सनकादिसिद्धाः ।
भालेक्षणोऽब्जनयनेन मिथः प्रजल्प्य प्रस्थाप्य संसदमनेन सह प्रतस्थे ॥ १४ ॥

विश्वातिशायिसुषमोदयवीक्षणीयौ दांपत्यदर्शितमिथःप्रणयानुबन्धौ ।
आसेदतुः स्वयमनीश्वरवादिजुष्टं तौ देवदारुवनमीप्सितदुष्टशिक्षौ ॥ १५ ॥

मञ्जीरचक्रमुखरं मणिपादुकाङ्कपुञ्जीभवन्नखरुचि प्रणिकुञ्च्य पादम् ।
उत्तानतानगतिरुद्धतमुग्धढक्कं तत्तादृशं व्यतत ताण्डवमिन्दुमौलिः ॥ १६ ॥

तावत्तपस्विनरुणीपरिषत्तमेनं अत्यद्भुताकृतिमवेक्षितुमादरेण ।
स्वस्वाश्रमान्निरजिहीत सुवर्णवर्णा सौदामिनीततिरिवाम्बुदचक्रवालात् ॥ १७ ॥

अत्रान्तरे सरयमाश्रमदेशमाप्ता नारायणी नवनवोदितयौवनश्रीः ।
कादंबिनीसविधकन्दलितेव शंपा पर्याकुलं परमहंसकुलं वितेने ॥ १८ ॥

रामां निभाव्य धुरि योगिजनश्रियं तां मोहानिलव्यतिकरास्तविवेकदीपः ।
स्नानं जपं हवनमध्ययनं पुराणं शास्त्रं व्रतं च सकलं विजहौ किमन्यत् ॥१९॥

तां सुन्दरीं प्रति तपस्विजनेऽनुरक्ते तं सुन्दरं प्रति तदीयवधूजने च ।
जातक्रुधः कतिपये जरठास्तदानीं उद्दिश्य शंभुमभिचारमुपाक्रमन्त ॥ २० ॥

विश्वातिशायिनि जने विहितोऽभिचारो न व्यर्थ एव ननु कर्तुरनर्थहेतुः ।
उद्दिश्य भानुमुपलः प्रहितः किलोर्ध्वं क्षेप्तुः शिरो विदलयेत्क्षणतो निपत्य ॥२१॥

तद्देवदारुवनतापसबृन्दमेवं मूर्च्छालमाकलयतो मदनान्तकस्य ।
वज्रारवव्यथितचातकमण्डलस्य धारेव मंक्षु जलदस्य दयाऽऽविरासीत् ॥ २२ ॥

कर्पूरगौरतनुरिन्दुकलावतंसः स्मेराननः शिखरिराजसुतासमेतः ।
आलोलपिङ्गलजटापटलोऽथ तेषां आनन्दताण्डवमदर्शयदन्तकारिः ॥ २३ ॥

पश्चाज्जगत्पतिमिमं प्रतिबुध्य पश्चात्तापात्प्रणम्य मुहुरेत्य शिवप्रसादम् ।
अन्तर्हिते सति सहांबुजलोचनेऽस्मिन् सर्वे तदादि समुपासत साम्बमेनम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनन्दनाट्यमनुभूतमिदं कदाचित् दुग्धोदधौ स्मृतवता दनुजान्तकेन ।
हर्षप्रकर्षभरितेन महाभरार्तः पृच्छन्नभाणि फणिराट् किल भारहेतुम् ॥ २५ ॥

पूर्वं मया यदनुभूतमभूत्पुरारेः नृत्तं तदेतदनुसन्दधतोऽधुना मे ।
आनन्दसिन्धुलहरीमतिवेलमन्तः आसेदुषो वहनतोऽजनि तेऽतिभारः ॥ २६ ॥

आकर्ण्य मद्गिरमिमामहिराज तेऽक्षीण्यानन्दबाष्पभरितान्यधुना भवन्तम् ।
शंसन्ति शंभुनटनेक्षणसाभिलाषं धन्योऽसि सेत्स्यति च तेऽभिमतं तदेतत् ॥

मामाश्रितस्य फणिनायक ते महान्तं कालं मयाद्य कथितं परमं रहस्यम् ।
तद्गच्छ तावकसुतोऽस्तु महीयतलं त्वं द्रक्ष्यसि त्रिनयनं तपसे यतस्व ॥ २८ ॥

पणीति कश्चिन्मुनिरास पूर्वं स पाणिनं नाम कुमारमाप ।
स्वतुल्यनाम्ना तनयेन सोऽपि दाक्षीमुदूढां दृढमभ्यनन्दत् ॥ २९ ॥

स पाणिनो दक्षसुवा पुरन्ध्र्या रिपुः पुराणामुमयेव रेमे ।
काले मुनिः स्कन्द इव प्रसूतो हर्षं तयोः पाणिनिरभ्यकर्षीत् ॥ ३० ॥

तपोभिराराधयतः कठोरैस्तस्य प्रसन्नस्तरुणेन्दुचूडः ।
अवोषयद्दण्डविघट्टनेन चण्डं करस्थं डमरुं पुरस्तात् ॥ ३१ ॥

शब्दावलेर्व्याकरणं चिकीर्षोः तदा मुनेः पाणिनसंभवस्य ।
मृडस्य चण्डा डमरुप्रणादाः शास्त्रादिसूत्राणि चतुर्दशासन् ॥ ३२ ॥

इतीश्वरानुग्रहतो निबध्नन् सूत्राणि स व्याकृत शब्दजालम् ।
सुष्ठु प्रयोगं कथयन्ति यस्य स्वर्लोकसोपानपरंपरेति ॥ ३३ ॥

कात्यायनः कर्कशया प्रसाद्य तपस्यया चन्द्रकलावतंसम् ।
तस्याथ सूत्रेषु पदार्थबोधप्रवर्तकं वार्तिकमावबन्ध ॥ ३४ ॥

भोगीन्द्र तेषां भुवि वार्तिकानां अशेषविद्वज्जनदुर्ग्रहाणाम् ।
भाष्यं महत्कुर्विति भक्तरक्षी नियोक्ष्यते त्वां किल नीलकण्ठः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा नियोगात्तरुणेन्दुमौलेः धरातले त्वं विहितावतारः ।
चिदम्बरक्षेत्रगतः पवित्रं नेत्रोत्सवं द्रक्ष्यसि नृत्तमैशम् ॥ ३६ ॥

इति मुरमथनोक्त्या मोदमानः फणीन्द्रः त्रिपुरहरनियोगं दीर्घकालादवाप्य ।
तदपि परिदिदृक्षुस्ताण्डवं चन्द्रमौलेः अवतरितुमनन्यामंशतश्चाशशंसे ॥ ३७ ॥

भूतलेऽथ जननोचितमार्षं वंशमीक्षितुमवेक्षदहीश्यः ।
जन्तुविस्मृतपरस्परवैरं तापसाश्रमवनान्तमनन्तः ॥ ३८ ॥

तत्र क्वापि ददृशे मुनिकन्या गोणिकेति गुणसिन्धुरनेन ।
या हि यापयति पुत्रनिमित्तं दारुणेन तपसा दिवसानि ॥ ३९ ॥

दातुमर्घ्यमहिमद्युतयेऽम्भः पूतमञ्जलिपुटे विनिधाय ।
सा निमील्य नयने भगवन्तं भास्करं हृदि तदा परिदध्यौ ॥ ४० ॥

प्राङ्गमर्पय सुतं मम भास्वन् अन्तरित्थमभिसन्धिजुषोऽस्याः ।
पन्नगाधिपतिरर्कनियुक्तः प्राविशज्जनितुमञ्जलिगर्भम् ॥ ४१ ॥

संभृतार्घ्यजलमञ्जलिमुच्चैः सा सहस्रकिरणं प्रति देवम् ।
यावदुत्क्षिपति तावदमुष्मात् तापसाकृतिरहिः स पपात ॥ ४२ ॥

पुत्र एष मम पुण्यविपाकात्प्रादुरास किल पावकतेजाः ।
इत्युपेत्य मुदिता सहसा सा मूर्ध्नि तं मुनिकुमारमजिघ्रत् ॥ ४३ ॥

तं तदाऽभिवदितुं प्रणतं प्राङ् नाम तस्य जननी विततान ।
यत्पतन्नभवदञ्जलितोऽसौ तत्पतञ्जलिरिति प्रथमानम् ॥ ४४ ॥

श्रावितश्च स तदाऽभिवदन्त्या नाम तत्प्रथममेव जनन्या ।
चिन्तितस्त्वदुपकण्ठमुपेयां इत्युदीर्य तपसे चलितश्च ॥ ४५ ॥

तस्यातिदुष्करमवेक्ष्य तपः प्रसन्नो दातुं वरं तदुचितं दययाऽथ तस्मै ।
कैलासगौरमधिरुह्य वृषं महान्तं अर्धेन्दुमौलिरुमया सममाविरासीत् ॥

स्तनयोः पुलकोद्गमैस्तथा हृदि भक्त्या प्रमदाश्रुणा दृशोः ।
वचसि स्तुतिभिश्च संगतं परितुष्यन् प्रभुरब्रवीदिदम् ॥ ४७ ॥

तपसा तव शेष तोषितो वितरिष्यन्वरमागतोऽस्मि ते ।
अचिरेण वृणीष्व तं यतो वपुरीदृक् तव वारितं सुखात् ॥ ४८ ॥

चरितं निजमादितः स्मरन् अथ शेषेति निमन्त्रितो मुनिः ।
पदवार्तिकभाष्यनिर्मितौ प्रथमं पाटवमभ्ययाचत ॥ ४९ ॥

अथ तस्य जगत्त्रयप्रभोर्नटनालोकनयोग्यतां पुनः ।
मुनिमर्थयमानमात्मनः स तथाऽस्त्वित्यवदन्मुदा मृडः ॥ ५० ॥

अयि वत्स चिदंबराभिधं नगरं त्वं व्रज काननाध्वना ।
तव तत्र नटेयमीक्षितुं दययेत्यन्तरधादुदीर्य सः ॥ ५१ ॥

इति तस्य गिरा चिदंबरं नगरं प्रास्थित नाट्यलिप्सया ।
मुदितः स मुनिर्मुमुक्षया भवतप्तो निकटं गुरोरिव ॥ ५२ ॥

वासवादिभिरथामरैस्तदा चोदितेन भुवि विश्वकर्मणा ।
ताण्डवाय गिरिशस्य निर्मिता तत्र हाटकमयी सभा बभौ ॥ ५३ ॥

शङ्करोऽथ चलमौलिजाह्नवीवारिपूरणरणत्करोटिकम् ।
दक्षिणेतरकरावलम्बितश्रीशपाणि वृषभादवातरत् ॥ ५४ ॥

व्याघ्रपादमृषिमीरितस्तत्रं तं पतञ्जलिमपि स्तवोन्मुखम् ।
वीक्ष्य शीतलदृशा शिवोऽवदन्नर्तनं मम निरीक्ष्यतामिति ॥ ५५ ॥

वीक्षणोचितममांसचक्षुषा नर्तनोत्सवमवेक्षितुं निजम् ।
शंभुना सकलदेहिनां तदा दिव्यमक्षि दिदिशे दयालुना ॥ ५६ ॥

शांबरीं यवनिकामथाक्षिपन् स प्रपञ्चमयनर्तनं शिवः ।
द्रागदर्शयत गोणिकासुतं व्याघ्रपादमितरानृषीनपि ॥ ५७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन ते स्वयमिदं जगन्मृषा जानते स्म परमार्थतः पुनः ।
ब्रह्म तत्परमनादि सच्चिदानन्दलक्षणमनन्तमद्वयम् ॥ ५८ ॥

नृत्तं तत्फणिपतये स दर्शयित्वा प्राहेदं प्रणयकिरा गिरा गिरीशः ।
त्वं कृत्वा भुवि पदशास्त्रवार्तिकानां भाष्यं तद्विवृणु ततो दिवं व्रजेति ॥

आज्ञाप्यैवं फणिनमपरान् सोऽनुगृह्याक्षिपातैः
गौर्या साकं विधिहरिगणैश्चापि शंभुस्तिरोऽभूत् ।
हर्षाश्चर्यस्तिमितहृदयौ व्याघ्रपाद्गौणिकेयौ
अस्तूयेतामृषिभिरनटद् यत्कृते चन्द्रचूडः ॥ ६० ॥

मेधावी निगमपटुर्बहुश्रुतो वा येनतैं न कलयिता किलात्मतत्त्वम् ।
तन्नेत्रं तमसि च दिव्यदृष्टिदायि श्रेयो नः प्रदिशतु धाम देशिकाख्यम् ॥

इति श्रीशङ्करविजयमकरन्दे द्वितीय आस्वादः समाप्तः ॥

---

## ॥ तृतीय आस्वादः ॥

---

### गौडपादचरितम्

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

कतकुलतिलकेन कल्पितानामथ मुनिना पदशास्त्रवार्तिकानाम् ।
जगदुपकृतये चकार भाष्यं महदचिरेण पतञ्जलिर्महात्मा ॥ २ ॥

---

संकलने मूलम् —पतञ्जलिविजयतः (२-२७, ३६-६२) शारीरमीमांसाभाष्यवार्तिकतः ३१ जगद्गुरुरत्नमालास्तवतः (३२, ३५) जगद्गुरुपारंपर्यस्तुतितः (३३-६६) यतिसार्वभौमोपहारतः (३४, ६५) प्राचीनशङ्करविजयतः ६३.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमृषिमनुययुस्तदीयभाष्यं पिपठिषवः किल पण्डिताः सहस्रम् ।
गुरुपरिचरणादृते कुतो वा भवति परं सुलभा जनेन विद्या ॥ ३ ॥

तदनु यवनिकां वितत्य गूढं वपुरनया च पतञ्जलिर्विधाय ।
उपविशत बहिस्तिरस्करिण्याः पठत कृतिं च ममेति तानुवाच ॥ ४ ॥

मम स तु न भवेन्मनःप्रियो मां य इह तिरस्करिणीमुदस्य पश्येत् ।
इति पुनरभिधाय पाठनार्थं फणिपतिरूपमृषिस्समाललम्बे ॥ ५ ॥

अथ गुरुचरणेन शान्तिमन्त्रान् प्रथममजापिषुरुत्तरं च पाठात् ।
अहरहरखिला बुधाः, कृती स्याद्गुरुवचसि स्थित एव हीष्टसिद्ध्या ॥

किमपि विघटयन् किमप्यनुज्झन् किमपि समुज्ज्वलयंश्च वार्तिकेषु ।
नृप इव भटमण्डलेषु भाष्ये व्यहरत राज्य इवास्य वाङ्निगुम्फः ॥ ७ ॥

अधिफणिकृति तावदेव पेठुः विलसति यावति वासरूपसूत्रम् ।
विनयभरजुषो विचक्षणास्ते बहुतपसां हि भवेत्तदन्तपाठः ॥ ८ ॥

प्रतिपुरुषमिहाननैः कियद्भिः युगपदयं वदतीति विस्मयेन ।
अपहृतमनसोऽथ तेऽपनिन्युः सपदि तिरस्करिणीं तदीक्षणाय ॥ ९ ॥

विवृतफणसहस्रमुग्रदंष्ट्रं क्षितितलकुण्डलितार्धभोगभीमम् ।
प्रसृतपरिहृतोभयाग्रजिह्वं तरलदृशं तमथ व्यलोकयंस्ते ॥ १० ॥

दधुरथ सदृशीस्तनूः स्मरेण त्रिपुररिपोरलकाक्षिलक्षितेन ।
अपि दश विदुषां शतानि पुंसां गुरुवचनव्यतिलङ्घनं ह्यनर्थः ॥ ११ ॥

फणिपतिरभिवीक्ष्य तादृशांस्तान् कथमिदमित्यनुचिन्त्य यावदास्त ।
परिसरमुपसृत्य तावदेकः प्रणमितमौलिरिदं भयादवादीत् ॥ १२ ॥

फणिवर भगवन् प्रसीद मह्यं बहिरगमं जलमोचनाय यावत् ।
विधुतयवनिकाः कृतापराधाः बत मम तावदिति स्थिताः सतीर्थ्याः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति गदितगिरं शशाप कोपात् यदविहितोत्तरशान्तिमन्त्रपाठः ।
बहिरसि गतवान् पठन्मदीयां कृतिमपि तद्भव राक्षसोऽञ्जसेति ॥ १४ ॥

प्रणिपतनगुणस्तवप्रबन्धैः फणिपतिरस्य कथञ्चन प्रसन्नः ।
धृतजटिलमनुष्यमूर्तिरित्थं तमवददापदमुत्क्षिपन्निवोक्त्या ॥ १५ ॥

मा भज वत्स विषादं मत्वा कर्माणि जगति चित्राणि ।
कथमिव मे त्वयि कोपः कथमिव शापश्च तादृशोऽपरथा ॥ १६ ॥

निष्ठायां किं रूपं पचेरिति त्वं बुधान्पृच्छ ।
पक्वमिति वदति यस्तं मम कृतिमध्याप्य मुच्यसे शापात् ॥ १७ ॥

व्याकरणमहाभाष्यं मत्कृतमखिलं मम प्रसादात्ते ।
स्फुरतु यथेष्टं याहीत्युक्त्वा तमृषिस्तिरोदधे सहसा ॥ १८ ॥

गोनर्दाख्यं देशं प्राप्य नमस्कृत्य गोणिकां जननीम् ।
तस्यां त्रिदिवगतायां तस्थौ शेषः स्वयं स मुनिः ॥ १९ ॥

अथ स पतञ्जलिशिष्यो रक्षो भूत्वाऽधिरुह्य वटमेकम् ।
पचिरूपं निष्ठायां पृच्छन् पचितमिति वादिनोऽखादीत् ॥ २० ॥

अथ बहुषु गतेषु वत्सरेषु द्विजमुपकण्ठमुपेयिवांसमेकम् ।
पुनरपि तदपृच्छदेव रक्षो झटिति स पक्वमिति स्फुटं जगाद ॥ २१ ॥

द्विजगिरमवकर्ण्य कर्णरम्यामवतरति स्म वटात्तदाशु रक्षः ।
अयमुदयति शापमोक्षकालो मम गुरुणोक्त इति प्रहृष्यदन्तः ॥ २२ ॥

द्विजवर वद को भवान् कुतस्त्यः तव किमिहागमने प्रयोजनं वा ।
कृतमतिरसि पाणिनीयशास्त्रे यदि च रुचिः पठ मत् फणीन्द्रभाष्यम् ॥

इति कथयति रक्षसि प्रहृष्यन् इदमगदीदहमस्मि चन्द्रशर्मा ।
उपगम इह मेऽयमुज्जयिन्याः पठितुमहीश्वरभाष्यमन्तिके ते ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति गदितव्रते द्विजाय तस्मै फणिपतिभाष्यमशेषमाचचक्षे ।
शुचिरनिशमसंविशन्ननश्नन् तदपि च मासयुगेन सोऽध्यगीष्ट ॥ २५ ॥

प्रतिदिवसमसौ पपाठ यावद् भुजगकृतौ किल रक्षसः समीपे ।
अपचितवटपत्रजालगर्भे नखशिखरेण दृढं लिलेख तावत् ॥ २६ ॥

अथ पृथुलशिरोणुमात्रकण्ठं चलदतिशुष्कपिचण्डमायतोरु ।
ह्रसिमभृदकृशांघ्रिपाणि रक्षोवपुरपहाय स दिव्यमूर्तिरासीत् ॥ २७ ॥

व्रज सुखमवनौ कुरु प्रचारं भुजगकृतेरिति तं भुजङ्गशिष्यः ।*
दिवमगमदुदीर्य हैमशैले शुकमुनिराजमथोपतस्थिवान् सः ॥ २८ ॥

तुरीयाश्रममासाद्य नाम्ना गौडश्च जन्मना ।
गौडपादाह्वयोऽज्ञेयविशिष्टस्वाभिधानकः ॥ २९ ॥

ब्रह्मविद्यामधिजगे शुकाद् ब्रह्मविदुत्तमात् ।
अध्यतिष्ठच्च बदरीं सुशिष्यानुजिघृक्षया ॥ ३० ॥

परिव्राजामाद्याः परमगुरवः शङ्करयतेः
प्रणेतारः प्रौढं गहनतरमाण्डूक्यविवृतेः ।
परानन्दाभोगे पटुतरहृदो गौडचरणाः
पुरस्तान्नः स्फूर्तिं विदधतु चिदानन्दमधुराम् ॥ ३१ ॥

---

(३१) अभिनवद्रविडाचार्याभिधबालकृष्णानन्दसरस्वती रचित-शारीरमीमांसाभाष्यवार्तिकतः । "नारायणं पद्मभुवं वसिष्ठं—इति संप्रदायवित्कारिकारीत्या ब्रह्मविद्यायां श्रीशुकशिष्याः परिव्राजामाद्याः एतद्युगे प्रथमयतयः, गौडचरणाः कुरुक्षेत्रदेशगतहिरावतीनदीतीरभव-गौडजातिश्रेष्ठाः देशविशेषभवजातिनाम्नैव प्रसिद्धाः । द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेन आधुनिकैर्जनैः अपरिज्ञातविशेषाभिधानाः सामान्य-नाम्नैव लोके विख्याताः ॥" इति तत्रैव तदीये विवरणे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभियुञ्जदयार्च्यपूज्यपादान् अपलून्यादिनिषाकसिद्धनेतॄन् ।
अथ गौडपदान् फणीशभाष्यप्रथमाचार्यकपण्डितान् प्रपद्ये ॥ ३२ ॥

जीवन्मुक्तप्रथमं दुर्वादिव्रातदुर्मदापहरम् ।
सेवे गौडपदं तं प्रवरं विद्यावदातधिषणानाम् ॥ ३३ ॥

चरणं गौडपादस्य शरणं करवाण्यहम् ।
श्रुत्यन्तसारसर्वस्वनिष्यन्दा यस्य सूक्तयः ॥ ३४ ॥

## गोविन्दभगवत्पादचरितम् ।

हरितल्पहरांघ्रिनूपुरक्ष्माधरसौमित्रिबलात्रिपुत्रलक्ष्मा ।
जयतादुपरेवमात्तधामा जयगोविन्दमुनिः स चन्द्रनामा ॥ ३५ ॥

---

(३२) विदितवेदितव्याः परापरविदः परमाचार्याः गौडपादाः। शुकर्षिप्रसादसमासादित तुरीयाश्रमा एते आत्मयाथात्म्यमनुसन्दधानाः, सकाश एव क्वचन दुर्गे समाकलितसंस्थानान् (अपलून्यादिनिषाकसिद्धनेतारः) अपलून्य-दामीशप्रभृतीन् अपरान्त्ययोगिनः तक्षशिलाधीशशाक्यप्रावृतिमुखान् अध्यात्मविद्याध्यापनेन सुमार्गं नयन्तः, (अभियुञ्जदयार्च्यपूज्यपादाः) अनुगतशौद्धोदनिकदध्वनः अयार्च्यप्रमुखान् विवादाय आत्मानमभियुञ्जतः हिमालयशृङ्गवृत्तिबुद्धसिद्धसभास्थान् वादे जित्वा प्रविसृष्टदुर्मतदुरभिनिवेशान् कृत्वा तेषां प्रत्यहमुपदिश्यमानपरमाद्वैतविद्यासंप्रदायाः चिरं सुखमूषुरिति हरिमिश्रीयगौडपदोल्लासादिषु निरूप्यमाणा कथाऽत्रानुसन्धेया (सुषमातः)। गौडपादानाधिकृत्य आनन्दगिर्याचार्याः अलातशान्तिप्रकरणविवरणे "ज्ञानेनाकाशकल्पेने"ति मङ्गलश्लोकविवरणावसरे प्राहुः - "आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत। ततो भगवानतिप्रसन्नः तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमेश्वरस्येति भावः" इति। एतेनैते शुकाचार्यशिष्याः, तपोबलेन साक्षात् भगवतोऽपि विद्यां प्रापुरिति गम्यते॥

(३५) विष्णुशय्या, शिवचरणमञ्जीरः, भूमण्डलीवहः, लक्ष्मणः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नखलिखितपतञ्जलिप्रबन्धं वटदलजालकमुत्तरीयबद्धम् ।
शिरसि दधदभीष्टलाभहृष्टः स निववृते वनवर्त्मना मनीषी ॥ ३६ ॥

तदनु पथि चलन् स चन्द्रशर्मा सरितमवैक्षत कामपि प्रसन्नाम् ।
विकचकमलगर्भरेणुगन्धी श्रममपहन्ति नृणां यदूर्मिवातः ॥ ३७ ॥

अथ स बुधवरः श्रमेण तस्याः किमपि निपीय जलं तटद्रुमूले ।
दलचयमुपधाय वस्त्रबद्धं लिखितपतञ्जलिवाङ्मयं निदद्रौ ॥ ३८ ॥

यावन्निद्रावशमयमगात् तावदस्योपधानं
वत्सः कश्चिद्वटदलचयग्रासलोलश्चकर्ष ।
उत्थायाथ ग्रसनचटुलादाक्षिपद्वत्सवक्त्रात्
तदन्तालिक्षतलिपि हठात्केषुचित्तद्दलेषु ॥ ३९ ॥

बुधं ततः सिन्धुतटे प्रतिष्ठितं बुभुक्षितं काचिदवेत्य कन्यका ।
नवं वहन्ती नवनीतमाययौ करेण पीयूषमिवादिमोहिनी ॥ ४० ॥

ततः सपात्रं नवनीतमङ्गना धरातले तस्य निधाय पार्श्वतः ।
प्रणम्य बद्धाञ्जलिरित्थमर्थयांबभूव भक्तिप्रतिपन्नया गिरा ॥ ४१ ॥

बुधेन्द्र पूर्वं बहवस्तपोधनाः फलाम्बुदर्भाजिनबर्हिरर्पणैः ।
मया कुमार्या परितोषिता भृशं प्रसादसर्वस्वमिदं वचोऽवदन् ॥ ४२ ॥

इहागमिष्यत्यखिलं पतञ्जलेरधीत्य भाष्यं किल कश्चन द्विजः ।
तदीयशिष्यादचिरेण रक्षसः प्रणम्य तं पूजय पद्मलोचने ॥ ४३ ॥

---

बलरामः, पतञ्जलिरिति पूर्वकालिकाः स्मरणीया उपाधयोऽस्य चन्द्रशर्मणः । पूर्वाश्रमे चन्द्रनामा, इदानीं तुरीयाश्रमे जयगोविन्दमुनिः श्रीगोविन्दभगवत्पादापरपर्यायः । उपरेवं – रेवातीरे कृताश्रमः । पतञ्जलिरेव स्वकीयशापप्राप्तरक्षोभावं गौडपादं शापाद्विमोक्तुं चन्द्रशर्मा भूत्वा गौडान्तिकं जगामेति भावः (सुषमा) ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रचारयिष्यन् कृतिमात्मनः स्वयं पतञ्जलिस्तद्वपुषाऽभवद्भुवि ।
स पूजितस्त्वां परिणीय कन्यकां गरीयसि श्रेयसि वर्तयिष्यति ॥ ४४ ॥

इतीरितां योगिजनेन शृण्वती गिरं द्विजं तं मृगयेऽधुनाप्यहम् ।
स चेद्भवान् जन्म कृतार्थमेव मे त्वयि प्रसन्ने किमु दुर्लभं मया ॥

गिरां प्रपञ्चैरथवा किमीदृशैः पुनाति ते दर्शनमेव देहिनः ।
तथापि भोक्तुं नवनीतमाहृतं मया, प्रसादं कुरु दृश्यसे श्रमी ॥ ४६ ॥

चिरादिति प्रार्थयमानया तया समाधिदृष्टागमिपूर्वचेष्टितः ।
कृतस्मितस्तन्नवनीतमर्पितं यथेष्टमश्नन् स जहौ परिश्रमम् ॥ ४७ ॥

तदिंगितैरेव विजानती द्विजं पतञ्जलेराकृतिभेदमागतम् ।
तमब्रवीदुद्वह मां कृपानिधे तुरीयवर्णप्रभवामपि त्विति ॥ ४८ ॥

जगाद तामेवमुदीरितो द्विजो मनोरथो मानिनि ते फलोन्मुखः ।
उदूह्य वर्णत्रयकन्यका यतो विवोढुमीहेऽन्तिमवर्णजामिति ॥ ४९ ॥

तदुक्तिमाकर्ण्य गृहं निनाय सा तमुल्लसद्यौवनमिन्दुसुन्दरम् ।
तया ततस्तज्जननीवितीर्णया समं पुरीमुज्जयिनीं जगाम सः ॥ ५० ॥

वटद्रुपर्णीस्थितवर्णमेलनादथैष भाष्यं निखिलं पतञ्जलेः ।
लिलेख वत्सक्षतदुर्ग्रहाक्षरे स्थले क्वचित्कुण्डलनामकल्पयत् ॥ ५१ ॥

निजे गृहे तत्र निवेश्य पाठयन् तदुज्जयिन्यां फणिभाष्यमाश्रवान् ।
निनाय कालं नियमेन स द्विजः प्रियासु तुल्यं चतसृष्वपि स्थितः ॥

---

(५०) चन्द्रशर्माणं शुश्रूषमाणायाः कन्यकाया मुखादवगतवृत्तान्ताः, तद्देशस्थनृपमन्त्री द्विजः, तद्देशपालको नृपः, राजाश्रितो वैश्यश्च कन्यकां स्वीयां स्वीयां दत्तवन्तः, ततः अस्याः कन्याया माता एनां चन्द्राय ददौ इति कथाऽत्रानुसन्धेया ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिनेषु ताः सत्पुरुषोदयोचितेष्वराल्केश्यो विदुषां शिखामणेः ।
क्रमात्कुमारान् कमनीयतेजसो मणीनिवासोषत सिन्धुशक्तयः ॥ ५३ ॥

विदधत्क्रियाः शुभतराः परस्परं प्रविभिन्नवर्णविलसत्परिग्रहः ।
निगमश्चतुर्भिरिव साधुभिः स्वरैः तनयैरथ द्विजवरो व्यरोचत ॥ ५४ ॥

पठिते पतञ्जलिनिबन्धने द्विजः कृतदारकर्मणि च पुत्रमण्डले ।
शुकशिष्यगौडपदगुर्वनुग्रहात् चरमाश्रमं सुरनदीं च शिश्रिये ॥ ५५ ॥

चतुराननेन विधिनेव मुञ्चता समधिष्ठितं जगदशेषमात्मनि ।
भजतामुना परमहंससेव्यतां अथ विश्वनाथपुरमाददे श्रियम् ॥ ५६ ॥

श्रवणे किमप्युपदिशन्विभूतिमप्यलिकेऽर्पयन्नुरसि चास्थिमालिकाम् ।
हरते स यत्र मणिकर्णिकातटे जटिलो यदस्ति जगतीह देहिनाम् ॥

स तु विश्वनाथपुरमावसन् यतिः समुपेयुषां सदसती हि वस्तुनी ।
वचनेन चंचुकलनेन विष्टपे विविवेच हंस इव दुग्धपाथसी ॥ ५८ ॥

उपसंहृतेन विषयानुधावनात् परमे स्व एव परिनिष्ठितेन च ।
समवृत्तिना स हृदयेन पप्रथे सुखदुःखयोः सखिसपत्नयोरपि ॥ ५९ ॥

स्वपनप्रपञ्चसदृशं जगत्त्रयं विदुषा मृषा मरुमरीचवारिव ।
अमुना स्वरूपमवशेषितं धिया परमात्मबोधसुखमात्रलक्षणम् ॥ ६० ॥

सुरसिन्धुरोधसि गिरीशसन्निधावतिनीय तत्र कियतोऽप्यनेहसः ।
विरहासहैरनुगतः स योगिभिः परिपावनं बदरिकाश्रमं ययौ ॥ ६१ ॥

ब्रह्माद्वैतं पश्यताशेषविश्वं गोविन्दस्वामीति गीतेन लोके ।
पुण्यक्षेत्रे तत्र नारायणीये कांश्चित्कालानाश्रमे तेन तस्थे ॥ ६२ ॥

---

(५७) हरते - अपहरति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सततं निगदन् रसेन योऽसौ जय गोविन्द जयेति सूक्तिमेकाम् ।
श्रितमौनमभूद्यदन्यवादे जयगोविन्दमुनिं तदाहुरेनम् ॥ ६३ ॥

व्यासादेशाच्छङ्करार्यमुपदेष्टुं त्रयीशिरः ।
प्रतीक्षमाणो गोविन्दो रेवातीरमुपागमत् ॥ ६४ ॥

वन्दे गोविन्दपादाब्जचिन्तासन्तुष्टचेतसम् ।
गोविन्दभगवत्पूज्यपादमादीनवच्छिदम् ॥ ६५ ॥

रेवातीरनिवासी पविरज्ञानाद्रिभेदने सुमहान् ।
गोविन्दार्यो दद्यात् श्रीविद्यां तारिणीं भवाम्भोधेः ॥ ६६ ॥

इति श्रीशङ्करविजयमकरन्दे तृतीय आस्वादः समाप्तः ॥

## ॥ चतुर्थ आस्वादः ॥

श्रीभगवत्पादावतारहेतुः ।

सदा बालरूपापि विघ्नाद्रिहन्त्री महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे विधत्तां श्रियं कापि कल्याणमूर्तिः ॥

(६५) आदीनवं शोकं, दैन्यं, विघ्नं, दुरदृष्टं वा, छिनत्तीति तं आदीनवच्छिदम् ॥

संकलने मूलम् — सुब्रह्मण्यभुजङ्गतः १, प्रपञ्चसारतः २, भगवद्गीताशांकरभाष्यतः ३-४, जगद्गुरुरत्नमालास्तवतः १०-१४, शिवरहस्यतः (अं ९-अ १६) १६-२५, कूर्मपुराणतः (अ. २७) २७-३०, भविष्योत्तरपुराणतः (अ. ३६) ३१, लिङ्गपुराणतः (अ. ४०) ३२-३३, मार्कण्डेयसंहितातः (ख-७२, परि ७) ३४, वायुपुराणतः ३५, भगवत्पादसप्ततेः ३७, माधवीयशंकरविजयतः ३७,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुस्तकजपवटहस्ते वरदाभयचिह्नचारुबाहुलते ।
कर्पूरामलदेहे वागीश्वरि शोधयाशु मम चेतः ॥ २ ॥

"नारायणः परोऽव्यक्तात् अण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ ३ ॥

स भगवान् सृष्ट्वेदं जगत्, तस्य च स्थितिं चिकीर्षुः, मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्, प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम् । प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिः आश्रमिभिश्च श्रेयोऽर्थिभिः अनुष्ठीयमानो दीर्घेण कालेन। अनुष्ठातॄणां कामोद्भवात् हीयमानविवेकविज्ञानहेतुकेन अधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे, जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुः, भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव। ब्राह्मणत्वस्य हि रक्षणे रक्षितः स्याद् वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमभेदानाम्। स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नः त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य, अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्, स्वमायया देहवानिव, जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते"॥ ४ ॥

इति शङ्करोऽत्र गीताभाष्यारंभेऽवतारिकां तेने ।
भगवज्जनिरिह भूमौ धर्मस्थित्यर्थिका कृपात इति ॥ ५ ॥

धर्मग्लानिमधर्मोत्थानं चालोक्य भगवतो जन्म ।
ज्ञानबलादिकभगवच्छक्त्यंशाविष्कृतावतारेण ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आतुरमथवा क्षातं कुरुते बलमुद्धतं यदा ग्लानिम् ।
धर्मस्य, तदा बलवान् वीरश्चाजायते भगवान् ॥ ७ ॥

ज्ञानलवदुर्विदग्धा अज्ञानां बुद्धिमोहकाः पटवः ।
मतिभेदजननदक्षा ज्ञानाचार्या यदा जाताः ॥ ८ ॥

वैदिकधर्मग्लानिस्तदा भवेद्बुद्धिविप्लवतः ।
अपनयति मोहमीशो देशिकताभव्यनिजमूर्त्या ॥ ९ ॥

कलिना बलिनाऽखिले खिलेऽपि स्खलिते श्रौतपथेऽपथे प्रवृद्धे ।
जपहोमतपस्सु नामशेषेष्वपि यातेषु सुभाषितेषु शोषम् ॥ १० ॥

जिनबुद्धकपालिशक्तिवह्नीन्दिनसेवासु समन्ततः श्रितासु ।
शिथिले द्विजवेदवेदिवादे प्रथिते चाद्वयवेदबाह्यमोदे ॥ ११ ॥

जगदीक्षणविह्वलामृतान्धोनिगदव्यक्तकृपारसानुबन्धम् ।
प्रणिदिश्य गुहं पुरैव गन्तुं प्रणिबन्धुं च मखान् द्विषश्च यन्तुम् ॥

अवतार्य सुरान् परांश्च पूर्वं विधिविष्णिवन्द्रमुखान् विनोदपूर्वम् ।
स्वयमप्यवतीर्य सुत्युरार्याकमितुः श्रीशिवशर्मणो विचार्य ॥ १३ ॥

उदभूत्सदने निटालदृग्यो मदभाजां सुधियां प्रमाथयोग्ये ।
शिशुरर्पयतान्मुमुक्षुभाग्यं स शुभं शंकरदेशिकः सुभोग्यम् ॥ १४ ॥

कदाचिच्छिवया पृष्टस्त्रिकालज्ञस्त्रिलोचनः ।
भविष्यच्छङ्करोत्पत्तिमवदत्संग्रहेण ह ।
शैवे रहस्ये गदितं स्मरामोऽत्र सुसंगतम् ॥ १५ ॥

---

११. अद्वयः उपरोधदुःखाद्यसंभिन्नो वेदबाह्यमोदः बौद्धाद्यवैदिकजनानन्दः तस्मिन् । १३. सुत्युः सुतमात्मन इच्छतः, सुतार्थं तपस्यतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पापैककर्मनिरतान्विरतान् सर्वकर्मसु ।
वर्णाश्रमपरिभ्रष्टान् वर्णप्रस्रवणान् जनान् ॥ १६ ॥

कल्यब्धौ मज्जमानांस्तान् दृष्ट्वाऽनुक्रोशतोऽम्बिके ।
मदंशजातं देवेशि कलावपि तपोधनम् ॥ १७ ॥

केरलेषु तदा विप्रं जनयामि महेश्वरि ।
तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे ॥ १८ ॥

कल्यादिमे महादेवि सहस्रद्वितयात्परम् ।
सारस्वतास्तथा गौडा मिश्राः कर्णाजिना द्विजाः ॥ १९ ॥

आममीनाशना देवि ह्यार्यावर्तानुवासिनः ।
औत्तरा विन्ध्यनिलया भविष्यन्ति महीतले ॥ २० ॥

शब्दार्थज्ञानकुशलाः तर्ककर्कशबुद्धयः ।
जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ ॥ २१ ॥

वेदबोधितवाक्यानां अन्यथैव प्ररोचकाः ।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ युगे ॥ २२ ॥

मिश्राः शास्त्रमहाशस्त्रैः अद्वैतोच्छेदिनोऽम्बिके ।
कर्मैव परमं श्रेयो नैवेशः फलदायकः ॥ २३ ॥

इति युक्तिपरापृष्टवाक्यैरुद्बोधयन्ति च ।
तेन घोराः कुलाचाराः कर्मसारा भवन्ति च ॥ २४ ॥

तेषामुत्पाटनार्थाय सृजामीशे मदंशतः ।
केरले शशलग्रामे विप्रपत्न्यां मदंशतः ।
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः' ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कौर्मे भविष्योत्तरे च लैंगमार्कण्डयोस्तथा ।
वायौ पुराणेऽवतारो निर्दिष्टः शाङ्करः स्फुटम् ॥ २६ ॥

'कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
स देवता भवेन्नृणां देवतानां च दैवतम् ॥ २७ ॥

करिष्यत्यवतारं स्वं शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ २८ ॥

उपदेक्ष्यति तद् ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि सर्वस्माच्च तु दर्शनात् ॥ २९ ॥

ये तं विप्रा निषेवन्ते येन केनाप्युपायतः ।
विजित्य कर्मजान् दोषान् यान्ति ते परमं पदम्' ॥ ३० ॥

'कल्यब्दे द्विसहस्रान्ते लोकानुग्रहकाम्यया ।
चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति' ॥ ३१ ॥

'निन्दन्ति वेदविद्यां च द्विजाः कर्माणि वै कलौ ।
कलौ रुद्रो महादेवः शङ्करो नीललोहितः ॥ ३२ ॥

प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः ।
ये तं विप्रा निषेवन्ते येन केनापि शङ्करम् ।
कलिदोषान्विनिर्जित्य प्रयान्ति परमं पदम्' ॥ ३३ ॥

'लोकानुग्रहतत्परः परशिवः संप्रार्थितो ब्रह्मणा
　चार्वाकादिमतप्रभेदनिपुणां बुद्धिं सदा धारयन् ।
कालट्याख्यपुरोत्तमे शिवगुरुर्विद्याधिनाथश्च यः
　तत्पत्न्यां शिवतारके समुदितः श्रीशङ्कराख्यां वहन्' ॥ ३४ ॥

'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति' ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शैवादौ सूचितं भावि वृत्तं सत्यापयन्निह ।
अवातरद्यत्कालट्यां चरितं तन्निबोधत ॥ ३६ ॥

शाक्यैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवैः
अन्यैरप्यखिलं खिलं खलु खलैर्दुर्वादिभिर्वैदिकम् ।
पन्थानं परिरक्षितुं क्षितितलं प्राप्तः परिक्रीडते
घोरे संसृतिकानने विचरतां क्षेमंकरः शङ्करः ॥ ३७ ॥

इति श्रीशङ्करविजयमकरन्दे चतुर्थ आस्वादः समाप्तः ॥

---

## ॥ पञ्चमः आस्वादः ॥

### शिवगुरुतपश्चर्या ।

महिमाननीयचरितं दधतं महिमानमीड्यमहिमाल्यभृतः ।
अवतारभूतमवतान्नुवतां भवतारणं किमपि वस्तु मुहुः ॥ १ ॥

स्वर्गाद्रेः ककुभि विभाति दक्षिणस्यां
देशः कोऽप्यथ भुवि केरलाभिधानः ।
पूर्णश्रीर्जितदिविषत्पुरैः पुराग्र्यैः
विप्रौघैः श्रुतिविदितोरुसच्चरित्रैः ॥ २ ॥

यस्याख्यामवगमयन्ति निश्चितार्थां संपूर्णाः सुरुचिरकेरभूरुहौघाः ।
तत्रत्या हृदि सरसा बहिः सुरूपा लोका इत्यवगमयत्फलालिभाराः ॥

---

संकलने मूलम्—यतिसार्वभौमोपहारतः १, ६३ गुरुवंशकाव्यतः-१-५, २३. गोविन्दनाथीयतः ६-१०, २४-३९. भगवत्पादाभ्युदयतः ११, ५९-६२. माधवीयतः १२-२२, ४४-४६, ४८-५७. व्यासाचलीयतः १४-२२, ४०-४६, ४८-५७. शंकराभ्युदयतः ४७, ५८.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशेन स्वरपि समं न सर्वदेति व्यालोलाः क्रमुकमहीरुहा महोच्चाः ।
यत्रैलाव्रततिवधूपगुह्यमाना भद्रश्रीधरणिरुहोऽन्विताभिधानाः ॥ ४ ॥

माकन्दा दृढपरिरब्धनागवल्ल्यो माङ्गल्यं भुवि बहुलं विभासयन्ति ।
यत्रैवं पनसमुखद्रुमाल्यः सन्तापी रविरपि नेति बोधयन्ति ॥ ५ ॥

निला मरुद्वृधा चेति तत्र नद्यौ विराजतः ।
निलायां शंबरक्रोडं भासते शास्तुरास्पदम् ॥ ६ ॥

नावाक्षेत्रं हि तस्या हि तीरे दीप्यति मुक्तिदम् ।
भवनं पद्मनाभस्य भुवनत्रयपावनम् ॥ ७ ॥

चूर्णीति चापरा ख्याता तीरयोरुभयोर्नदी ।
अतिस्वच्छजला धत्ते पुण्यान् बहुसुरालयान् ॥ ८ ॥

ऋद्धिमानुत्तरे तीरे तस्याः पावनपाथसः ।
कश्चिद्देशो महानस्ति कालटीति सुविश्रुतः ॥ ९ ॥

सर्ववेदार्थनिपुणैः सर्वशास्त्रविशारदैः ।
सर्वाश्रमरतैः शान्तैरन्वितो विप्रसत्तमैः ॥ १० ॥

जन्तोर्यदाश्रितात् कालः टीकते भयविह्वलः ।
इति हेतोर्वदन्त्येनं कालटीति विचक्षणाः ॥ ११ ॥

कश्चिद्द्विपश्चिदिह निश्चलधीर्विरेजे विद्याधिराज इति विश्रुतनामधेयः ।
रुद्रो वृषाद्रिनिलयोऽवतरीतुकामो यत्पुत्रमात्मपितरं समरोचयत्सः ॥

---

(६) निला-भारतप्पुऴ । मरुद्वृधा-चूर्णी पूर्णा आलुवायू पुऴ पेरियार । शंबरक्रोडं-चम्रवट्टम् ॥

(१२) केरलेषु प्रतिब्राह्मणगृहं विशिष्टं नामधेयमस्ति शंकरपितामहगृहं कैप्पल्लीवि नाम्ना प्रसिद्धम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुत्रोऽभवत्तस्य पुरात्तपुण्यैः सुब्रह्मतेजाः शिवगुर्वभिख्यः।
ज्ञाने शिवो यो वचने गुरुस्तस्यान्वर्थनामाकृत लब्धवर्णः ॥ १३ ॥

स ब्रह्मचारी गुरुगेहवासी तत्कार्यकारी विहितान्नभोजी।
सायं प्रभातश्च हुताशसेवी व्रतेन वेदं निजमध्यगीष्ट ॥ १४ ॥

वेदेष्वधीतेषु विचारितेऽर्थे शिष्यानुरागी गुरुराह तं स्म।
अपाठि मत्तः सषडङ्गवेदो व्यचारि कालो बहुरत्यगात्ते ॥ १५ ॥

अर्थावबोधनफलो हि विचार एष तच्चापि चित्रबहुकर्मविधानहेतोः।
तत्राधिकारमधिगच्छति सद्वितीयः कृत्वा विवाहमिति वेदविदां प्रवादः॥

एवं गुरौ वदति तज्जनको निनीषुः आगच्छदत्र तनयं स्वगृहं गृहेशः।
तेनानुनीय बहुलं गुरवे प्रदाय्य वित्तं निकेतनमनायि गृहीतविद्यः ॥

वेदे च शास्त्रे च निरीक्ष्य बुद्धिं प्रश्नोत्तरादावपि नैपुणीं ताम्।
दृष्ट्वा तुतोषातितरां पिताऽस्य स्वतस्सुखा या किमु शास्त्रतो वाक् ॥

कन्यां प्रदातुमनसो बहवोऽपि विप्रास्तन्मन्दिरं प्रति ययुर्गुणपाशकृष्टाः।
पूर्वं विवाहसमयादपि तस्य गेहं संबाधवत्किल बभूव वरीतुकामैः ॥

बह्वर्थदायिषु बहुष्वपि सत्सु देशे कन्याप्रदातृषु परीक्ष्य विशिष्टजन्म।
कन्यामयाचत सुताय स विप्रवर्यो विप्रं विशिष्टकुलजं मखपण्डिताख्यम्* ॥

विद्याधिराजमखपण्डितनामधेयौ संप्रत्ययं व्यतनुतामभिपूज्य दैवम्।
उद्वाह्य शास्त्रविधिना विहिते मुहूर्ते तौ संमुदं बहुमवापतुरात्तकामौ ॥

अग्नीनथाधित महोत्तरयागजातं कर्तुं विशेषकुशलैः सहितो द्विजेशः।
तत्तत्फलेषु यदनाहितहव्यवाहः स्यादुत्तरेषु विहितेष्वपि नाधिकारी ॥

---

(२०) अयं मखपण्डितः (अय) मेल्पालूर् इति प्रसिद्धे परनाकुलं नगरात् २५ मीलदूरस्थे जातः इति प्रसिद्धिः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तोऽयं व्रतकरणादृणादृषीणां देवानामपि विहितैः समग्रयज्ञैः ।
निर्मुक्तो न चिरमभूदृणात्पितॄणां सा चिन्ता मनसि सदास्य सन्निविष्टा ॥

लोका न सन्त्यपुत्रस्येत्यतिमात्रमनारतम् ।
सन्तापसहितं विप्रं भार्योवाच विचार्य तम् ॥ २४ ॥

सर्वभक्तजनाकांक्षापूरणामरपादपः ।
निषेव्यः क्षिप्रमावाभ्यां अपत्यार्थमुमापतिः ॥ २५ ॥

उपमन्युरिति ख्यातो विप्रसूनुः पुराऽभवत् ।
दारिद्र्येण कृशांग्या स स्वमात्रा सह जातुचित् ॥ २६ ॥

मातुलस्य गृहं प्राप्तो धनिनः करुणानिधेः ।
सदुग्धं सघृतं भक्तमश्नन् स शिशुरात्तमुत् ॥ २७ ॥

संक्रीडमानस्तत्रत्यैः अवसद्द्विजबालकैः ।
ततः स्वगेहमायातं पुत्रं दुग्धान्नकाङ्क्षिणम् ॥ २८ ॥

रुदन्तं बालकं प्रोचे माता दौर्गत्यपीडिता ।
पूजितं न मया पूर्वं चन्द्रमौलिपदाम्बुजम् ॥ २९ ॥

कथं नु लभ्यते संपत् अनीशचरणार्चनैः ।
श्रुत्वेति वचनं मातुः उपमन्युरुदारधीः ॥ ३० ॥

तपसे कृतसंकल्पो ययौ तदनुमोदितः ।
अतिघोरं तपस्तस्य चरतस्तेजसा भृशम् ॥ ३१ ॥

अतिभानुहुताशेन ज्वलितं भुवनत्रयम् ।
भीतः शतक्रतुस्तावद् ब्रह्मणा माधवेन च ॥ ३२ ॥

समेतः शङ्करं प्राप्य स्तुत्वोवाच निजं भयम् ।
ततो महेश्वरो देवस्तं गत्वा द्विजबालकम् ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महेन्द्रवपुषा छन्नः प्रोवाच विविधां गिरम् ।
ईशो विचित्रया वाचा तं निवर्तयितुं शिशुम् ॥ ३४ ॥

तपसः सुस्थिरात्मानमनीशो हि बभूव सः ।
हित्वा कपटवेषं स सुप्रसन्नमनाः शिवः ॥ ३५ ॥

आश्रितो निजरूपं च शिशोः प्रत्यक्षतामगात् ।
अन्वितः प्रमथव्रातैः सहितो गिरिकन्यया ॥ ३६ ॥

पुत्रयोरिव तत्राल बाले प्रेम दधानया ।
दोर्भ्यामुत्थाप्य चालिंग्य स्वपुत्रमिव तं शिशुम् ॥ ३७ ॥

किं त्वमिच्छसि बालेति शङ्करः परिपृष्टवान् ।
अन्यन्नैवाहमिच्छामि त्वत्पादाम्बुजसेवनात् ॥ ३८ ॥

ब्रुवाणमिति तं भूयः स्वाङ्कमारोपयत्प्रभुः ।
तस्मै ददौ महादेवो बालायाखिलसंपदम् ॥ ३९ ॥

उपससार महापयसां निधिः पशुपतेरनुशासनतः शिशोः ।
विविधपुष्पफलाः सुरपादपाः शिशुमुपासितुमागुरनुत्तमाः ॥ ४० ॥

स्मरति यच्छिशुरस्य पुरः पुराऽऽपतति तन्मनसोऽपि विकल्पना ।
इति महागुणसिद्धिमवाप्तवान् शिवशिवानुमतेन गृहं ययौ ॥ ४१ ॥

एवं फलप्रदमपीश्वरमीश्वराणां ईशं भजाव कमितः सकलार्थसिद्ध्यै ।
तत्रोपमन्युमहिमा परमं प्रमाणं नो देवतासु जडिमा जडिमा मनुष्ये ॥

एवं कलत्रवचनं स निशम्य भक्त्या संपूजनाय गिरिशस्य मनो दधार ।
सा तस्य दुश्चरतपश्चरणोद्यतस्य तत्रानुकूल्यमकरोद्गृहवाटिकायाम् ॥

तस्योपधाम किल सन्निहिताऽऽपगैका स्नात्वा सदाशिवमुपास्त जले स तस्याः ।
कन्दाशनः कतिचिदेव दिनानि पूर्वं पश्चात्तदाऽऽस शिवपादयुगाब्जभृङ्गः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जायाऽपि तस्य विमला नियमोपतापैः चिक्लेश कायमनिशं शिवमर्चयन्ती ।
क्षेत्रे वृषस्य निवसन्तमलं सुतार्थं कालोऽप्यगादति तयोस्तपतोरनेकः ॥ ४५ ॥

देवः कृपापरवशो द्विजवेषधारी प्रत्यक्षतः शिवगुरुं गत आत्तनिद्रम् ।
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते पुत्रार्थितेति वचनं स जगाद विप्रः ॥

वरयस्व बहून्पुत्रान् वत्स मूढांश्चिरायुषः ।
सर्वज्ञमेकमथवा सौम्य संकुचितायुषम् ॥ ४७ ॥

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः सर्वज्ञतापदमितीरित आबभाषे ।
दद्यामुदीरितपदं तनयं तपो मा पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ॥ ४८ ॥

आकर्णयन्निति बुबोध स विप्रवर्यः तश्चाब्रवीन्निजकलत्रमनिन्दितात्मा ।
स्वप्नं शशंस वनितामणिरस्य भार्या सत्यं भविष्यति तु नौ तनयो महात्मा ॥

तौ दम्पती शिवपरौ नियतौ स्मरन्तौ स्वप्नेक्षितं गृहगतौ बहुदक्षिणान्नैः ।
सन्तर्प्य विप्रनिकरं तदुदीरिताभिः आशीर्भिरापतुरनल्पमुदं विशुद्धौ ॥ ५० ॥

## शङ्करगर्भवासः ।

तस्मिन्दिने शिवगुरोरुपभोक्ष्यमाणे भक्ते प्रविष्टमभवत्किल शैवतेजः ।
भुक्तान्नविप्रवचनादुपयुक्तशेषं सोऽभुंक्त साऽपि निजभर्तृपदाब्जभृङ्गी ॥ ५१ ॥

गर्भं दधार शिवगर्भमसौ मृगाक्षी गर्भोऽप्यवर्धत शनैरभवच्छरीरम् ।
तेजोविशेषविनिपातितदृष्टिपातं विश्वं रवेर्दिवसमध्य इवोग्रतेजः ॥ ५२ ॥

गर्भालसा गतवती गतिमान्द्यमीषत् आपेति नाद्भुतमिदं धरते शिवं या ।
यो विष्टपानि बिभृते हि चतुर्दशापि यस्यैव मूर्तय इमा वसुधाजलाद्याः ॥ ५३ ॥

---

(४७-४८) चिरायुषां मूढानामपत्यत्वे धर्मरक्षणाय सन्ततिरित्याशा दूरे । संकुचितायुषः सर्वज्ञस्यापत्यत्वे च अदीर्घजीवित्वात् वंशप्रतिष्ठायामाशा दूरे । इत्युभयथापि स्वमनोरथालाभे, मूढापेक्षया सर्वज्ञो वरमिति वरग्रहणे प्रवृत्तिरिव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां बन्धुताऽगमदुपश्रुतदोहदार्तिः आदाय दुर्लभमनर्घ्यमपूर्ववस्तु।
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष हा हन्त गर्भधरणं किल दुःखहेतुः॥ ५४॥

मानुष्यधर्ममनुसृत्य किलेदमुक्तं काऽपि व्यथा शिवमहोभरणे न वध्वाः।
सर्वव्यथाव्यतिकरं परिहर्तुकामाः देवं भजन्त इति तत्त्वविदां प्रवादः ॥ ५५॥

उक्ष्णा निसर्गधवलेन महीयसा सा चात्मानमैक्षत समूढमुपात्तनिद्रा।
संगीयमानमपि गीतविशारदाद्यैः विद्याधरप्रभृतिभिर्विनयोपयातैः॥ ५६॥

आकर्णयज्जय जयेति वरं दधाना रक्षेति शब्दमवलोकय मा दशेति।
आकर्ण्य नोत्थितवती पुनरुक्तशब्दं सा विस्मिता किल शृणोति निरीक्षमाणा॥

खिद्यमानापि नर्मोक्तौ किञ्च मञ्चाधिरोहणे।
विजित्यान्यानसावैच्छत् विद्यासिंहासने स्थितिम्॥ ५८॥

सा ददर्श मुहुः स्वप्ने वटमूलनिवासिनम्।
शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम्॥ ५९॥

चिन्मुद्रालक्षणं देवं युवानं स्मरसुन्दरम्।
दधानं मौक्तिकीमक्षमालां शिष्यैः समावृतम्॥ ६०॥

ततः प्रबुद्धा सा देवी तमेव स्वप्नगोचरम्।
ध्यायन्ती मनसा देवं तन्मयीं धारणां दधौ॥ ६१॥

अथ चानेहसाऽल्पेन यत्किञ्चित्सचराचरम्।
अचष्ट तच्छिवाकारं योगारूढेन चेतसा॥ ६२॥

शङ्कराचार्यवर्यो मे सन्निधत्तां सदा हृदि।
सौम्यं यस्य वपुः ख्यातं विजहद्विषमां दशाम्॥ ६३॥

इति श्रीशङ्करविजयमकरन्दे पञ्चम आस्वादः समाप्तः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ॥ षष्ठ आस्वादः ॥

## श्रीशंकरावतारः ।

शिवगुरुतपःप्रबन्धं चिद्घनमार्योदरावासम् ।
शंकरगुरुवरमाद्यं ध्यायाम्यनिशं परात्मानम् ॥ १ ॥

सा दधार सती गर्भं आदित्यसमतेजसम् ।
निधानगर्भा धात्रीव शमीवान्तर्हितानला ॥ २ ॥

व्यराजन तदार्यांबा शिवैकायत्तचेतना ।
दृष्ट्वा शिवगुरुर्यज्वा भार्यामार्यां च गर्भिणीम् ॥ ३ ॥

वृषाचलेशं सततं स्मरन्नेकाग्रचेतसा ।
दयालुतां स्तुवन् शंभोः दीनेष्वपि महत्स्वपि ॥ ४ ॥

ववृधे स पयोराशिः पूर्णेन्दोरिव दर्शनात् ।
व्यजायत शुभः कालः पञ्चोच्चग्रहसंयुतः ॥ ५ ॥

कल्हारकलिकागन्धबन्धुरो मरुदाववौ ।
दिशः प्रकाशिताकाशा बभूवुः सूर्यरश्मिभिः ॥ ६ ॥

प्रातः प्रदक्षिणज्वाला जज्वलुर्यज्ञपावकाः ।
ननन्दुर्बान्धवाः सर्वे ननृतुश्चाप्सरोगणाः ॥ ७ ॥

---

सङ्कलने मूलम्—ब्रह्मसूत्रानुगुण्यसिद्धितः १. । बृहच्छङ्करविजयतः २-२०, २६-३२, गोविन्दनाथीयतः २१-२५, ३९, व्याघ्राचलीयतः ३३-३४, ४१, ४४, ५१, माधवीयतः ३३, ३४, ४१, ४३-४७, ५२-५३, आनन्दगिरीयतः ३५, चिद्विलासीयतः ३-४, १४-२०, २६-३२, ३६-३८, ४८-५०, शंकराभ्युदयतः ४०, गुरुवंशकाव्यतः ४२-५४, भगवत्पादसप्ततितः ५६. ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ससृजुः पुष्पवर्षाणि देवा भुव्यन्तरिक्षगाः ।
आसीत्तदा दिव्यगानं स्वर्गलोके चिरं सुखम् ॥ ८ ॥

प्रसन्नमभवच्चित्तं सतां प्रतपतामपि ।
ततः सा दशमे मासि संपूर्णशुभलक्षणे ॥ ९ ॥

षड्विंशे शतके श्रीमद्यौधिष्ठिरशकस्य वै ।
एकत्रिंशेऽथ वर्षे तु हायने नन्दने शुभे ॥ १० ॥

मेषराशिं गते सूर्ये वैशाखे मासि शोभने ।
शुक्लपक्षे च पञ्चम्यां तिथ्यां भास्करवासरे ॥ ११ ॥

पुनर्वसुगते चन्द्रे लग्ने कर्कटकाह्वये ।
मध्याह्ने चाभिजिन्नाममुहूर्ते शुभवीक्षिते ॥ १२ ॥

स्वोच्चस्थे केन्द्रसंस्थे च गुरौ मन्दे कुजे रवौ ।
निजतुंगगते शुक्रे रविणा संगते बुधे ॥ १३ ॥

प्रासूत तनयं साध्वी गिरिजेव षडाननम् ।
उदयाचलवेलेव भानुमन्तं महौजसम् ॥ १४ ॥

---

(९-१४) कलियुगारम्भः संप्रदायविद्भिः क्रिस्तोः ३१०२ वत्सरेभ्यः प्रागिति गण्यते । ततः ३७ वत्सरेभ्यः प्राक् युधिष्ठिरस्य पट्टाभिषेकः । तस्य विजयमभिनन्दितुं शकारंभः इति क्रिस्तोः ३१३९ वत्सरेभ्यः प्राक् यौधिष्ठिरशकारंभः । तस्या यौधिष्ठिरशकाब्द्याः २६३१ तमे, कल्यब्दानां २५९३ तमे, क्रिस्तोः प्राक् ५०९ तमे च वत्सरे भगवत्पादानामवतारः । सुषमाकृता उदाहृतः प्राचीनशङ्कर-विजयश्लोकः "तिष्ये प्रयात्यनलशेवधिबाणनेत्रे (२५९३) यो नन्दने दिनमणावुदगध्वभाजि । राधेऽदितेरुडुनि निर्गतमङ्गलग्नेऽप्याहूतवान् शिवगुरुः स च शङ्करेति" इति, मूलवचनमनुवदति (तिष्यः कलिः)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुर्निरीक्ष्यैः स्वतेजोभिः भासयन्तं दिशो दश ।
बालत्वेऽपि विशालाक्षं अतिविस्तृतवक्षसम् ॥ १५ ॥

आजानुलंबितभुजं सुविशालनिटालकम् ।
आरक्तोपान्तनयनविनिन्दितसरोरुहम् ॥ १६ ॥

मुखकान्तिपराभूतराकाहिमकराकृतिम् ।
शङ्खचक्रध्वजाकाररेखाचिह्नपदाम्बुजम् ॥ १७ ॥

द्वात्रिंशल्लक्षणोपेतं विद्युदाभकलेवरम् ।
प्रमोदं दृष्टमात्रेण दिशन्तं तं स्तनन्धयम् ॥ १८ ॥

---

जिनविजये भगवत्पादनिर्याणकालः एवमभिहितः । "ऋषिर्बाणस्तथा भूमिः मर्त्याक्षौ वाममेलनात् । एकत्वेन लभेताङ्कः ताम्राक्षस्तत्र वासरः' ॥ (ताम्राक्षः रक्ताक्षिवत्सरः) जैनानां यौधिष्ठिरशकाब्दः पूर्वमुक्तात्सांप्रदायिकात् यौधिष्ठिरशकाब्दात् ५०५ वर्षैरर्वाचीनः, क्रिस्तोः प्राक् २६३४ वत्सरतो गण्यमानः । जिनविजयोक्तेन २१५७ वत्सर मानेन ५०५ वत्सराणां योगे २६६२ तमे यौधिष्ठिरशकवत्सरे निर्याणं इत्यापतति । ' महेशांशाज्जातो मधुरमुपदिष्टाद्वयनयो महामोहध्वान्तप्रशमनरविः षण्मतगुरुः । फले (३२) स्वस्मिन् स्वायुष्यपि शरचराब्देऽपि (२६२५) च कलेः विलिल्ये रक्ताक्षिण्यधिवृषसितैकादशि परे ॥" इति पुण्यश्लोकमञ्जरीकृतां स्मरणं अनेन सङ्गच्छते । द्वारकापीठाधिपतिभिः ७२ तमैः जगद्गुरुभिः राजराजेश्वरशङ्कराश्रमश्रीचरणैः प्रकाशिते श्रीमद्द्वारकाशारदापीठपरमाचार्यपरम्पराकालनिर्णयात्मके विमर्शे भगवत्पादानामवतारकालः "युधिष्ठिरशके २६३१ वैशाखशुक्लपञ्चम्यां श्रीमच्छंकरावतारः" इति स्पष्टमुल्लिख्यते ॥ "अस्या मातृकायाः अतिजीर्णतया गलिताक्षरप्रायत्वात्, विश्वरूपाश्रमपर्यन्तानपि आचार्यान् अर्वाचीनानन्तर्भाव्य, पत्रिकेयं प्रकाशिता अभिनवा" इति अस्य कालनिर्णयस्य संप्रदायारूढत्वं तैरेव तत्र प्रतिपादितम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पायं पायं दृशा प्रेम्णा श्रीकृष्णमिव देवकी ।
प्रपेदे न क्षणं तृप्तिं चकोरीव सुधाकरम् ॥ १९ ॥

तादृशं बालकं दृष्ट्वा सा बभूवातिविस्मिता ।
स चाद्भुतः किशोरोऽपि किञ्चिद्विचलिताधरः ।
ताडयन् चरणौ हस्तौ रुरोद मधुरस्वनम् ॥ २० ॥

प्रादुर्भावे कुमारस्य लग्नमासीत्सुशोभनम् ।
बलयुक्तशुभज्योतिस्समारूढसमीक्षितम् ॥ २१ ॥

येन सर्वज्ञतामेति जातवान् भुवि मानुषः ।
स च योगोऽप्यभूत्तस्य द्विजपुत्रस्य संभवे ॥ २२ ॥

मृगेन्द्रगजसर्पाखुतरक्षुहरिणादयः ।
हित्वाऽन्योन्यं तदा वैरं जन्तवो व्यहरन्वने ॥ २३ ॥

पुष्पाणि पुष्पिता वृक्षा मुमुचुश्च तथा लताः ।
सुप्रसन्नजला नद्यो निष्कंपास्सिन्धवोऽभवन् ॥ २४ ॥

द्वैतवादिकराग्रेभ्यः पुस्तकानि तदापतन् ।
अद्वैतवादिनां चेतो हृष्टं व्यासस्य चाभवत् ॥ २५ ॥

तत्रत्या वृद्धनार्योऽपि यथोचितमथाचरन् ।
बालकं मेनिरे प्रोद्यदिन्दुबिम्बमिवोज्ज्वलम् ॥ २६ ॥

ततः श्रुत्वा पिता सोऽपि निधिं प्राप्येव निर्धनः ।
मुमुदे नितरां चित्ते वित्तेशं नाभ्यलक्ष्यत ॥ २७ ॥

स्नात्वा शिवगुरुस्तूर्णं यज्वनामग्रणीस्ततः ।
विप्रानाकारयामास पुरन्ध्रीरपि सर्वतः ॥ २८ ॥

तदोत्सवो महानासीत् पुरे सद्मनि सन्ततम् ।
धान्यराशीन्मखिभ्योऽसौ विद्वद्भ्यो भूयः प्रदत्तवान् ॥ २९ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनानि भूरि विप्रेभ्यो वेदविद्भ्यो दिदेश सः ।
वासांसि भूयो दिव्यानि सफलानि प्रदत्तवान् ॥ ३० ॥

पुरन्ध्रीणां च नीरन्ध्रं वस्तुजातमदादसौ ।
घटोध्नीर्बहुशो गाश्च सालङ्काराः सदक्षिणाः ॥ ३१ ॥

ततः शिवगुरुर्यज्वा ब्राह्मणान्पूर्वतोऽधिकम् ।
सन्तर्प्य बन्धुभिः सार्धं मुदितो न्यवसत्सुधीः ॥ ३२ ॥

सत्कारपूर्वमभियुक्तमुहूर्तवेदिविप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ।
सर्वज्ञ एव भविता रचयिष्यते च शास्त्रं स्वतन्त्रमथ वागधिपांश्च जेता ॥ ३३ ॥

कीर्तिं स्वकां भुवि विधास्यति यावदेष किं बोधितेन बहुना शिशुरेष पूर्णः ।
नापृच्छि जीवितमनेन च तैर्न चोक्तं प्रायो विदन्नपि न वक्त्यशुभं शुभज्ञः ॥

शम्भोर्वरमनुप्राप्य पिता शिवगुरुः किल ।
आयुषो ह्रस्वतां जानन्नपि नोवाच किञ्चन ।
सर्वज्ञत्वादिसुगुणान् शम्भूक्तांस्तस्य संस्मरन् ॥ ३५ ॥

तदा स्तनन्धयं नार्यः कुमारमिव देवताः ।
दिदृक्षवः समाजग्मुः तिग्मांशुं मुनियोषितः ॥ ३६ ॥

पश्यन्त्यः स्वं त्यजन्त्योऽपि कृत्यं यद्यद्गृहोचितम् ।
सप्रजास्ताः प्रजा बालमुद्यदिन्दुनिभाननम् ॥ ३७ ॥

सदा निरीक्षितुं बालं यास्यतां प्रतियास्यताम् ।
आनन्दबाष्पसलिलैः पंकिला भूरभूत्तदा ॥ ३८ ॥

द्वादशेऽहनि तं बालमङ्कमारोप्य कौतुकात् ।
चक्रे शङ्करनामानं पिता शङ्करभक्तिमान् ॥ ३९ ॥

अर्धेन्दुशेखरस्यायमवतारममुं विदन् ।
शङ्करं जगतां चक्रे शङ्करं नामतोऽपि सः ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसंप्रसादात् जातस्ततो व्यधित शङ्करनामधेयम् ॥

श्रीमान्मुदा शुभतमेऽहनि चारु नाम चक्रे पिता सपदि शङ्कर इत्यमुष्य ।
अन्वर्थनाम भुवि शङ्करणेन यद्वा शं सर्वदा करवशं ध्रुवमस्य भावि ॥ ४२ ॥

मूर्धनि हिमकरचिह्नं निटिले नयनाङ्कमंसयोः शूलम् ।
वपुषि स्फटिकसवर्णं प्राज्ञास्तं मेनिरे शम्भुम् ॥ ४३ ॥

सर्वं विदन् सकलशक्तियुतोऽपि बालो मानुष्यजातिमनुकृत्य चचार तद्वत् ।
बालः शनैर्हसितुमारभत क्रमेण स्रप्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥

उदचारयदर्भको गिरः पदचारानतनोदनन्तरम् ।
विकलोऽभवदादिमात्तयोः पिकलोकश्चरमान्मरालकः ॥ ४५ ॥

नवविद्रुमपल्लवास्तृतामिव काश्मीरपरागपाटलाम् ।
रचयन्नचलां पदत्विषा स चचारेन्दुनिभः शनैः शनैः ॥ ४६ ॥

राज्यश्रीरिव नयकोविदस्य राज्ञो विद्येव व्यसनदवीयसो बुधस्य ।
शुभ्रांशोश्छविरिव शारदस्य पित्रोः सन्तोषैः सह ववृधे तदीयमूर्तिः ॥

लालाजलसुधाबिन्दुस्यन्दन्मधुरिमाक्षरम् ।
स्वल्पं जजल्प शिल्पेन तातेत्यम्बेति मञ्जुलम् ॥ ४८ ॥

स्वयं त्रिजगदालंबोऽप्यवलम्ब्य करं पितुः ।
दुर्मतानि विनिर्जेतुं यास्यन्निव चचार सः ॥ ४९ ॥

---

(४०-४२) जातस्य शिशोः जन्मकालीनमासपक्षतिथिसंकेतः शङ्कर इति नाम्नि विद्यते । कटपयादिसंख्यानानुसारेण अङ्कानां वामतो गतिरिति रीत्या, र इति द्वितीयं वैशाखं मासं, क इति प्रथमं शुक्लं पक्षं, शं इति पञ्चमीं तिथिं द्योतयतीति जगद्गुरु श्रीचन्द्रशेखरेन्द्रसरस्वती-श्रीपादाः (श्रीशङ्करविजयोपन्यासेषु) ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रमेण बालकैः साकं सवयोभिः सुबुद्धिभिः ।
बहिर्निर्गन्तुमप्यैच्छद्वारितोऽपि पुनः पुनः ॥

भाषामवेत्प्रथमहायन एव बालो वर्णान्पपाठ किल हायनके द्वितीये ।
ग्रन्थाक्षराण्यपि स वाचयितुं प्रगल्भः काव्यं पुराणमितिहासकथाः पपाठ ॥

अजनि दुःखकरो न गुरोरसौ श्रवणतः सकृदेव परिग्रही ।
सहनिपाठजनस्य गुरुः स्वयं स च पपाठ ततो गुरुणा विना ॥ ५२ ॥

रजसा तमसाऽप्यनाश्रितो रजसा खेलनकाल एव हि ।
स कलाधरसत्तमात्मजः सकलाश्चापि लिपीरविन्दत ॥ ५३ ॥

चूडाकृतिं व्यतनुत द्विजराजचूडास्तस्य च स्वयमथो विधिवद्विधिज्ञः ।
वैधेन तेजउदयेन विशेषभास्वान् उत्तेजितो मणिरिवैष तदा विरेजे ॥ ५४ ॥

अमुना तनयेन भूषितं यमुनातातसमानवर्चसा ।
तुलया रहितं निजं कुलं कलयामास स पुत्रिणां वरः ॥ ५५ ॥

व्याख्या मौनमयी ततः परिगलच्छङ्काकलङ्काङ्कुराः
छात्रा विश्वपवित्रचित्रचरितास्ते वामदेवादयः ।
यस्यायं स गुरुर्विनीतमनुजत्राणाय पृथ्वीतलं
प्राप्तः शंकररूपभृन्नतमिमं पुष्णातु तृष्णातुरम् ॥ ५६ ॥

इति श्रीशङ्करविजयमकरन्दे षष्ठ आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ सप्तम आस्वादः ॥

---

बाललीला ।

श्रीमते शङ्करार्याय धीमतेऽद्भुतशक्तये ।
नमोऽस्त्वद्वैतसिद्धान्तस्थापनोपात्तमूर्तये ॥ १ ॥

चरत्यस्मिन् सजानुभ्यां पाणिभ्यां भवनाङ्गणे ।
तपः सत्यदयाशौचान्यचरन् भुवनाङ्गणे ॥ २ ॥

तस्मिन्प्रस्थातुमनसि पादाभ्यां विप्रदारके ।
श्रुतिस्मृत्युदितौ धर्मौ जगत्यां सुप्रतिष्ठितौ ॥ ३ ॥

अब्दपूर्तिमहे प्राप्ते सुताभ्युदयकृत्पिता ।
वृषाचलेशमानर्च पूजाद्रव्यैर्विशेषतः ॥ ४ ॥

यदर्पितं तत्र लिंगे भूषामाल्यांबरादिकम् ।
तत्सर्वं स्वसुताङ्गस्थं सद्यो वीक्ष्य स विस्मितः ॥ ५ ॥

ब्रह्मोत्सवे रथस्थं तौ दम्पती दर्शकौ हरम् ।
आगतौ स्वमुमांके च स्वांके चापश्यतां सुतम् ॥ ६ ॥

जातु वात्याकुले ग्रामे त्वपश्यन्तस्तमर्भकम् ।
तत्र तत्र विचिन्वन्तो जनाः संभ्रान्तमानसाः ॥ ७ ॥

दिष्ट्या लब्धोऽयमित्युक्त्वा तमेवैकं पृथक् पृथक् ।
युगपद्गृहमानिन्युस्तानष्टौ वीक्ष्य विस्मिताः ॥ ८ ॥

---

संकलने मूलम् —यतिसार्वभौमोपहारतः १-४६, भगवत्पादाभ्युदयतः २-१०, चिद्विलासीयतः ११-१७, ४४-४५, देवीभुजङ्गतः ३१-४१. ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिताऽप्यन्विष्य जग्राह तमेकं हरिसंनिधेः ।
पित्राऽऽनीतेऽर्भके दृष्टे नादृश्यन्तेतरार्भकाः ॥ ९ ॥

एवंविधाभिर्लीलाभिः दिव्याभिर्दिव्यमात्मनः ।
द्योतयन्नैश्वरं भावं विजहार स बालवत् ॥ १० ॥

## चौलविधानम् ।

तृतीयाब्देऽभ्युदयति ज्योतिश्शास्त्रकलाविदः ।
आकार्य सूर्यसिद्धान्तसुधाकूपारपारगान् ॥ ११ ॥

सुमुहूर्ते सुलग्ने च शुभनक्षत्रसंयुते ।
अनेहसि महोदारे द्राविडाचारसंमतम् ॥ १२ ॥

चौलोत्सवमथाकार्षीत् सोऽयं शिवगुरुर्मखी ।

## विद्याभ्यासः ।

ततो निपुणतां दृष्ट्वा बालकस्य सुविस्मितः ॥ १३ ॥

अक्षराभ्यासमाचष्ट सर्वशास्त्रविवित्सया ।
हिरण्यगर्भः प्राक्सृष्टां विष्टपानां ततीमिव ॥ १४ ॥

सस्मार सुकुमारोऽसौ जग्राह प्राक्तनीः कलाः ।
नदीमुखादिवांबोधिः सलिलान्यखिलान्यपि ॥ १५ ॥

अक्षरग्रहणव्याजात् शास्त्राणि विविधान्यपि ।
बालक्रीडोचिताः सर्वाश्चकर्ष विविधाः कलाः ॥ १६ ॥
किरणा दर्पणे भानोरिव यत्र चकाशिरे ।

कोशानधीतवानाशु स्तोत्राण्यपि महेशितुः ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## देवीप्रसादप्राप्तिः ।

देवीं भक्त्या शिवगुरुः ग्रामान्तालयसंस्थिताम् ।
नित्यमाराधयामास क्षीरं स्वादु निवेदयन् ॥ १८ ॥

शङ्कराय ददौ शिष्टं क्षीरात्किञ्चिन्निवेदितात् ।
पित्रा दत्तं पिबत्येष देवी शिष्टं ददाति मे ॥ १९ ॥

देव्याः प्रसाद इति तत् शिशुः पिबति नित्यशः ।
ग्रामाद्बहिर्जिगमिषुः कदाचिदथ स द्विजः ॥ २० ॥

आर्यामनुशशासेत्थं यावदागमनं मम ।
देव्या आराधनं नित्यं कुरु क्षीरं निवेदय ॥ २१ ॥

गते भर्तरि सा देव्याश्चकाराहणमुत्तमम् ।
शिष्टं निवेदितात्क्षीरं शङ्कराय ददौ मुदा ॥ २२ ॥

स्त्रीधर्मिणी कदाचित्सा बहिर्नैयाय, शंकरम् ।
आहूयोपह्वरे पूजां विधातुमदिशत्क्रमम् ॥ २३ ॥

बालो देवीगृहं गत्वा देवीं संस्नाप्य भक्तितः ।
मात्रा दत्तं पयः सर्वं निधाय पुरतोऽम्बिकाम् ॥ २४ ॥

पिबेति प्रार्थयामास न किञ्चिदभवत्ततः ।
अम्बा क्रुद्धाऽथवाऽप्रीता न गृह्णाति यतः पयः ॥ २५ ॥

---

(१८-२७) अत्र सन्दब्धं कथानकं सौन्दर्यलहर्या व्याख्यासु सौभाग्यवर्धनी - अरुणामोदिनी - आनन्दगिरीया - पदार्थचन्द्रिकाख्यासु तव स्तन्यं मन्ये इति श्लोकव्याख्यायां उदाहृतम् । माणिक्यमङ्गलाख्य-ग्रामस्था कात्यायनी दुर्गा शिवगुरोः कुलदेवतेति प्रसिद्धा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति मत्वा रुरोदास्याः पुरतो बालभावतः ।
देवी करुणया तत्र सन्निधायापिबत्पयः ॥ २६ ॥

पात्रं रिक्तं तदालोक्य मह्यं किञ्चिन्न शेषितम् ।
मह्यं देयं पयः कुत्रेत्यरुदत्स हठाच्छिशुः ॥ २७ ॥

ततोऽपीतकुचाम्बापि साऽभवद्बालवत्सला ।
बालमंके समारोप्य लालयन्ती पयो ददौ ॥ २८ ॥

सारस्वतः पयःपारावारः स्तन्याकृतिस्तया ।
पायितो दयया प्रौढकविस्तेनाभवच्छिशुः ॥ २९ ॥

बालोऽप्यबालप्रतिमो देवीतत्त्वरहस्यवित् ।
देवीदर्शनमोदेन माद्यन्नुच्चैरगायत ॥ ३० ॥

विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः समूढे महानन्दपीठे निषण्णम् ।
धनुर्बाणपाशांकुशप्रोतहस्तं महस्त्रैपुरं शङ्कराद्वैतमव्यात् ॥ ३१ ॥

यदन्नादिभिः पञ्चभिः कोशजालैः शिरःपक्षपुच्छात्मकैरन्तरन्तः ।
निगूढे महायोगपीठे निषण्णं पुरारेरथान्तःपुरं नौमि नित्यम् ॥

विनोदाय चैतन्यमेकं विभज्य द्विधा देवि जीवः शिवश्चेति नाम्ना ।
शिवस्यापि जीवत्वमापादयन्ती पुनर्जीवमेनं शिवं वा करोषि ॥ ३३ ॥

लसत्तारहारामतिस्वच्छचेलां वहन्तीं करे पुस्तकं चाक्षमालाम् ।
शरच्चन्द्रकोटिप्रभाभासुरां त्वां सकृद्भावयन्भारतीवल्लभः स्यात् ॥ ३४ ॥

समुद्यत्सहस्रार्कबिम्बाभवक्त्रां स्वभासैव सिन्दूरिताजाण्डकोटिम् ।
धनुर्बाणपाशांकुशान्धारयन्तीं स्मरन्तः स्मरं वाऽपि संमोहयेयुः ॥ ३५ ॥

मणिस्यूतताटङ्कशोणास्यबिम्बां हरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् ।
हृदा भावयंस्तप्तहेमप्रभां त्वां श्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कदा वा भवत्पादपोतेन तूर्णं भवाम्भोधिमुत्तीर्य पूर्णान्तरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौ समालोक्य लोकं कथं पर्युदास्से ॥

कदा वा हृषीकाणि साम्यं भजेयुः कदा वा न शत्रुर्न मित्रं भवानि ।
कदा वा दुराशाविषूचीविलोपः कदा वा मनो मे समूलं विनश्येत् ॥

शरेष्वेव नासा धनुष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे ।
त्वगेषा भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥

जगज्जालमेतत्त्वयैवाम्ब सृष्टं त्वमेवाद्य यासीन्द्रियैरर्थजालम् ।
त्वमेकैव कर्त्री त्वमेकैव भोक्त्री न मे पुण्यपापे न मे बन्धमोक्षौ ॥

इति प्रेमभारेण किञ्चिन्मयोक्तं न बुद्ध्वैव तत्त्वं मदीयं त्वदीयम् ।
विनोदाय बालस्य मौर्ख्यं हि मातः तदेतत्प्रलापस्तुतिं मे गृहाण ॥

एवं स्तुवन्नमन् भक्त्या पूजां परिसमाप्य च ।
दयावतीदत्तदुग्धपानलब्धात्मदर्शनः ॥ ४२ ॥

देव्यगाराद्विनिष्क्रान्तो मार्गे पित्रा च सङ्गतः ।
पितरौ विदितार्थौ तावकार्षुर्विस्मितान्तरौ ॥ ४३ ॥

आसन्नाश्चवदन्त्येवं बालको न तु बालिशः ।
किशोराकारसंछन्नः कार्तिकेयो न संशयः ॥ ४४ ॥

अवतीर्णोऽथवा विष्णुः पुनर्बालत्वमाश्रितः ।
आधत्त रूपमपरं नूनं सत्यवतीसुतः ।
इत्येवं तुष्टुवुर्हृष्टाः दृष्टमेव तमर्भकम् ॥ ४५ ॥

जीवपरभेदपरवादपरतन्त्रोद्वेलमदतालतरुजालकरवालाः ।
किङ्करहृदङ्कुरितपङ्कहरणा निश्शङ्कमकलङ्कगुरुशङ्करसुचर्याः ॥

इति श्रीशङ्करविजयमकरन्दे सप्तम आस्वादः समाप्तः ॥

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ अष्टम आस्वादः ॥

### उपनयनम् ।

उपनीय दिवं गते स्वताते व्यपदिश्यागमसंग्रहेऽप्यतीते ।
निजमातरमन्वमीमनद्यो नियमार्ति स मुदे ममास्तु सद्यः ॥ १ ॥

शिवगुरुरुपनीय शङ्करार्यं निगममशेषमथाध्यजीगपत्तम् ।
नियतिरिदमसासहिं नीचा नियतमनीनयदन्तरे गुरुं द्याम् ॥ २ ॥

चौलं कर्म समाप्य चोपनयनं ताते दिवं प्रस्थिते
माताज्ञां शिरसा प्रगृह्य समगाच्चूर्णं गुरूणां कुलम् ।
तत्राध्यायपरो यथाविधि चरन् भिक्षां जटी मेखली
दण्डी सर्वकलासु शास्त्रगहनेष्वप्यप्रधृष्यो बभौ ॥ ३ ॥

---

संकलने मूलम् — जगद्गुरुनवरत्नमालास्तोत्रतः १. बृहच्छङ्करविजयतः २. प्राचीनशङ्करविजयतः ३. चिद्विलासीयतः ४-१६, गोविन्दनाथीयतः, १७-१९, ५९, ६१-६२, ६६ उत्त, ६८ पू, ६९, ७९-८४, माधवीये २०-२२, २५, २८-३३, ४४-५६, ७०-७६, आनन्दगिरीयतः २३-२७, कनकधारास्तोत्रतः ३४-४३, शङ्कराभ्युदयतः ५७-५८, ६३-६६ पू, ६८ उ. ६९ पू. ७७, ७८, व्यासाचलीयतः ६०, अच्युताष्टकतः ८५-८९, निर्वाणपञ्चकतः ९२-९४, श्रीसुरेश्वराचार्यजीवितस्मरणतः ९६.

१. उपनीय दिवं गते स्वताते:—उपनीय दिवं गतः पिता इति उपनिनीषुरेव दिवं गतः पिता इति द्वेधा कथाक्रमः प्रसिद्धः । प्रथमं, चित्सुखीय प्राचीनशङ्करविजयश्लोकौ (२-३ श्लो.) जगद्गुरुरत्नमालिका चिद्विलासीयशङ्करविजयं च अनुसरन्ति । द्वितीयं, आनन्दगिरीय व्यासाचलीय माधवीय गोविन्दनाथीयशङ्करविजयानि गुरु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः शिवगुरुर्यज्वा श्रीमान्धीमान्कुतूहली।
पञ्चम्यां शरदि प्राप्तुमिच्छन्त्यामपि सत्वरम् ॥ ४ ॥

प्रतीक्ष्य प्रतिभां वर्चस्तनौ दक्षिणतामपि।
उपनीतिं यथाशास्त्रं विधातुमतनोन्मतिम् ॥ ५ ॥

पञ्चमाब्दोपनीतश्चेत् ब्रह्मवर्चसमृच्छति।
इति सूत्रं समालम्ब्य निजतेजःसमुज्ज्वलम् ॥ ६ ॥

ब्राह्मेण तेजसा भूयो नियोक्तुं द्रुतमैहत।
तदुत्सवसदव्यवस्तुजातं द्रुतमनीनयत् ॥ ७ ॥

विचार्य बहुशः शास्त्रं निर्दुष्टे स्वेष्टसाधके।
लोकबन्धौ दिनेशस्य व्रजत्यपि हरित्तटम् ॥ ८ ॥

---

वंशकाव्यश्चानुसरन्ति। सुषमाकारस्तु प्रथमे क्रमे श्रद्धायां कारणमित्थं निरूपयति— "उपनयनानन्तरं उपक्रान्तस्वतनयाध्यापनस्य शिवगुरोः स्वर्गप्राप्तिमाहुः, अनुक्षणमुपचरिताचार्यचरणाः सर्ववृत्तान्तसाक्षिणः सहजवत् एकाग्रहारोत्पन्नाः आजीवमविरहजुषः श्रीसर्वज्ञचित्सुखाचार्याः स्वकृतौ बृहच्छङ्करविजये— "शिवगुरुरुपनीय ...... गुरुं द्याम्" इत्यनेन। समुदाहृतप्राचीनशंकरविजयश्लोकेन च तत्सान्निध्यस्य प्रतिपादितत्वात्, शिवरहस्यवचनस्यापि उपनीतस्तथा मात्रा इत्यस्य मात्रा गुरुकुलं प्रापितः इत्यर्थस्य सुवचत्वात् उपनीय दिवं गत इत्येव समञ्जसं भाति" इति। उपनयनं द्विप्रकारकं, प्रथमं ब्रह्मरूपगायत्र्युपदेशेन द्विजत्वापादनं, ब्रह्मणः समीप उपनयनम्, द्वितीयं कृतब्रह्मोपदेशस्य उपाकर्मणा वेदाध्ययनयोग्यत्वं लब्धवतः तदर्थकगुरुसमीपनयनं चेति। प्रथमं पिता चकार, द्वितीयं माता बन्धुवर्गश्चेति सङ्गतिरपि युक्ता स्यात्। २-३, कथासंग्रहपरौ श्लोकौ। विस्तृतिरुपरि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुमुहूर्ते सुनक्षत्रे सद्योगकरणांचिते ।
वासरे भासुरे भव्ये दिव्यलक्षणलक्षिते ॥ ९ ॥

व्रतनिष्ठोपनीतिं स समस्तैर्बन्धुभिर्युतः ।
कृतोपनीतिर्बालोऽपि हुतभुक्सूर्यतेजसा ॥ १० ॥

यथा व्यराजत तथादीव्यद् ब्राह्मेण तेजसा ।
दक्षिणा दीक्षितः सोऽपि वनीपकजनावनौ ॥ ११ ॥

पयोद इव सौवर्णीवृष्टीस्तुष्टो ववर्ष सः ।
अरुन्धतीसदृक्षाऽऽर्या दारास्तस्याग्रजन्मनः ॥ १२ ॥

माल्यैरानन्दयामास पुरन्ध्रीरति सत्वरम् ।
तोषयामास मृष्टान्नैर्देवता इव भक्तितः ॥ १३ ॥

वृषाचलेश्वरप्रीत्यै स्वच्छन्दं यच्छति स्म सा ।
पश्यतस्तस्य पुत्रास्यं सुधासूतिमिवोदितम् ॥ १४ ॥

पयोधेरिव कल्लोलाः प्रमदा न ममुर्हृदि ।

## शिवगुरोर्निर्याणम् ।

ततः परं स कुतुकी श्रीमान् शिवगुरुर्मखी ॥ १५ ॥

कदाचिदीश्वरे नित्ये सत्ये चित्तं निधाय सः ।
ध्यायन्नन्तः परं तत्वं स्थितवान्सुविनिश्चलः ॥ १६ ॥

पञ्चत्वमगमत्सद्यः कालो हि दुरतिक्रमः ।
वल्लभे पञ्चतां याते शोकविह्वलमानसा ॥ १७ ॥

---

(१०) युधिष्ठिरशके २६३६ चैत्रशुक्लनवम्यामुपनयनमिति विमर्शे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भार्या बालसुता वृद्धा रुरोद करुणं सती ।
क्रमेणाश्वासिता वृद्धैः शोकमुत्सृज्य सा ततः ॥ १८ ॥

सुतेन कारयामास संस्कारादिक्रियाः पितुः ।
स वत्सरान्तं दीक्षां च दधार विधिवत्पितुः ॥ १९ ॥

### श्रीशङ्करस्य गुरुकुलवासः ।

अधिजगे निगमांश्चतुरोऽपि स क्रमत एव गुरोः सषडङ्गकान् ।
अजनि विस्मितमत्र महामतौ द्विजसुतेऽल्पतनौ जनतामनः ॥

सहनिपाठ्युता वटवस्समं पठितुमैशत न द्विजसूनुना ।
अपि गुरुर्विशयं प्रतिपेदिवान् क इव पाठयितुं सहसा क्षमः ॥ २१ ॥

अत्र किं स यदशिक्षत सर्वान् चित्रमागमगणाननुवृत्तः ।
द्वित्रमासपठनादभवद्यत् तत्र तत्र गुरुणा समविद्यः ॥ २२ ॥

इत्थं विचित्ररूपतेजोगुणगांभीर्यादियुक्तः शैशवेऽपि प्राकृतमागधी-गीर्वाण्यादिसर्वभाषाकुशलः सरस्वतीविलास इव अपूर्वशङ्करः समवर्तत ॥ २३ ॥

षड्दर्शनमूलः इतिहासस्थाणुः निगमशाखः षडङ्गपल्लवः सूत्रपुष्पः मन्त्रशलाटुः ज्ञानफलः श्रीशङ्करः कल्पवृक्ष आसीत् ॥ २४ ॥

वेदे ब्रह्मसमः तदङ्गनिचये गर्गोपमस्तत्कथा-
तात्पर्यार्थविवेचने गुरुसमस्तत्कर्मसंसर्गणे (वर्णने) ।
आसीज्जैमिनिरेव तद्वचनजप्रोद्बोधकन्दे समो
व्यासेनैव मदीयसद्गुरुरसौ श्रीशङ्कराख्यः क्षितौ ॥ २५ ॥

---

(२५) माधवीये 'व्यासेनैव स मूर्तिमानिव नवो वाणी-विलासैर्वृतः' इति चतुर्थः पादः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अर्धेन्दुललाटः पूर्णेन्दुमुखः विशालवक्षाः आजानुबाहुः गुरुनितम्बः पीनोरुः गूढगुल्फः स्वल्पपादः, शोणनखः करपदमध्यस्थलेषु शङ्खचक्रादिचिह्नितः, शिरसि वामभागे त्रिशूलचिह्नः, दक्षिणभागे त्वर्धचन्द्रचिह्नः, समप्रमाणशिराः, मौञ्जीदण्डाजिनभूतिधारणभिक्षाटनादिभिः शास्त्रविधिरेवमनुष्ठेय इति सर्वमर्त्यान् बोधयन् शिष्यबोधनार्थमुपाध्यायानुज्ञावशात् ब्रह्मासने प्रागद्रौ बालभानुरिव, ब्रह्माण्डगोलके ध्रुव इव, जनककृतद्वादशवार्षिके सत्रे याज्ञवल्क्य इव, परीक्षिन्नरेन्द्रस्य ज्ञानबोधसमये शुक इव, मेरुमस्तके तपश्चर्याङ्गीकारोचिते व्यास इव, रामकथाप्रगातृत्वकाले वाल्मीकिरिव, भाष्योपदेशकाले पतञ्जलिरिव, देवानां शिक्षासमये सुराचार्य इव, नारदोपदेशकाले ब्रह्मेव समासीनः श्रीशङ्कराचार्यगुरुः अनेकशिष्याणां निगमादिसर्वशास्त्रप्रपञ्चस्य सदुपदेशमाचकार ॥

अद्वैतार्णवपूर्णचन्द्रमभिदापद्माटवीभास्करं
विद्वत्कोटिसमर्चितांघ्रियुगलं प्रद्वेषिकक्षानलम् ।
हृद्यामेद्यसमस्तवेदजनितप्रोद्यद्विवेकांकुरं
स्विद्यद्वागमृतं परात्परगुरुं श्रीशङ्करं तं भजे ॥ २७ ॥

आन्वीक्षिक्यैक्षि तन्त्रे परिचितिरतुला कापिले कापि लेभे
पीतं पातञ्जलांभः परमपि विदितं भाट्टघट्टार्थतत्त्वम् ।
यत्तैः सौख्यं तदस्यान्तरभवदमलाद्वैतविद्यासुखेऽस्मिन्
कूपे योऽर्थः स तीर्थे सुपयसि वितते हन्त नान्तर्भवेत्किम् ॥

## विप्रपत्न्या लक्ष्म्यनुग्रहप्रापणम्

स हि जातु गुरोः कुले वसन् सवयोभिः सह भैक्ष्यलिप्सया ।
भगवान्भवनं द्विजन्मनो धनहीनस्य विवेश कस्यचित् ॥ २९ ॥

तमवोचत तत्र सादरं वटुवर्यं गृहिणः कुटुम्बिनी ।
कृतिनो हि भवादृशेषु ये वरिवस्यां प्रतिपादयन्ति ते ॥ ३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधिना किल वञ्चिता वयं वितरीतुं वटवे न शक्नुमः ।
अपि भैक्षमकिञ्चनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ ३१ ॥

इति दीनमुदीरयन्त्यसौ प्रददावामलकं व्रतीन्दवे ।
करुणं वचनं निशम्य सोऽप्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥ ३२ ॥

स मुनिर्मुरभित्कुटुम्बिनीं पदचित्रैर्नवनीतकोमलैः ।
मधुरैरुपतस्थिवान् स्तवैर्द्विजदारिद्र्यदशानिवृत्तये ॥ ३३ ॥

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥

मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसंभवायाः ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे ।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥३६॥

गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति ।
सृष्टिस्थितिप्रलयकेलिषु सांस्थतायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै ।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥

संपत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये ॥

यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसंपदः ।
सन्तनोति वचनाङ्गमानसैः त्वां मुरारिहृदयेश्वरीं भजे ॥ ४० ॥

सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ ४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिग्घस्तिभिः कनककुम्भमुखावसृष्ट-
स्वर्वाहिनीविमलचारुजलाप्लुताङ्गीम् ।
प्रातर्नमामि जगतां जननीमशेष-
लोकाधिनाथगृहिणीममृताब्धिपुत्रीम् ॥ ४२ ॥

कमले कमलाक्षवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः ।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः ॥ ४३ ॥

अथ कैटभजित्कुटुम्बिनी तटिदुद्दामनिजाङ्गकान्तिभिः ।
सकलाश्च दिशः प्रकाशयन्त्यचिरादाविरभूत्तदग्रतः ॥ ४४ ॥

अभिवन्द्य सुरेन्द्रवन्दितं पदयुग्मं पुरतः कृताञ्जलिम् ।
ललितस्तुतिभिः प्रहर्षिता तमुवाच स्मितपूर्वकं वचः ॥ ४५ ॥

विदितं तव वत्स हृद्गतं कृतमेभिर्न पुराभवे शुभम् ।
अधुना मदपाङ्गपात्रतां कथमेते महितामवाप्नुयुः ॥ ४६ ॥

इति तद्वचनं स शुश्रुवान् निजगादाम्ब मयीदमर्पितम् ।
फलमद्य ददस्व तत्फलं दयनीयो यदि तेऽहमिन्दिरे ॥ ४७ ॥

अमुना वचनेन तोषिता कमला तद्भवनं समन्ततः ।
कनकामलकैरपूरयत् जनताया हृदयं च विस्मयैः ॥ ४८ ॥

अमरस्पृहणीयसंपदं द्विजवर्यस्य निवेशमात्मवान् ।
स विधाय यथापुरं गुरोः सविधे शास्त्रवराण्यशिक्षत ॥ ४९ ॥

सरहस्यसमग्रशिक्षिताखिलविद्यस्य यशस्विनो वपुः ।
उपमानकथाप्रसङ्गमप्यसहिष्णु श्रियमन्वपद्यत ॥ ५० ॥

---

(४८) एतत् ब्राह्मणगृहं कालटीतः नैरृत्यां १५ मीलदूरे फलोद्यान (पलं तोट्टं) ग्रामे स्वर्णगृहं (सुवर्णत्तु मन) इति प्रसिद्ध-मद्यापि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिहासपुराणभारतस्मृतिशास्त्राणि पुनः पुनर्मुदा ।
विबुधैः सुबुधो विलोकयन् सकलज्ञत्वपदं प्रपेदिवान् ॥ ५१ ॥

स पुनः पुनरैक्षतादराद्गुरवैयासिकशान्तिवाक्कृतीः ।
समगादुपशान्तिसंभवां सकलज्ञत्ववदेव शुद्धताम् ॥ ५२ ॥

## मातृशुश्रूषा ।

इति सप्तमहायनेऽखिलश्रुतिपारंगततां गतो वटुः ।
परिवृत्य गुरोः कुलाद्गृहे जननीं पर्यचरन्महायशाः ॥ ५३ ॥

परिचरन् जननीं निसर्गे पठन्नपि हुताशरवी सवनद्वयम् ।
मनुवैर्तियतं परिपूजयन् वटुरवर्तत संस्तरणिर्यथा* ॥ ५४ ॥

वटुमुद्वीक्ष्य युवाद्यपि न मन्युमान् दिशति वृद्धतमोऽपि निजासनम् * ।
अपि करोति जनः करयोर्युगं वशगतो विहिताञ्जलि तत्क्षणात् ॥५५॥

मृदु वचश्चरितं कुशलां मतिं वपुरनुत्तममास्पदमोजसाम् ।
सकलमेतदुदीक्ष्य सुतस्य सा सुखमवाप निरर्गलमम्बिका ॥ ५६ ॥

शङ्करशेखरनामाथ राजा तं द्विजशेखरम् ।
स्वसमर्च्य श्रावयामास स्वकृतं नाटकत्रयम् ॥ ५७ ॥

अनुजज्ञे गृहान् गन्तुमभिनन्द्य जनाधिपम् ।
दशापि नास्पृशत्तेन दत्तानि द्रविणानि सः ॥ ५८ ॥

दूरयानाक्षमां दृष्ट्वा जरया जननीमसौ ।
किञ्चिद्दूरगतां चूर्णीं निन्ये निजगृहान्तिकम् ।
अम्बापगेति चाख्याता तस्यां ककुभि सा नदी ॥ ५९ ॥

## नक्रग्रहणं सन्न्यासस्वीकरणं च ।

सा शङ्करस्य शरणं स च तज्जनन्याः
अन्योन्ययोगविरहस्त्वनयोरसह्यः ।

 CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोद्वोढुमिच्छति तथाप्यमनुष्यभावात्
मेरुं गतः किमभिवाञ्छति दुष्प्रदेशम् ॥ ६० ॥

स्नानार्थमेकदा तस्मिन्नवतीर्णे नदीजले ।
अग्रहीत्तीक्ष्णदंष्ट्रस्तं ग्राहः पादे महाबलः ॥ ६१ ॥

निजाक्रोशं समाकर्ण्य मातरं द्रुतमागताम् ।
सोऽब्रवीदम्ब मां नक्रो बलवानग्रहीत्पदे ॥ ६२ ॥

करवाणि किमम्बाहं कालो हि दुरतिक्रमः ।
अष्टमूर्तिरदाद्यन्मां अष्टवर्षैकजीवितम् ॥ ६३ ॥

विधिना विहितः कालो विषमोऽयमुपागतः ।
पुत्रकृत्यमकृत्वा मत्पुत्र यासि कथं न्विति ॥ ६४ ॥

उच्चकै रुदतीमेनामुवाच स पुनः सुधीः ।
चतुर्थमाश्रमं प्राप्य जन्मान्तरतयोदितम् ॥ ६५ ॥

पुत्रकृत्याय जीवामि पुनरष्टावहं समाः ।
सन्न्यासी भवितुं बुद्ध्या यदि निश्चिनुयामहम् ॥ ६६ ॥

मोक्ता मामयमह्नाय नात्र कार्या विचारणा ।
उक्तेति निजपुत्रेण तस्य जीवितकांक्षया ॥ ६७ ॥

साऽनुमेने च तत्तूर्णं सन्न्यस्तुं चात्मनाऽमुना ।
तया तथेत्यनुज्ञातः तपस्विन्या कथञ्चन ॥ ६८ ॥

सन्न्यस्तोऽहमिति प्राह सन्निरुध्येन्द्रियाणि सः ।
नैव निश्चितसन्न्यासः कुर्यात्कालविलम्बनम् ।
ततोऽद्यैव गमिष्यामि त्वां निधाय सुहृज्जने ॥ ६९ ॥

---

(६८) युधिष्ठिरशके २६३९-कार्तिकशुक्लैकादश्यां चतुर्थाश्रमस्वीकारः इति विमर्शे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातर्विधेयमनुशाधि यदत्र कार्यं सन्न्यासिना तद्धु करोमि न सन्दिहेऽहम्।
स्वाशने तव यथेष्टममी प्रदेयुः गृह्णन्ति ये धनमिदं मम पैतृकं यत् ॥ ७० ॥

देहेऽम्ब रोगवशगे च सनाभयोऽमी द्रक्ष्यन्ति शक्तिमनुसृत्य मृतिप्रसंगे।
अर्थंप्रहाज्जनभयाच्च यथाविधानं कुर्युश्च संस्कृतिममी न विभेयमीषत् ॥ ७१ ॥

यज्जीवितं जलचरस्य मुखात्तदिष्टं सन्न्याससंगरवशान्मम देहपाते।
संस्कारमेत्य विधिवत्कुरु शङ्कर त्वं नो चेत्प्रसूय मम किं फलमीरय त्वम् ॥

अह्नयम्ब रात्रिसमये समयान्तरे वा सञ्चिन्तय स्ववशगाऽवशगाऽथवा माम्।
एष्यामि तत्र समयं सकलं विहाय विश्वासमाप्नुहि मृतावथ संस्करिष्ये ॥ ७३ ॥

सन्न्यस्तवान् शिशुरयं विधवामनाथां क्षिप्त्वेति मां प्रति कदापि न चिन्तनीयम्।
यावन्मया स्थितिमता फलमापनीयं मातस्ततः शतगुणं फलमापयिष्ये ॥ ७४ ॥

इत्थं स मातरमनुग्रहणेच्छुरुक्त्वा प्रोचे सनाभिजनमेष विचक्षणाग्र्यः।
सन्न्यासकल्पितमना व्रजिताऽस्मि दूरं तां निक्षिपामि जननीमधवां भवत्सु ॥७५॥

एवं सनाभिजनमुत्तममुत्तमाग्र्यः श्रीमातृकार्यमभिभाष्य करद्वयेन।
संप्रार्थयन् स्वजननीं विनयेन तेषु न्यक्षेपयन्नयनजाम्बु निषिञ्चमानाम् ॥ ७६ ॥

ततो दिव्याम्बरधरस्तप्तचामीकरप्रभः।
देवभूयं गतो नक्रो दिवि तिष्ठन्नवोचत ॥ ७७ ॥

भवत्प्रसादान्मुक्तोऽस्मि भारतीप्रियशापतः।
क्षमस्व मन्तुमित्युक्त्वा क्षणादन्तरधत्त सः ॥ ७८ ॥

## श्रीकृष्णप्रतिष्ठा।

शङ्करः पुरतोऽपश्यत्कञ्चिदिन्दीवरत्विषम्।
महानुभावमूचे तं शङ्करं स महोनिधिम् ॥ ७९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अप्रमेयानुभाव त्वं वासुदेवं शिलामयम् ।
वसन्तमिह साधूनां रक्षणार्थमवेहि माम् ॥ ८० ॥

त्वया मातृहितं कर्तुं आनीतातिसमीपगा ।
मद्धामोर्मिकरैरेषा ताडयत्यनिशं नदी ॥ ८१ ॥

प्रतिवर्षं महावेगैरन्तर्गृहमुपागतैः ।
सलिलैश्चाल्यमानोऽस्या आसन्नपतनोऽस्म्यहम् ॥ ८२ ॥

प्रयाते भवति क्षिप्रं यास्याम्यहमपि ध्रुवम् ।
तस्माद्विधाय मद्रक्षां याहि काङ्क्षितसिद्धये ॥ ८३ ॥

इत्युक्तस्य शिलारूपं दोर्भ्यामुद्धृत्य तं शनैः ।
किञ्चिद्दूरं नदीतीरे नीत्वा चक्रे प्रतिष्ठितम् ।
अस्तौत्तं सुन्दरं कृष्णं वेद्यविश्वम्भरं प्रभुम् ॥ ८४ ॥

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥ ८५ ॥
कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ८६ ॥
धेनुकारिष्टहाऽनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः ।
पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ८७ ॥
विद्युदुद्योतवत्प्रस्फुरद्वाससं प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥ ८८ ॥
कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कणप्रोज्ज्वलं किङ्किणीमञ्जुलं श्यामलं तं भजे ॥ ८९ ॥

तस्माज्जनन्योस्स ततो लब्ध्वानुज्ञां नतोऽप्युभौ ।
शङ्करोऽतीव निस्सङ्गः सन्न्यासाय जगाम सः ॥ ९० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पथि चात्मानमद्वन्द्वं निराकारं निरञ्जनम् ।
नित्यमुक्तं नित्यशुद्धं शिवं दध्यौ यतेन्द्रियः ॥ ९१ ॥

नाहं देहो नेन्द्रियाण्यन्तरङ्गो नाहंकारः प्राणवर्गो न बुद्धिः ।
दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥९२॥

रज्ज्वज्ञानाद्भाति रज्जौ यथाऽहिः
स्वात्माज्ञानादात्मनो जीवभावः ।
आप्तोक्त्याहिभ्रान्तिनाशे स रज्जुः
जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥ ९३ ॥

नाहं जातो न प्रवृद्धो न नष्टो देहस्योक्ताः प्राकृताः सर्वधर्माः ।
मत्तो नान्यत्किञ्चिदत्रास्ति विश्वं सत्यं बाह्यं वस्तु मायोपक्लृप्तम् ॥९४॥

गुरोश्चरणसेवाया अन्यत्र कृतकृत्यताम् ।
आत्मानुभवसिद्धिश्चापश्यन्नन्वैष्ट तं गुरुम् ॥ ९५ ॥

शङ्कारूपेण मच्चित्तं पङ्कीकृतमभूद्यया ।
सा माया किङ्करी यस्य शङ्कराचार्यमाश्रये ॥ ९६ ॥

इति श्रीशङ्करविजयमकरन्दे अष्टम आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ नवम आस्वादः ॥

**श्रीगोविन्दभगवत्पूज्यपादेभ्यः क्रमसन्न्यासाश्रमस्वीकारः ।**

**प्रतिचन्द्रभवं निवृत्तिधर्मा श्रितगोविन्दमुनेरवाप्तधर्मा ।**
**जयतात्कृतसूत्रभाष्यकर्मा स्वयमन्तेवसतां विनीर्णशर्मा ॥**

कृष्णात्स्वमातुरपि भक्तिवशादनुज्ञामादाय संसृतिमहाब्धिविरक्तिभाक् सः ।
गन्तुं मनो व्यधित सन्न्यसनाय दूरं किं नौस्थितः पतितुमिच्छति वारिराशौ ॥

यस्तारकं प्रददते सनकादियोगिविन्द्याकृतिः स शिव आदिगुरुः प्रतीतः ।
नारायणस्तत उदञ्चिततत्त्वबोधः पद्मासनोऽथ तदनुग्रहभाग्बभूव ॥ ३ ॥

छात्रो वसिष्ठमुनिरस्य स यो व्यजेष्ट ब्राह्मं बलं प्रकटयन्कुशिकात्मजातम् ।
शिष्योऽस्य शक्तिरभवद्धृतमन्त्रशक्तिः शिष्यः पराशरमुनिः समभूदमुष्य ॥

विख्यातिमान्समभवत्तत आत्तबोधो व्यासो महर्षिरपि यो विबभाज वेदान् ।
अष्टादशापि च पुराणगिरः समस्ताः येनाखिलैकगुरुणैव जगत्सु रेजुः ॥ ५ ॥

---

**सङ्कलने मूलम्—जगद्गुरुरत्नमालास्तोत्रतः १, माधवीयतः २, १०-१२, १६-२१, २७, व्यासाचलीयतः २, गुरुवंशकाव्यतः ३-९, पतञ्जलिविजयतः १०-११, १६-१९, २७, सदानन्दीयतः १३-१४, ४७-४९, प्राचीनशङ्करविजयतः १५, दशश्लोकीतः २२-२६, गुरुपादुकापञ्चकस्तोत्रतः २९-३३, योगतारावलीतः ३४, स्वात्मनिरूपणतः ३५, विवेकचूडामणितः ३६-३७, ४०-४३; शङ्कराभ्युदयतः ४४, ४६, गोविन्दनाथीयतः ४५, भगवत्पादसप्ततितः ५०. [३-९ सदाशिवसमारम्भाया गुरुपंक्तेरत्र स्मरणम्] ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येनाद्भुता विरचिता वरसूत्रमाला ब्रह्मावबोधिवचनार्थमणीगणाढ्या ।
भाष्यं व्यधायि च पतञ्जलिभाषितस्य येन व्यभासि भुवि भारतवाक्यसारः ॥ ६ ॥

तद्वाक्यकल्पतरुसंभवतत्त्वबोधभूयःफलग्रहकृते शुकवत्प्रवर्ण्यः ।
योगी शुकोऽस्य वरशिष्य उदैदुदारो यद्ब्रह्मचर्यमखिलाप्सरसोऽतियात* ॥ ७ ॥

श्रीगौडपादमुनिरस्य विभासते स्म छात्रोऽजयिष्ट विबुधानपि गौडगान् यः ।
तत्त्वोपदेशविषयान् विदधे प्रबन्धान् आचार्य आद्यविदितोऽत्र महान् हि पंक्तौ ॥

गोविन्दपादमुनिरस्य चकास्ति शिष्यो यस्यावभाति भगवत्पदमन्वितार्थम् ।
विन्दन् य उत्तमगवीर्विहितार्थनामा ज्ञेयान्यवैतुममुमेमि नमञ्जसेति ॥ ९ ॥

इत्थं विचिन्त्य सरितो नगराणि शैलान्*
ग्रामान् जनानपि पशून् पथि सोऽपि पश्यन् ।
नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ १० ॥

दण्डान्वितेन धृतरागनवाम्बरेण गोविन्दनाथवनमिन्दुभवातटस्थम् ।
तेन प्रविष्टमजनिष्ट दिनावसाने चण्डत्विषा च शिखरं चरमाचलस्य ॥ ११ ॥

तीरद्रुमागतमरुद्विगतश्रमः सन् गोविन्दनाथवनमध्यतलं व्यलोके ।
शंसन्ति यत्र तरवो वसतिं मुनीनां शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः ॥ १२ ॥

तपोवने प्रविष्टोऽसौ कंचित्संपृष्टवान्मुनिम् ।
गोविन्दपूज्यपादानामाश्रमः कुत्र भो मुने ॥ १३ ॥

पृष्टः सन्दर्शयामास गोविन्दस्वामिनां गुहाम् ।
दृष्ट्वैव दूरतो भक्त्या दण्डवत्प्रणनाम सः ॥ १४ ॥

---

(११) गोविन्दभगवत्पादैः समागमः काश्यां बदर्यां च केषुचित् वर्ण्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोविन्दमाश्रयदहीन्द्रमहावतारमारात्तुषारकरदेहभुवस्तटिन्याः ।
अध्यात्मजेन गलितात्मभवाभिमानेनाराधितं च हरिणा नियमं श्रितेन ॥ १५ ॥

आदेशमेकमनुयोक्तुमयं व्यवस्यन् प्रादेशमात्रविवरप्रतिहारभाजम् ।
तत्र स्थितेन कथितां यमिनां गणेन गोविन्ददेशिकगुहां कुतुकी ददर्श ॥ १६ ॥

तस्याः प्रपन्नपरितोषदुहो गुहायाः स त्रिः प्रदक्षिणपरिक्रमणं विधाय ।
द्वारं प्रति प्रणिपतन् जपतां पुरोगं तुष्टाव तुष्टहृदयस्तमपास्तशोकम् ॥ १७ ॥

पर्यंकतां भजति यः पतगेन्द्रकेतोः पादाङ्गदत्वमथवा परमेश्वरस्य ।
तस्यैव मूर्ध्नि धृतसाब्धिमहीध्रभूमेः शेषस्य विग्रहमशेषमहं भजे त्वाम् ॥ १८ ॥

दृष्ट्वा पुनर्निजसहस्रमुखीमभैषुः अन्तेवसन्त इति तामपहाय भूयः ।
एकाननेन भुवि यस्त्ववतीर्य शिष्यान् अन्वग्रहीत् ननु स एव पतञ्जलिस्त्वम् ॥

तमखिलगुणपूर्णं व्यासपुत्रस्य शिष्यात् अविगतपरमार्थं गौडपादान्महर्षेः ।
अधिजिगमिषुरेष ब्रह्मसंस्थामहं त्वां प्रसृमरमहिमानं प्रापमेकान्तभक्त्या ॥ २० ॥

तस्मिन्निति स्तुवति कस्त्वमिति ब्रुवन्तं दिष्ट्या समाधिपथरुद्धविसृष्टचित्तम् ।
गोविन्ददेशिकमुवाच तदा स वाग्भिः प्राचीनपुण्यजनितात्मविबोधचिह्नैः ॥ २१ ॥

न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनेकान्तिकत्वात् सुषुप्त्येकसिद्धः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहंममाध्यासहानात् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वाऽपरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूपः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

न जाग्रन्न मे स्वप्नको वा सुषुप्तिः न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीयः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चैकं तदन्यद् द्वितीयं कुतः स्यात् न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात् कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ २६ ॥

आकर्ण्य शङ्करमुनेर्वचनं तदित्थं अद्वैतदर्शनसमुत्थमुपात्तहर्षः ।
स प्राह शङ्कर स शङ्कर एव साक्षात् जातस्त्वमित्यहमवैमि समाधिनेति ॥

तस्योपदर्शितवतश्चरणावथ शङ्करः ।
अपूजयद्गुहाद्वारे प्रणनाम पुनः पुनः ॥ २८ ॥

जगज्जनिस्थेमलयालयाभ्यां अगण्यपुण्योदयभाविताभ्याम् ।
त्रयीशिरोजातनिवेदिताभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥ २९ ॥

विपत्तमस्तोमविकर्तनाभ्यां विशिष्टसंपत्तिविवर्धनाभ्याम् ।
नमज्जनाशेषविशेषदाभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ३० ॥

समस्तदुस्तर्ककलङ्कपङ्कापनोदनप्रौढजलाशयाभ्याम् ।
निराश्रयाभ्यां निखिलाश्रयाभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥

तापत्रयादित्यकरार्दितानां छायामयीभ्यामतिशीतलाभ्याम् ।
आपन्नसंरक्षणदीक्षिताभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ३२ ॥

यतो गिरोऽप्राप्य धिया समस्ताः ह्रिया निवृत्ताः सममेव नित्याः ॥
ताभ्यामजेशाच्युतभाविताभ्यां नमो नमः श्रीगुरुपादुकाभ्याम् ॥ ३३ ॥

वन्दे गुरूणां चरणारविन्दे सन्दर्शितस्वात्मसुखावबोधे ।
जनस्य ये जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै ॥ ३४ ॥

श्रीगुरुचरणद्वन्द्वं वन्देऽहं मथितदुस्सहद्वन्द्वम् ।
भ्रान्तिग्रहोपशान्तिं पांसुमयं यस्य भसितमातनुते ॥ ३५ ॥

स्वामिन्नमस्ते नतलोकबन्धो कारुण्यसिन्धो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या ऋज्व्यातिकारुण्यसुधाभिवृष्ट्या ॥ ३६ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मानन्दसुधानुभूतिकलितैः पूतैः सुशीतैः सितैः
युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ।
सन्तप्तं भवतापदावदहनज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः ॥३७॥

अर्थितो हृदयस्पृग्भिर्वाग्भिर्गोविन्दसंयमी ।
चिरात्प्रतीक्षितं शिष्यं द्रष्टुं बहिरुपाययौ ॥ ३८ ॥

दृष्ट्वा संयमिनं दीप्ततेजसं धूर्जटिप्रभम् ।
धृत्या शान्त्या विनीत्याऽथ नियमेन बुभुत्सया ॥ ३९ ॥

अर्हं पारमहंस्याय जगाम परमां मुदम् ।
धन्योऽसि कृतकृत्योऽसि पावितं ते कुलं त्वया ॥ ४० ॥

यदविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि ।
अविद्याकामकर्मादिपाशबन्धं विमोचितुम् ॥ ४१ ॥

कः शक्नुयाद्विनाऽऽत्मानं कल्पकोटिशतैरपि ।
न योगेन न सांख्येन कर्मणा नो न विद्यया ॥ ४२ ॥

ब्रह्मात्मैकत्वबोधेन मोक्षः सिध्यति नान्यथा ।
इति ब्रुवाणं योगीन्द्रं भक्त्या पर्यचरद्यतिः ॥ ४३ ॥

तस्य प्रसादमासाद्य तत्तादृशदयानिधेः ।
सन्न्यासगृह्यविहितं सर्वं कर्माचरत्सुधीः ॥ ४४ ॥

ततो विहितसन्न्यासो यथावज्जगृहे ततः ।
सर्वं यतिजनैर्ग्राह्यमुपदेशं महत्तरम् ॥ ४५ ॥

---

(४५) युधिष्ठिरशके २६४० फाल्गुनशुक्लद्वितीयायां श्रीमद्गोविन्दभगवत्पूज्यपादाचार्याणां सकाशादुपदेशः इति विमर्शे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृष्णद्वैपायनाचार्यकृतसूत्रानुरोधतः ।
कृतिं तं नित्यवाङ्मौलिं कृत्स्नमस्मादबुद्ध सः ॥ ४६ ॥

जगृहे ब्रह्मतां स्वस्मिन् आचार्यवचसा क्रमात् ।
तत्त्वमस्यादिभिर्वाक्यैः संप्रदायानुसारतः ॥ ४७ ॥

परहंसोचितां चर्यामङ्गीकृत्य स्वयं शिवः ।
ब्रह्मैवास्मीति निश्चित्य सर्वत्रासङ्गतामधात् ॥ ४८ ॥

क्षीरं ब्रह्म जगन्नीरं हंसवृत्त्या प्रदर्शयन् ।
श्रीगुरोरर्चयन्नंघ्रिं वसन्निन्दुभवातटे ।
वार्षिकांश्चतुरो मासान्नीतवान् ध्यानयोगतः ॥ ४९ ॥

बध्नीमो यमिनां वराय बहुधा तस्मै प्रणामाञ्जलिं
पुंसः पादनतस्य मोहविरतिं निर्माय निर्माययया ।
दृष्ट्या शीतलया दयासरसया बन्धं निराकुर्वते
प्रत्यक्तत्त्वमवाप्य सर्वगुणसान्निध्याय निध्यायते ॥ ५० ॥

इति श्रीशङ्करविजयमकरन्दे नवम आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ॥ दशम आस्वादः ॥



## चातुर्मास्यानुष्ठानम् ।

शङ्करा श्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥ १ ॥

हंसभावमधिगत्य सुधीन्द्रं तं समर्चति च संसृतिमुक्त्यै ।
सञ्चचाल कथयन्निव मेघश्चञ्चलाचपलतां विषयेषु ॥ २ ॥

प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते ।
अतस्तेषामहिंसार्थं तिष्ठत्येकत्र संयमी ॥ ३ ॥

गुरोः सकाशे वर्तेत तस्य शुश्रूषणे रतः ।
अधिगन्तुं वेदशीर्षोदितमात्मनिरूपणम् ॥ ४ ॥

ध्यातुं धारणया तच्च स्थिरीकर्तुं समाधिना ।
ब्रह्मात्मैक्यानुभावाय समयोऽयं प्रशस्यते ॥ ५ ॥

असति प्रतिबन्धे तु मासान्वै वार्षिकानिह ।
वसेयमिति संकल्पः चातुर्मास्यव्रतोदितः ॥ ६ ॥

माधवश्चतुरो मासान् सर्वभूतहिताय वै ।
स्वापं यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः ॥ ७ ॥

सुप्तश्चैवोत्थितो यावत् न भवेत्स सनातनः ।
यतिरेकत्र निवसेत् सर्वभूतहिताय वै ॥ ८ ॥

---

संकलने मूलम्-ब्रह्मविद्याभरणतः १, माधवीयतः २, १०, ८९, वैद्यनाथदीक्षितीयतः ३-८, निर्वाणषट्कतः १२-१३, अद्वैतानुभूतितः १४-८२, ब्रह्मानुचिन्तनतः ८३-८४, सदाचारानुसन्धानतः ८५-८७ गुरुवंशकाव्यतः ९०, पोलगं रामशास्त्रिकृतशतश्लोकीतः ९१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेवातीरेऽवसन् सर्वे गोविन्दाद्या यतीश्वराः।
शङ्करोऽपि च तान् भक्त्या मुदा पर्यचरत्तदा ॥ ९ ॥

### निदिध्यासनम्।

रंहसाऽथ ससृजुर्जलधाराः वारिदा गगनधाम पिधाय।*
शङ्करो हृदयमात्मनि कृत्वा सञ्जहार सकलेन्द्रियवृत्तीः ॥ १० ॥

विवेकतुरगारूढो रम्यौपनिषदे पथि।
गुर्वादेशप्रग्रहश्च चचारैवं समाहितः ॥ ११ ॥

मनो बुद्ध्यहङ्कारचित्तानि नाहं न कर्णं न जिह्वा न च घ्राणनेत्रे।
न च व्योम भूमिर्न तेजो न वायुः चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥

अहं निर्विकल्पो निराकाररूपो विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम्।
न चासंगतो नैव मुक्तिर्न बन्धः चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥

अहमानन्दसत्यादिलक्षणः केवलः शिवः।
अनानन्दादिरूपं यत्तन्नाहमचलोऽव्ययः ॥ १४ ॥

अक्षिदोषाद्यथैकोऽपि द्वयवद्भाति चन्द्रमाः।
एकोऽप्यात्मा तथा भाति द्वयवन्मायया मृषा ॥ १५ ॥

अक्षिदोषविहीनानां एक एव यथा शशी।
मायादोषविहीनानां आत्मैवैकस्तथा सदा ॥ १६ ॥

आत्मनः कार्यमाकाशो विनाऽऽत्मानं न संभवेत्।
कार्यस्य पूर्णता सिद्धा किं पुनः पूर्णताऽऽत्मनः ॥ १७ ॥

---

(१४-८२) अद्वैतानुभूतौ वर्षाकालि सहजतया दृश्यमानानां मेघ-करक-जलबुद्बुद-जलकुम्भाद्युदाहरणानां मननेन तत्त्वानुसन्धानं स्वरसम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेघयोगाद्यथा नीरं करकाकारतामियात् ।
मायायोगात्तथैवात्मा प्रपञ्चाकारतामियात् ॥ १८ ॥

वर्षोपल इवाभाति नीरमेवाभ्रयोगतः ।
वर्षोपलविनाशेन नीरनाशो यथा नहि ॥ १९ ॥

आत्मैवायं तथा भाति मायायोगात् प्रपञ्चवत् ।
प्रपञ्चस्य विनाशेन स्वात्मनाशो न हि क्वचित् ॥ २० ॥

जलादन्य इवाभाति जलोत्थो बुद्बुदो यथा ।
तथाऽऽत्मनः पृथगिव प्रपञ्चोऽयमनेकधा ॥ २१ ॥

यथा बुद्बुदनाशेन जलनाशो न कर्हिचित् ।
तथा प्रपञ्चनाशेन नाशः स्यादात्मनो न हि ॥ २२ ॥

अहिनिर्ल्वयनीजातः शुच्यादिर्नाहिमाप्नुयात् ।
तथा स्थूलादिसंभूतः शुच्यादिर्नाप्नुयादिमम् ॥ २३ ॥

त्यक्तां त्वचमहिर्यद्वत आत्मत्वेन न मन्यते ।
आत्मत्वेन सदा ज्ञानी त्यक्तदेहत्रयं तथा ॥ २४ ॥

अहिनिर्ल्वयनीनाशादहेर्नाशो यथा न हि ।
देहत्रयविनाशेन नात्मनाशस्तथा भवेत् ॥ २५ ॥

तक्रादि लवणोपेतं अज्ञैर्लवणवद्यथा ।
आत्मा स्थूलादिसंयुक्तो दृश्यते स्थूलकादिवत् ॥ २६ ॥

अयःकाष्ठादिकं यद्वद् वह्निवद् वह्नियोगतः ।
भाति स्थूलादिकं सर्वमात्मवत् स्वात्मयोगतः ॥ २७ ॥

दाहको नैव दाह्यं स्यात् दाह्यं तद्वन्न दाहकः ।
नैवात्मायमनात्मा स्यात् अनात्मायं न चात्मकः ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानुस्फुरणतो यद्वत्स्फुरतीव घटादिकम् ।
स्फुरतीव प्रमेयादिरात्मस्फुरणतस्तथा ॥ २९ ॥

नानाविधेषु कुम्भेषु वसत्येकं नभो यथा ।
नानाविधेषु देहेषु तद्वदेको वसाम्यहम् ॥ ३० ॥

नानाविधत्वं कुम्भानां न यात्येव यथा नभः ।
नानाविधत्वं देहानां तद्वदेव न याम्यहम् ॥ ३१ ॥

यथा घटेषु नष्टेषु घटाकाशो न नश्यति ।
तथा देहेषु नष्टेषु नैव नश्यामि सर्वगः ॥ ३२ ॥

उत्तमादीनि पुष्पाणि वर्तन्ते सूत्रके यथा ।
उत्तमाद्यास्तथा देहा वर्तन्ते मयि सर्वदा ॥ ३३ ॥

यथा न संस्पृशेत्सूत्रं पुष्पाणामुत्तमादिता ।
तथा नैकं सर्वगं मां देहानामुत्तमादिता ॥ ३४ ॥

पुष्पेषु तेषु नष्टेषु यद्वत्सूत्रं न नश्यति ।
तथा देहेषु नष्टेषु नैव नश्याम्यहं सदा ॥ ३५ ॥

पर्यङ्करज्जुरन्ध्रेषु नानेवैकापि सूर्यभा ।
एकोऽप्यनेकवद्भाति तथा क्षेत्रेषु सर्वगः ॥ ३६ ॥

रज्जुरन्ध्रस्थदोषादि सूर्यभा न स्पृशेद्यथा ।
तथा क्षेत्रस्थदोषादि सर्वगं मां न संस्पृशेत् ॥ ३७ ॥

तद्रज्जुरन्ध्रनाशेषु नैव नश्यति सूर्यभा ।
तथा क्षेत्रविनाशेषु नैव नश्यामि सर्वगः ॥ ३८ ॥

देहो नाहं प्रदृश्यत्वात् भौतिकत्वान्न चेन्द्रियम् ।
प्राणो नाहमनेकत्वात् मनो नाहं चलत्वतः ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिर्नाहं विकारित्वात् तमो नाहं जडत्वतः ।
देहेन्द्रियादिकं नाहं विनाशित्वाद्घटादिवत् ॥ ४० ॥

देहेन्द्रियप्राणमनोबुद्ध्यज्ञानानि भासयन् ।
अहङ्कारं तथा भामि चैतेषामभिमानिनम् ॥ ४१ ॥

सर्वं जगदिदं नाहं विषयत्वादिदंधियः ।
अहं नाहं सुषुप्त्यादावहमः साक्षितः सदा । ४२ ॥

सुप्तौ यथा निर्विकारः तथाऽवस्थाद्वयेऽपि च ।
द्वयोर्मात्राभियोगेन विकारीव विभाम्यहम् ॥ ४३ ॥

उपाधिनीलरक्ताद्यैः स्फटिको नैव लिप्यते ।
तथाऽऽत्मा कोशजैः सर्वैः कामाद्यैर्नैव लिप्यते ॥ ४४ ॥

कालेन भ्राम्यमाणेन भ्रमतीव यथा मही ।
अणोऽप्यात्मा विमूढेन चलतीव प्रदृश्यते ॥ ४५ ॥

देहत्रयमिदं नित्यमात्मत्वेनाभिमन्यते ।
यावत्तावदयं मूढो नानायोनिषु जायते ॥ ४६ ॥

निद्रादेहजदुःखादिः जाग्रद्देहं न संस्पृशेत् ।
जाग्रद्देहजदुःखादिस्तथाऽऽत्मानं न संस्पृशेत् ॥ ४७ ॥

जाग्रद्देहवदाभाति निद्रादेहस्तु निद्रया ।
निद्रादेहविनाशेन जाग्रद्देहो न नश्यति ॥ ४८ ॥

तथायमात्मवद्भाति जाग्रद्देहस्तु जागरात् ।
जाग्रद्देहविनाशेन नात्मा नश्यति कर्हिचित् ॥ ४९ ॥

हित्वाऽयं स्वाप्निकं देहं जाग्रद्देहमपेक्षते ।
जाग्रद्देहप्रबुद्धोऽयं हित्वाऽऽत्मानं यथा तथा ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वप्नभोगे यथैवेच्छा प्रबुद्धस्य न विद्यते ।
असत्स्वर्गादिके भोगे नैवेच्छा ज्ञानिनस्तथा ॥ ५१ ॥

तोयाश्रयेषु सर्वेषु भानुरेकोऽप्यनेकवत् ।
एकोऽप्यात्मा तथा भाति सर्वक्षेत्रेष्वनेकवत् ॥ ५२ ॥

भानोरन्य इवाभाति जलभानुर्जले यथा ।
आत्मनोऽन्य इवाभासो भाति बुद्धौ तथाऽऽत्मनः ॥ ५३ ॥

बिम्बं विना यथा नीरे प्रतिबिम्बो भवेत्कथम् ।
विनाऽऽत्मानं तथा बुद्धौ चिदाभासो भवेत्कथम् ॥ ५४ ॥

प्रतिबिम्बचलत्वाद्या यथा बिम्बस्य कर्हिचित् ।
न भवेयुस्तथाऽऽभासकर्तृत्वाद्यास्तु नात्मनः ॥ ५५ ॥

जले शैत्यादिकं यद्वज्जलभानुं न संस्पृशेत् ।
बुद्धेः कर्मादिकं तद्वच्चिदाभासं न संस्पृशेत् ॥ ५६ ॥

बुद्धेः कर्तृत्वभोक्तृत्वदुःखित्वाद्यैस्तु संयुतः ।
चिदाभासो विकारीव शरावस्थांबुभानुवत् ॥ ५७ ॥

शरावस्थोदके नष्टे तत्स्थो भानुर्विनष्टवत् ।
बुद्धेर्लये तथा सुप्तौ नष्टवत्प्रतिभात्ययम् ॥ ५८ ॥

जलस्थार्कं जलं चोर्मिं भासयन्भाति भास्करः ।
आत्माभासं धियं बुद्धेः कर्तृत्वादीनयं तथा ॥ ५९ ॥

मेघावभासको भानुर्मेघच्छन्नोऽवभासते ।
मोहावभासकस्तद्वत् मोहच्छन्नो विभात्ययम् ॥ ६० ॥

भास्यं मेघादिकं भानुर्भासयन् प्रतिभासते ।
तथा स्थूलादिकं भास्यं भासयन् प्रतिभात्ययम् ॥ ६१ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वप्रकाशको भानुः प्रकाश्यैर्नैव दृश्यते ।
सर्वप्रकाशको ह्यात्मा सर्वैस्तद्वन्न दृश्यते ॥ ६२ ॥

मुकुरस्थं मुखं यद्वन्मुखवत्प्रथते मृषा ।
बुद्धिस्थाभासकस्तद्वत् आत्मवत्प्रथते मृषा ॥ ६३ ॥

मुकुरस्थस्य नाशेन मुखनाशो भवेत्कथम् ।
बुद्धिस्थाभासनाशेन नाशो नैवात्मनः क्वचित् ॥ ६४ ॥

ताम्रकल्पितदेवादिः ताम्रादन्य इव स्फुरेत् ।
प्रतिभास्यादिरूपेण तथात्मोत्थमिदं जगत् ॥ ६५ ॥

ईशजीवात्मवद्भाति यथैकमपि ताम्रकम् ।
एकोऽप्यात्मा तथैवायमीशजीवादिवन्मृषा ॥ ६६ ॥

यथेश्वरादिनाशेन ताम्रनाशो न विद्यते ।
तथेश्वरादिनाशेन नाशो नैवात्मनः सदा ॥ ६७ ॥

अध्यस्तो रज्जुसर्पोऽयं सत्यवद्रज्जुसत्तया ।
तथा जगदिदं भाति सत्यवत्स्वात्मसत्तया ॥ ६८ ॥

अध्यस्ताहेरभावेन रज्जुरेवावशिष्यते ।
तथा जगदभावेन सदात्मैवावशिष्यते ॥ ६९ ॥

स्फटिके रक्तता यद्वदुपाधेर्नीलताऽम्बरे ।
यथा जगदिदं भाति तथा सत्यमिवाद्वये ॥ ७० ॥

जीवेश्वरादिभावेन भेदं पश्यन्ति मूढधीः ।
निर्भेदे निर्विशेषेऽस्मिन् कथं भेदो भवेद्ध्रुवम् ॥ ७१ ॥

लिङ्गस्य धारणादेव शिवोऽयं जीवतां व्रजेत् ।
लिङ्गनाशे शिवस्यास्य जीवतावेद्यता कुतः ॥ ७२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिव एव सदा जीवो जीव एव सदा शिवः ।
वेत्त्यैक्यमनयोर्यस्तु स आत्मज्ञो न चेतरः ॥ ७३ ॥

क्षीरयोगाद्यथा नीरं क्षीरवद्दृश्यते मृषा ।
आत्मयोगादनात्मायं आत्मवद्दृश्यते मृषा ॥ ७४ ॥

नीरात्क्षीरं पृथक्कृत्य हंसो भवति नान्यथा ।
स्थूलादेः स्वं पृथक्कृत्य मुक्तो भवति नान्यथा ॥ ७५ ॥

अध्यस्तश्चोरजः स्थाणोर्विकारः स्यान्न हि क्वचित् ।
नात्मनो निर्विकारस्य विकारो विश्वजस्तथा ॥ ७६ ॥

ज्ञाते स्थाणौ कुतश्चोरः चोराभावे भयं कुतः ।
ज्ञाते स्वस्मिन् कुतो विश्वं विश्वाभावे कुतोऽखिलम् ॥७७॥

गुणवृत्तित्रयं भाति परस्परविलक्षणम् ।
सत्यात्मलक्षणे यस्मिन् स एवाहं निरंशकः ॥ ७८ ॥

देहत्रयमिदं भाति यस्मिन्ब्रह्मणि सत्यवत् ।
तदेवाहं परं ब्रह्म देहत्रयविलक्षणः ॥ ७९ ॥

जाग्रदादित्रयं यस्मिन् प्रत्यगात्मनि सत्यवत् ।
स एवाहं परं ब्रह्म जाग्रदादिविलक्षणः ॥ ८० ॥

विश्वादिकत्रयं यस्मिन्परमात्मनि सत्यवत् ।
स एव परमात्माहं विश्वादिकविलक्षणः ॥ ८१ ॥

विराडादित्रयं भाति यस्मिन्साक्षिणि सत्यवत् ।
स एव सच्चिदानन्दलक्षणोऽहं स्वयंप्रभः ॥ ८२ ॥

अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ।
अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ॥ ८३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ।
एकमेवाद्वितीयं वै ब्रह्मणो नेह किञ्चन ॥ ८४ ॥

सदानन्दे चिदाकाशे माया मेघस्तटिन्मनः ।
अहन्ता गर्जनं तत्र धारासारा हि वृत्तयः ॥ ८५ ॥

महामोहान्धकारेऽस्मिन देवो वर्षति लीलया ।
तस्या वृत्तेर्विरामाय प्रबोधैकसमीरणः ॥ ८६ ॥

अतीतानागतं किञ्चिन्न स्मरामि न चिन्तये ।
रागद्वेषं विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥ ८७ ॥

श्रवणान्मननाद् ध्यानात् निनायेत्थं प्रतिक्षणम् ।
ब्रह्माहमित्यनुभवन् सच्चिदानन्दलक्षणम् ॥ ८८ ॥

सांप्रदायिकपराशरपुत्रप्रोक्तसूत्रमतगत्यनुरोधात् ।
शास्त्रगूढहृदयं हि दयालोः कृत्स्नमप्ययमबुद्ध सुबुद्धिः ॥ ८९ ॥

वैराग्यभाग्यभरयोग्यसुनिर्मलात्मा धीराग्रगण्यगुणविद्गुरुहर्षदायी ।
द्वैपायनाभिहितसूत्रसमूहशास्त्रं जग्राह तस्य वचनैरखिलं च वेदम् ॥

मिथुनीकृतसत्यानृतविद्याविद्याद्वयीविषयौ ।
ब्रह्मजगती पयोऽम्बुवदिह विभजन्तं भजे परमहंसम् ॥ ९१ ॥

इति श्रीशङ्करविजयमकरन्दे दशम आस्वादः समाप्तः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ॥ एकादश आस्वादः ॥

---

## नर्मदापूरनिग्रहः ।

सर्वतन्त्रस्वतन्त्राय सदात्माद्वैतरूपिणे ।
श्रीमते शङ्करार्याय वेदान्तगुरवे नमः ॥ १ ॥

प्राणभृत्प्रचरणप्रतिकूले नीलनीलघनशालिनि काले ।
अध्युवास तटमिन्दुभवायाः सुध्युपास्यचरणं गुरुमर्चन् ॥ २ ॥

त्रस्तमर्त्यगणमस्तमिताशं हस्तिहस्तपृथुलोदकधाराः ।
मुञ्चति स्म समुदञ्चितविद्युत् पञ्चरात्रमहिशत्रुरजस्रम् ॥ ३ ॥

तीरभूरुहततीरपकर्षन् आश्रमोटजगणैः सह पूरः ।*
आययावधिकघोषमनल्पः कल्पवार्धिलहरीव तटिन्याः ॥ ४ ॥

गोविन्दं ध्याननिष्ठायां मग्नं दृष्ट्वा गुरुं यतिः ।
विघ्नरूपं नदीशब्दं समाधौ संविचार्य च ॥ ५ ॥

गुरौ समाधिगे मौनिजनदुःखशमाय च ।
स्ववेगनिग्रहं कर्तुं प्रार्थयामास नर्मदाम् ॥ ६ ॥

---

सङ्कलने मूलम्–शङ्करमन्दारसौरभसमीरतः १ माधवीयतः २-४, ११-१४, २६-३२, नर्मदाष्टकतः ७-९, काशीपञ्चकतः ३५-३८, मणिकर्णिकाष्टकतः ३९-४०, ४६-४७, सदानन्दीयतः ४१, ४८, ४९, ६१, ७०-७२, गङ्गाष्टकतः ४२-४४, द्वादशलिङ्गस्तोत्रतः; ५०, वेदसारशिवस्तोत्रतः ५१-५३, शिवनामावल्यष्टकतः ५४-५५ः शिवपञ्चाक्षरस्तोत्रतः ५६-६०, अन्नपूर्णाष्टकतः ६२-६५, कालभैरवाष्टकतः ६७-६९, संक्षेपशारीरकटीकातः ७३. ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महागभीरनीरपूरपापधूतभूतलं
ध्वनत्समस्तपातकारि दारितापदाचलम् ।
जगल्लये महाभये मृकण्डुसूनुहर्म्यदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ७ ॥

अलक्ष्ययक्षकिन्नरामरासुरादिपूजितं
सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् ।
वसिष्ठशिष्टपिप्पलादकर्दमादिशर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ८ ॥

गतं तदैव मे भयं त्वदम्बु वीक्षितं यदा
मृकण्डुसूनुशौनकासुरारिसेवितं सदा ।
पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ९ ॥

एवं स्तुत्वा नर्मदां तां सोऽभिमन्त्र्य कमण्डलुम् ।
तन्मध्येऽवेशयत् सा तु शशाम च यथापुरम् ॥ १० ॥

तं निशम्य निखिलैरपि लोकैः उत्थितोऽस्य गुरुरुक्तमुदन्तम् ।
योगसिद्धिमचिरादयमापेत्यभ्यपद्यततरां परितोषम् ॥ ११ ॥

भाष्यकरणायादेशः ।

छात्रमुख्यममुमाह कियद्भिर्वासरैर्गतघने गगने सः ।
पश्य सौम्य शरदा विमलं खं विद्ययेव विशदं परतत्त्वम् ॥१२॥

वारिदा यतिवराश्च सुपायोधारया सदुपदेशगिरा च ।
ओषधीरनुचरांश्च कृतार्थीकृत्य संप्रति हि यान्ति यथेच्छम् ॥१३॥

धारणादिभिरपि श्रवणाद्यैः ब्रह्म सत्यमनुभूय निरीहाः ।
वार्षिकाणि दिवसान्यपनीय प्रस्थिता यतिवरा हि महान्तः ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सौम्य शङ्कर भद्रं तेऽवधेहि गदतो मम ।
नारायणः पद्मभवो वसिष्ठः शक्तिरेव च ॥ १५ ॥

मुनिः पराशरो व्यासः कृष्णद्वैपायनः शुकः ।
शुकशिष्या गौडपादा एषा गुरुपरंपरा ॥ १६ ॥

गुरुक्रमागतां ब्रह्मविद्यां बदरिकाश्रमे ।
अध्यगां गौडपादेभ्यः तेषामन्ते वसन्मुदा ॥ १७ ॥

बादरायणसूत्रानुगताऽधीता यथा मया ।
मत्तोऽधीता त्वया ब्रह्मविद्या श्रुतिशिरोगता ॥ १८ ॥

गौडपादा गुरुवरा यथाऽनुजगृहुर्मम ।
तैः कृता कारिका वेदशीर्षे माण्डूक्यनामनि ॥ १९ ॥

सर्वोपनिषदामर्थवर्णने मार्गदर्शिका ।
तां त्वयि प्रतिपाद्यैवं तुष्यामि चिरनिर्वृतः ॥ २० ॥

शृणुष्वावहितो यन्मे भूयः प्रियमवाप्स्यसि ।
गच्छ वाराणसीं भद्र शिष्यांस्तत्राधिकारिणः ॥ २१ ॥

बोधयन्नात्मविज्ञानं त्वमेतद्विपुलीकुरु ।
गुरोः करुणयाऽपश्यं भगवन्तं कदाचन ॥ २२ ॥

व्यासं मुनीनां सूत्रार्थं विवृण्वानं हिमाचले ।
विनीतोऽहं पर्यपृच्छं मुनीनामथ सन्निधौ ॥ २३ ॥

आर्य वेदास्त्वया व्यस्ताः सुग्राह्या मन्दमेधसाम् ।
सूत्रिता ब्रह्ममीमांसा श्रुतिशीर्षपथानुगा ॥ २४ ॥

लघ्वक्षरत्वात्सूत्राणां विवृतिः काऽप्यपेक्ष्यते ।
यथार्थग्रहणायैरां कृपया विवृतिं कुरु ।
इति पृष्टो गुरुवरो जगादेमं जनं तदा ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वमेव दिविषद्भिरुदीर्णः पार्वतीपतिसदस्ययमर्थः ।
वत्स तं शृणु समस्तविदेको मत्समस्तव भविष्यति शिष्यः ॥ २६ ॥

कुम्भ एव सरितः सकलं यः संहरिष्यति महोल्बणमम्भः ।
दुर्मतानि निरसिष्यति सोऽयं शर्मदायि च करिष्यति भाष्यम् ॥ २७ ॥

इत्युदीर्य मुनिराट् स वनान्ते पत्युराप सुगिरिं गिरिजायाः ।
तन्मुखाच्छ्रुतमशेषमिदानीं सन्मुनिप्रिय मया त्वयि दृष्टम् ॥ २८ ॥

स त्वमुत्तमपुमानसि कश्चित् तत्ववित्प्रवर नान्यसमानः ।
तद्यतस्व निरवद्यनिबन्धैः सद्य एव जगदुद्धरणाय ॥ २९ ॥

गच्छ वत्स नगरं शशिमौलेः स्वच्छदेवतटिनीकमनीयम् ।
तावता परमनुग्रहमाद्या देवता तव करिष्यति तत्र ॥ ३० ॥

एवमेनमनुशास्य दयालुः पावयन्निजदृशा स ददर्श ।
भावतः स्वचरणांबुजसेवामेव शश्वदभिकामयमानम् ॥ ३१ ॥

पङ्कजाभमतुलं पदयुग्मं सोऽभिवन्द्य निरगादसहिष्णुः ।
तद्वियोगमभिसान्त्व्य कथंचित् तद्विलोकनमयन् हृदयाब्जे ॥ ३२ ॥

प्रत्यर्पितन्यास इव गोविन्दो निर्वृतो ययौ ।
बदरीं गुरुसेवार्थी कृतार्थेनान्तरात्मना ॥ ३३ ॥

## काशीगमनम् ।

देशिकस्याभिवन्द्यांघ्रिं ययौ काशीं स शङ्करः ।
प्रण्यध्यायच्च तां देवीं निजबोधस्वरूपिणीम् ॥ ३४ ॥

**मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च ।**
**ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाऽहं निजबोधरूपा ॥ ३५ ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा सा काशिकाऽहं निजबोधरूपा ॥ ३६ ॥

कोशेषु पञ्चस्वधिराजमाना बुद्धिर्भवानी प्रतिदेहगेहम् ।
साक्षी शिवः सर्वगतोऽन्तरात्मा सा काशिकाऽहं निजबोधरूपा ॥

काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥ ३८ ॥

काशी धन्यतमाऽविमुक्तनगरी साऽलंकृता गङ्गया
तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी ।
स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुत्वं गतः ॥ ३९ ॥

दुःखांभोधिगतो हि जन्तुनिवहस्तेषां कथं निष्कृतिः
ज्ञात्वा तद्धि विरिञ्चिना विरचिता वाराणसी शर्मदा ।
लोकाः स्वर्गमुखास्ततोऽपि लघवो भोगान्तपातप्रदाः
काशी मुक्तिपुरी सदा शिवकरी धर्मार्थमोक्षप्रदा ॥ ४० ॥

एवं ध्यात्वा यतीशानः काशीं भक्त्या प्रणम्य च ।
गङ्गां भागीरथीं प्राप्य तां तुष्टाव ततोऽमुना ॥ ४१ ॥

शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥ ४२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि ।
सकलकलुषभङ्गे स्वर्गसोपानसङ्गे
तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥ ४३ ॥

मातर्जाह्नवि शम्भुसङ्गमिलिते मौलौ निधायाञ्जलिं
त्वत्तीरे वपुषोऽन्त्यसानसमये नारायणांघ्रिद्वयम् ।
सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे
भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥ ४४ ॥

एवं स्तुवन्क्रमेणैव जगाम मणिकर्णिकाम् ।
गङ्गातीरावतारेषु श्रेष्ठामस्तौन्मुदा तदा ॥ ४५ ॥

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्
तन्मध्याद्भृगुलाञ्छनो गरुडगः पीतांबरो निर्गतः ॥

एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरो
योऽप्येकः किल शङ्करो विषधरो गङ्गाधरोमाधवः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति ते मानवाः
रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥ ४७ ॥

एवं भागीरथीं नत्वा स्तुत्वा स्नात्वा यतीश्वरः ।
सर्वलोकसुखावासं ययौ विश्वेश्वरालयम् ॥ ४८ ॥

विश्वेश्वरं समभ्यर्च्य मनसा स्वात्मरूपिणम् ।
स्तोत्रेणानेन तुष्टाव शङ्करं शङ्करः स्वयम् ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सानन्दमानन्दवने वसन्तमानन्दकन्दं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ ५० ॥

महेशं सुरेशं सुरारातिनाशं विभुं विश्वनाथं विभूत्यङ्गभूषम् ।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं सदानन्दमीडे प्रभुं पञ्चवक्त्रम् ॥

प्रभो शूलपाणे विभो विश्वनाथ महादेव शम्भो महेश त्रिणेत्र ।
शिवाकान्त शान्त स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः॥

शम्भो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतदेकः त्वं हंसि पासि विदधासि महेश्वरोऽसि॥

वाराणसीपुरपते मणिकर्णिकेश वीरेश दक्षमखकाल विभो गणेश ।
सर्वज्ञ सर्वहृदयैकनिवास नाथ संसारदुःखदहनाज्जगदीश रक्ष ॥ ५४ ॥

विश्वेश विश्वभयनाशक विश्वरूप विश्वात्मक त्रिभुवनैकगुणाधिकेश ।
हे विश्वनाथ करुणामय दीनबन्धो संसारदुःखदहनाज्जगदीश रक्ष ॥

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय
नित्याय शुद्धाय दिगंबराय तस्मै नकाराय नमः शिवाय ॥ ५६ ॥

मन्दाकिनीसलिलचन्दनचर्चिताय नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारमुख्यबहुपुष्पसुपूजिताय तस्मै मकारमहिताय नमः शिवाय ॥

शिवाय गौरीवदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ॥ ५८ ॥

वसिष्ठकुम्भोद्भवगौतमाद्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ॥ ५९ ॥

यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै यकाराय नमः शिवाय ॥ ६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं स्तुत्वा महादेवं विश्वेश्वरमुदारधीः ।
अन्नपूर्णालयं गत्वा तां तुष्टाव स्तवेन सः ॥ ६१ ॥

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलदोषपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६२ ॥

दृश्यादृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रखेलनकरी विज्ञानदीपाङ्कुरी ।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६३ ॥

अन्नपूर्णे सदा पूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ६४ ॥

माता च पार्वती देवी पिता देवो महेश्वरः ।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ ६५ ॥

प्रदक्षिणक्रमं कुर्वन् क्षेत्रतीर्थनिषेवकः ।
काशीपुराधिनाथं तं कालभैरवमानमत् ॥ ६६ ॥

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ॥ ६७ ॥

शूलटङ्कपाशदण्डपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं
काशिकापुराधिनाथकालभैरवं भजे ॥ ६८ ॥

धर्मसेतुपालकं त्वधर्ममार्गनाशकं
कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णकेशपाशशोभिताङ्गनिर्मलं
काशिकापुराधिनाथकालभैरवं भजे ॥ ६९ ॥

इति पञ्चक्रोशयात्रां चक्रे शास्त्रविधानतः ।
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् ॥ ७० ॥

जैगीषव्यगुहां गङ्गां भवानीं मणिकर्णिकाम् ।
निषेव्य पूजयामास शास्त्रदृष्टिविधानतः ॥ ७१ ॥

निरवधिसुखदेन स्वात्मभावं गतेन प्रथितसुजनकीर्तिः शङ्करो देशिकेन ।
श्रुतिशिखरविचारे प्रेरितोऽसौ हि काशीं यतिवरगुणयुक्तः प्राप्य तस्थौ यतीशः ॥

नमः श्रीशङ्कराचार्यगुरवे शङ्करात्मने ।
शरीरिणां शङ्कराय शङ्करज्ञानहेतवे ॥ ७२ ॥

इति श्रीशङ्करविजयमकरन्दे एकादश आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ॥ द्वादश आस्वादः ॥

## सनन्दनस्य शिष्यतया स्वीकारः ।

कुहनान्त्यजविश्वनाथसृष्टो द्रुहिणव्यासवरोदितानुशिष्टः ।
ममतां मम तावदेष भिन्द्यात् नमतश्चोपरतिं ददात्वनिन्द्याम् ॥ १ ॥

विश्वेशश्चरणयुगं प्रणम्य भक्त्या हर्यो यैस्त्रिदशवरैः समर्चितस्य ।
सोऽनैषीत्प्रयतमना जगत्पवित्रे क्षेत्रेऽसाविह समयं कियन्तमार्यः ॥ २ ॥

अथागमद्ब्राह्मणसूनुराराद् अधीतवेदोऽधरयन्स्वभासा ।
तेजांसि कश्चित् सरसीरुहाक्षो दिदृक्षमाणः किल देशिकेन्द्रम् ॥ ३ ॥

---

सङ्कलने मूलम्-जगद्गुरुरत्नमालास्तवतः १, माधवीयतः २-१२, १६. १८, २०-२५, ३९-४४, ४६. ५६, ७२, व्यासाचलीयतः २-७; ९, ४५, भगवत्पादाभ्युदयतः १३-१५, ३१-३८. ६७, ७३-७७, बृहच्छङ्करविजयतः १७, १९, मनीषापञ्चकतः २६-३० ब्रह्मानन्दीयानुसारि ४७-५५, ६८-७० माण्डूक्यकारिकाभाष्यतः ६१-६२, तैत्तिरीयोपनिषद्भाष्यतः ६३ यतिसार्वभौमोपहारतः ६४ गोविन्दनाथीयतः ७१ तैत्तिरीयभाष्यटीकातः ७८.

(३) सनन्दनोऽयं चोलदेशे कावेरीतीरे लब्धजन्मा। पश्चात्तीर्थयात्रायां श्रीरङ्गक्षेत्रपरिसरे अस्य मातुलगृहे वासो वर्ण्यते । विष्ण्वंशजत्वं मतान्तरेण अरुणांशजत्वं पितुर्विमलाख्या च माधवीये वर्ण्यते । विष्णवरुणयोरेकत्रांशावेशो युज्यत एव हनूमतीव रुद्रवाय्वोः । चन्द्रांशजत्वं सदानन्दीये । चिद्विलासीये अहोबिलक्षेत्रजोऽयं, पिता माधवः, लक्ष्मीर्माता, तपस्यतोर्दंपत्योः नरहरिप्रसादात् जातः स्वप्ने नरहरिचोदनया आगतः इति वर्ण्यते । गोविन्दनाथीये श्रीकुण्डग्रामे (तिरुक्कण्डियूर) सोमशर्मणोऽयं नृसिंहप्रसादात् जातः, विष्णुशर्माख्यः इति वर्ण्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आगत्य देशिकपदाम्बुजयोरपसत् संसारवारिधिमनुत्तममुत्तितीर्षुः ।
वैराग्यवानकृतदारपरिग्रहश्च कारुण्यनावमधिरुह्य दृढां दुरापाम् ॥ ४ ॥

उत्थाप्य तं गुरुरुवाच गुरुर्द्विजानां
कस्त्वं क्व धाम कुत आगत आत्तधैर्यः ।
बालोऽप्यबालधिषणः प्रतिभासि मे त्वं
एकोऽप्यनेक इव नैकशरीरभासा ॥ ५ ॥

पृष्टो बभाण गुरुमुत्तरमुत्तरज्ञो विप्रो गुरो मम गृहं बुध चोलदेशे ।
यत्रापगा वहति पुण्यकवेरकन्या यस्याः पयो हरिपदाम्बुजभक्तिमूलम् ॥ ६ ॥

अटाट्यमानो महतो दिदृक्षुः क्रमादिमं देशमुपागतोऽस्मि ।
बिभेमि मज्जन् भववारिराशौ तत्पारगं मां कृपया विधेहि ॥ ७ ॥

अपाङ्गैरुत्तुङ्गैरमृतझरभंगैः परगुरो
शुचा दूनं दीनं कलय दयया मामविमृशन् ।
गुणं वा दोषं वा न कथमपि सञ्चिन्तय विभो
प्रपद्ये त्वामार्य निरवधिकृपानीरधिरिति ॥ *

इत्युक्तवन्तं कृपया महात्माऽप्यदापयत् सन्न्यसनं यथावत् ।
यं प्राहुरार्यं प्रथमं विनेयं श्रीदेशिकेन्द्रस्य सनन्दनाख्यम् ॥ ९ ॥

संसारघोरजलधेस्तरणाय शश्वत्सांयात्रिकीभवनमर्दयमानमेनम् ।
हन्तोत्तमाश्रमतरीमधिरोप्य पारं निन्ये निपातितकृपारसकेनिपातः ॥

येऽप्यन्येऽमुं सेवितुं देवतांशा यातास्तेऽपि प्राय एवं विरक्ताः ।
क्षेत्रे तस्मिन्नेव शिष्यत्वमस्य प्रापुः स्पष्टं लोकरीत्याऽपि गन्तुम् ॥

---

(१०) सांयात्रिकः पोतवणिक् । केनिपातो नौकादण्डः । ११, समित्पाणि - चिद्विलास - ज्ञानकन्द - विष्णुगुप्त - शुद्धकीर्तिभानु-मरीचि - कृष्णदर्शन - बुद्धिवृद्धि - विरिञ्चिपाद - शुद्धानन्ताद्याः शिष्याः स्मर्यन्ते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## विश्वनाथानुग्रहः ।

एकदा दिवसमध्यमभागे शङ्करोऽम्बुजपरागकषायाम् ।
जाह्नवीमभिययौ सह शिष्यैः आह्निकं विधिवदेष चिकीर्षुः ॥ १२ ॥

मध्येमार्गं स चाद्राक्षीत् आरादायान्तमन्त्यजम् ।
वसानं कच्चरं वासो दधानं मूर्ध्नि वारुणीम् ॥ १३ ॥

धावतोऽग्रे विश्वकद्रून् बिभ्रतं चतुरः करे ।
अन्वीयमानं मातंग्या दारकद्वययुक्तया ॥ १४ ॥

तथाविधं विलोक्याग्रे गच्छ गच्छेत्यशाद्यतिः ।
सोऽपि संस्कारवत्यैव वाचा प्रत्याह योगिनम् ॥ १५ ॥

अद्वितीयमनवद्यमसङ्गं सत्यबोधसुखरूपमखण्डम् ।
आमनन्ति शतशो निगमान्तास्तत्र भेदकलना तव चित्रम् ॥ १६ ॥

अन्नमयादन्नमयं अथवा चैतन्यमेव चैतन्यात् ।
द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ १७ ॥

गच्छ दूरमिति देहमुताहो देहिनं परिजिहीर्षसि विद्वन् ।
भिद्यतेऽन्नमयतोऽन्नमयं किं साक्षिणश्च. यतिपुंगव साक्षी ॥ १८ ॥

किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चाण्डालवापीपयः-
पूरेऽप्यन्तरमस्ति काञ्चनघटीमृत्कुम्भयोश्चांबरे ।
प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधांबुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदभ्रमः ॥ १९ ॥

शुचिर्द्विजोऽहं श्वपच व्रजेति मिथ्याग्रहस्ते मुनिवर्य कोऽयम् ।
सन्तं शरीरेष्वशरीरमेकं उपेक्ष्य पूर्णं पुरुषं पुराणम् ॥ २० ॥

अचिन्त्यमव्यक्तमनन्तमाद्यं विस्मृत्य रूपं विमलं विमोहात् ।
कलेवरेऽस्मिन् करिकर्णलोलाकृतिन्यहन्ता कथमाविरास्ते ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्यामवाप्यापि विमुक्तिपथ्यां जागर्ति तुच्छा जनसंग्रहेच्छा ।
अहो महान्तोऽपि महेन्द्रजाले मज्जन्ति मायाविवरस्य तस्य ॥ २२ ॥

इत्युदीर्य वचनं विरतेऽस्मिन् सत्यवाक् तदनु विप्रतिपन्नः ।
अत्युदारचरितोऽन्त्यजमेनं प्रत्युवाच स च विस्मितचेताः ॥ २३ ॥

सत्यमेव भवता यदिदानीं प्रत्यवादि तनुभृत्प्रवरैतत् ।
अन्त्यजोऽयमिति संप्रति बुद्धिं सन्त्यजामि वचसाऽऽत्मविदस्ते ॥

जानते श्रुतिशिरांस्यपि सर्वे मन्वते च विजितेन्द्रियवर्गाः ।
युञ्जते हृदयमात्मनि नित्यं कुर्वते न धिषणामपभेदाम् ॥ २५ ॥

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृंभते
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।
सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चेत्
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम् ।
इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोः
नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ २८ ॥

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्
योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ २९ ॥

यत्सौख्यांबुधिलेशलेशत इमे शक्रादयो निर्वृताः
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखांबुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्
यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ३० ॥

एवं वदन् स नाद्राक्षीत् यतिश्चाण्डालरूपिणम् ।
अदर्शच्च विशालाक्ष्या देव्या देवं पुरः स्थितम् ॥ ३१ ॥

सेव्यमानं सुरगणैः स्तूयमानं महर्षिभिः ।
महाककुदि राजन्तं वृषे कैलाससन्निभे ॥ ३२ ॥

सद्यः कृत्तिरभूद्वासः कच्चरं कृत्तिवाससः ।
श्वानस्त्वाम्नायरूपेण तस्य पार्श्वमुपाश्रिताः ॥ ३३ ॥

सुरा सपदि गङ्गाऽऽसीत् गङ्गाधरजटातटे ।
दारकावपि संवृत्तौ गजाननषडाननौ ॥ ३४ ॥

स्वपरीक्षार्थमायातं शम्भुं ज्ञात्वाऽन्त्यजात्मना ।
नत्वा स्तुत्वा चाह भूमन्ननुग्राह्यो ह्ययं जनः ॥ ३५ ॥

देहदृष्ट्यास्मि दासस्ते जीवदृष्ट्यास्मि तेऽंशकः ।
तत्वदृष्ट्या त्वमेवास्मि यथेच्छमनुशाधि माम् ॥ ३६ ॥

सश्लाघमूचे भगवान् यते साधूदितं त्वया ।
तत्वदृष्ट्याऽहमेव त्वं तथाऽपि श्रूयतामिदम् ॥ ३७ ॥

वेदो ब्रह्मपरः कृत्स्नो ब्रह्म चाखण्डमद्वयम् ।
तदन्यथैव व्याख्यातं कणादकपिलादिभिः ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संविभज्य सकलश्रुतिजालं ब्रह्मसूत्रमकरोदथ कृष्णः* ।
यत्र काणभुजसांख्यपुरोगाण्युद्धृतानि कुमतानि समूलम् ॥ ३९ ॥

तत्र मूढमतयः कलिदोषात् द्वित्रवेदवचनोद्धलितानि ।
भाष्यकाण्यरचयन्बहुबुद्धैः दूष्यतामुपगतानि च कैश्चित् ॥ ४० ॥

तद्भवान्विदितवेदशिखार्थः तानि दुर्मतिमतानि निरस्य ।
सूत्रभाष्यमधुना विदधातु श्रुत्युपोद्बलितयुक्त्युपयुक्तम् ॥ ४१ ॥

मोहसन्तमसवासरनाथान् तत्र तत्र विनिवेश्य विनेयान् ।
पालनाय परतत्वसरण्याः मामुपैष्यसि ततः कृतकृत्यः ॥ ४२ ॥

एवमेनमनुगृह्य कृपावान् आगमैः सह शिवोऽन्तरधत्त ।
विस्मितेन मनसा सह शिष्यैः शंकरोऽपि सुरसिन्धुमयासीत् ॥ ४३ ॥

तत्समाप्य विधिमाह्निकमीशं ध्यायतो गुरुमथाखिलभाष्यम् ।*
कर्तुमुद्यतमभूद्गुणसिन्धोः मानसं निखिललोकहिताय ॥ ४४ ॥

## बदर्यां गौडपादानुग्रहः । भाष्यप्रणयनम् ।

कर्तृत्वशक्तिमधिगम्य स विश्वनाथात् तीर्थानि सेवितुमनाः प्रययावुदीचीम् ।*
काष्ठां क्षणेन बदरीं मुनिसंघजुष्टां संप्राप तत्र च दिनानि बहून्यवात्सीत् ॥४५॥

स द्वादशे वयसि तत्र समाधिनिष्ठैः ब्रह्मर्षिभिः श्रुतिशिरो बहुधा विचार्य ।
विद्वज्जनैर्बहुविधैरुपसेव्यमानो गोविन्ददेशिकमवाप यदृच्छयाऽत्र ॥ ४६ ॥

प्रणतं शङ्करं योगी प्राणैषीत्स्वगुरोः पदम् ।
गौडपादो महायोगी समाधौ यत्र तिष्ठति ॥ ४७ ॥

विवृण्वन्गौडपादस्य माहात्म्यं प्राह शङ्करम् ।
गुहायामास्त एकाकी गुरुर्मे लोकविश्रुतः ॥ ४८ ॥

---

(३९) कृष्णः कृष्णद्वैपायनो व्यासः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विवारं वत्सरे योगी मादृशेषु दयान्वितः ।
उपदेष्टुं समागच्छेद्गुहायाश्च बहिस्स्थलम् ॥ ४९ ॥

दिनत्रयात्पूर्वमेव गुहां प्राप्तो गुरुर्मम ।
षण्मासेभ्यः परमयं समागच्छेद्बहिः स्वयम् ॥ ५० ॥

तावद्वस त्वमत्रैव ततो द्रक्ष्यसि मे गुरुम् ।
एवं गोविन्दपादीयमादेशं प्राप्य शङ्करः ॥ ५१ ॥

कुर्वंस्तस्य च शुश्रूषां तापसैः सममावसत् ।
षण्मासेभ्यः परं गौडयोगी स बहिरागतः ॥ ५२ ॥

गोविन्दपादो विनतः प्रणमन् चरणाब्जयोः ।
न्यवेदयत्स्वशिष्यं तं शङ्करं गुरवे मुदा ॥ ५३ ॥

व्यासतात्पर्यभरितं श्रुतिशीर्षगदर्शनम् ।
उपादिशच्छङ्कराय गौडो गोविन्दचोदितः ॥ ५४ ॥

आदिष्टो गौडपादेन प्रस्थानत्रितये तदा ।
निर्ममे भाष्यरत्नौघं गुर्वोः प्रीतिं समावहन् ॥ ५५ ॥

करतलकलिताद्वयात्मतत्त्वं क्षपितदुरन्तचिरन्तनप्रमोहम् ।
उपचितमुदितोदितैर्गुणौघैः उपनिषदामयमुज्जहार भाष्यम् ॥ ५६ ॥

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥ ५७ ॥

नृसिंहतापिनीश्वेताश्वतरोपनिषदौ तथा ।
एतासामकरोद्भाष्यं गम्भीरमतिविस्तृतम् ॥ ५८ ॥

---

(५५) युधिष्ठिरशके ज्येष्ठवद्यमावास्यापर्यन्तं बदर्याश्रमे वासः, षोडशभाष्यप्रणयनं श्रीनारायणप्रतिष्ठा च इति विमर्शे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदभाष्यं वाक्यभाष्यं केनोपनिषदः पृथक् ।
चक्रे तथैव माण्डूक्योपनिषदः कारिकां तथा ॥ ५९ ॥

गौडपादैः पराचार्यैः कृतां भाष्यैरसञ्जयत् ।
यत्रैतान् गौडचरणान् नमन्नित्थं जगौ मुदा ॥ ६० ॥

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतोः
यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ॥ ६१ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् स्वान्तमोहान्धकारः
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥ ६२ ॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ ६३ ॥

वेदान्तसूत्रवेश्मान्तर्वर्तमानार्थदृष्टये ।
श्रुतिप्रस्थान आचार्य एवं भाष्यप्रदीपिकाम् ॥ ६४ ॥

चक्रे तथा स्मृतीनां च प्रस्थाने भारतादय ।
गीतां भागवतीं विष्णोर्नामसाहस्रकं तथा ।
सनत्सुजातीयं स्वैर्भाष्यैर्दीपयमास शङ्करः ॥ ६५ ॥

आवर्त्याष्टादशधा समाहितः सूतसंहितां महिताम् ।
हितकाम्ययाभिहितवान् भाष्यं शरीरकं गुरुर्जगताम् ॥ ६६ ॥

एवं श्रुतिस्मृतिन्यायप्रस्थानत्रितयस्य च ।
भाष्यषोडशकेनावीत् गुरुर्वेदांश्च वैदिकान् ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्करो दर्शयामास गुरू ग्रन्थसमुच्चयम् ।
गौडपादोऽभवत्प्रीतः प्रशिष्ये विनयोज्ज्वले ॥ ६८ ॥

लोकशङ्करणे शक्तं चिकीर्षुस्तं जगद्‌गुरुम् ।
त्रिकालविदलब्धाक्रे भगवत्पादसंज्ञया ॥ ६९ ॥

वदरीवासिनः सर्वे भगवत्पादयोगिनम् ।
शङ्कराचार्यनाम्ना च तुष्टुवुर्भक्तिपूर्वकम् ॥ ७० ॥

सर्वदिग्व्याप्तभाष्यांशुः श्रीशङ्करदिवाकरः ।
तिरश्चक्रेऽखिलं लोके प्रतिवादितमोगुणम् ॥ ७१ ॥

व्यासो दर्शयति स्म सूत्रकलितन्यायौघरत्नावलीः
अर्थालाभवशात् न कैरपि बुधैरेता गृहीताश्चिरम् ।
अर्थाप्त्या सुलभाभिराभिरधुना ते मण्डिताः पण्डिताः
व्यासश्चाप कृतार्थतां यतिपतेरौदार्यमाश्चर्यकृत् ॥ ७२ ॥

ब्रह्मर्षयो ये तत्रासन् ब्रह्मविद्याविशारदाः ।
निर्मत्सराः सुनिपुणाः गुणागुणविचने ॥ ७३ ॥

ते सर्वे च सभां कृत्वा प्रेक्ष्य तद्भाष्यमान्ततः ।
हर्षगद्गदया वाचा सुश्लाघमिदमूचिरे ॥ ७४ ॥

अहो भाष्यमहो भाष्यं अहो अद्वैतभाष्यकृत् ।
क्व नु षोडशवर्षोऽयं क्व चेदं भाष्यमुत्तमम् ॥ ७५ ॥

अथ वा नाद्भुतमिदं सर्वज्ञेऽस्मिन्सदाशिवे ।
इदं श्रुत्यन्तनिष्यन्दो मुमुक्षूणामिदं धनम् ॥ ७६ ॥

अद्यैव सफलोद्योगो भगवान् बादरायणः ।
इति प्रशंसितगुणो गुणगृह्यैर्महात्मभिः ।
भूतार्थशंसनपरैः विज्ञैः रेजे यतीश्वरः ॥ ७७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्तार्थविभासकाय यतये शान्ताय सन्न्यासिने
नानावादिनगेन्द्रसंघपवये योगीन्द्रवन्द्याय च ।
मोहध्वान्तदिवाकराय भगवत्पादाभिधां बिभ्रते
तस्मै भाष्यकृते नमोऽस्तु सततं पूर्णाय बोधात्मने ॥ ७८ ॥

इति श्रीशङ्करविजयमकरन्दे द्वादश आस्वादः समाप्तः ॥

---

## ॥ त्रयोदश आस्वादः ॥

---

### सनन्दनस्य गुरुभक्तिः, पद्मपादाख्यया प्रसिद्धिः ।

नमः श्रुतिशिरःपद्मषण्डमार्तण्डमूर्तये ।
बादरायणसंज्ञाय मुनये शमवेश्मने ॥ १ ॥

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे ।
ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ २ ॥

अथ व्रतीन्दुर्विधिवद्विनेयान् अध्यापयामास स नैजभाष्यम् ।
तर्कैः परेषां तरुणैर्विवस्वन्मरीचिभिः सिन्धुवदप्रशोष्यम् ॥ ३ ॥

निजशिष्यहृदब्जभास्वतो गुरुवर्यस्य सनन्दनादयः ।
शमपूर्वगुणैरथाश्नुवन् कतिचिच्छिष्यगणेषु मुख्यताम् ॥ ४ ॥

स नितरामितराश्रवतो लसन्नियममद्भुतमाप्य सनन्दनः ।
श्रुतनिजश्रुतिकोऽप्यभवत्पुनः पिपठिषुर्गहनार्थविवित्सया ॥ ५ ॥

---

सङ्कलने मूलम् – शान्तिपाठतः १, २, ६५, माधवीयतः ३-६, १४-१९, ३२-३३, ३९-४३, ४८-५१, ५३-५६, भगवत्पादाभ्युदयतः ७-१३, ३४-३८, आनन्दगिरीयतः २०-३१, ५७-६३, ब्रह्मसूत्रभाष्यतः २०-३१, गोविन्दनाथीयतः ४४-४७, व्यासाचलीयतः ५२-५३, ५५, प्राचीनशङ्करविजयतः ६४, भाष्यभानुप्रभातः ६६, अम्बास्तवव्याख्यातः ६७, किरणावलीतः ६८-६९ भामतीतिलकतः ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वन्द्वभक्तिममुमात्मपदारविन्दद्वन्द्वे नितान्तदयमानमना मुनीन्द्रः ।
आम्नायशेखररहस्यनिधानकोशं आत्मीयकोशमखिलं त्वरपाठयत्तम् ॥

स चान्तेवासिषु श्रैष्ठ्यं गुरुभक्त्याऽऽनशे क्रमात् ।
सर्वलोकसमस्यापि भजमानेष्वनुग्रहः ॥ ७ ॥

स्वभावो नात्र वैषम्यं ईश्वरस्येव सद्गुरोः ।
इति तत्त्वमविज्ञाय छात्रेष्वन्येष्वसूयुषु ॥ ८ ॥

अन्यादर्शीं तस्य भक्तिं प्रचिख्यापयिषुर्गुरुः ।
गङ्गायास्त्वपरे पारे तिष्ठन्तं स सनन्दनम् ॥ ९ ॥

शीघ्रमेहीत्याजुहाव सर्वेषामपि पश्यताम् ।
तथाऽऽहूतः स गुरुणा स्रोतस्विन्या अगाधताम् ॥ १० ॥

अनादृत्यर्जुमार्गेण गन्तुं गुर्वन्तिकं जवात् ।
अवातरज्जले सद्यः तद्भक्त्या सापि निम्नगा ॥ ११ ॥

पादन्यासेषु विन्यस्य पद्मं पद्ममधात्पदम् ।
स च सत्वरमभ्येत्य तीरं गुर्वन्तिके स्थितः ॥ १२ ॥

आसन्नपत्रपानम्राः सर्वेऽपि तदसूयकाः ।
ततः प्रभृति तं प्राहुः पद्मपादं विपश्चितः ॥ १३ ॥

### व्यासब्रह्मानुग्रहः ।

स जातु शारीरकसूत्रभाष्यमध्यापयन्नभ्रसरित्समीपे ।
शिष्यालिशङ्काः शमयन्नुवास यावन्नभोमध्यमितो विवस्वान् ॥ १४ ॥

(१४) व्याससमागमो द्वेधा वर्ण्यते । अत्र निरूपितः क्रमः आनन्दगिरीये माधवीये चिद्विलासीये सदानन्दीये भगवत्पादाभ्युदये च दृश्यते । व्यासः शङ्करं द्रष्टुं साक्षादागच्छति, स्वसूत्राणां शङ्करकृतं भाष्यं दृष्ट्वा तुष्टोऽनुगृह्णाति इति व्यासाचलीये गुरुवंशकाव्ये गोविन्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रान्तेष्वथाधीत्य शनैर्विनेयेष्वाचार्य उत्तिष्ठति यावदेषः।
तावद् द्विजः कश्चन वृद्धरूपः कस्त्वं किमध्यापयसीत्यपृच्छत् ॥ १५ ॥

शिष्यास्तमूचुर्भगवानसौ नो गुरुः समस्तोपनिषत्स्वतन्त्रः।
अनेन दूरीकृतभेदवादमकारि शारीरकसूत्रभाष्यम् ॥ १६ ॥

स चाब्रवीद्भाष्यकृतं भवन्तं एते वदन्त्यद्भुतमेतदास्ताम्।
अथैकमुच्चारय पारमर्षं यतेऽर्थतस्त्वं यदि वेत्थ सूत्रम् ॥ १७ ॥

तमब्रवीद्भाष्यकृदग्र्यवाचं सूत्रार्थविद्भ्योऽस्तु नमो गुरुभ्यः।
सूत्रज्ञताऽहंकृतिरस्ति नो मे तथाऽपि यत्पृच्छसि तद्ब्रवीमि ॥ १८ ॥

पप्रच्छ सोऽध्यायमथाधिकृत्य तृतीयमारम्भगतं यतीशम्।
तदन्तरेत्यादिकमस्ति सूत्रं ब्रूह्येतदर्थं यदि वेत्थ किञ्चित् ॥ १९ ॥

वृद्धः पुनराह 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्'। इति सूत्रस्य को वा अर्थो भवता अधिगतः ? ॥

जगाद परमगुरुः—'जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कः, अविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते। स किं देहबीजैः भूतसूक्ष्मैः असंपरिष्वक्तः गच्छति ? आहोस्वित् संपरिष्वक्तः ? इति चिन्त्यते ॥ २१ ॥

वृद्ध एवमाह—सुलभाः सर्वत्र भूतमात्राः। यत्रैव देह

---

नाथीये शङ्कराभ्युदये च। व्यासेनैव दीर्घायुष्ट्वं अनुगृहीतमिति व्यासाचलीय-माधवीय-सदानन्दीय-शङ्कराभ्युदय-गुरुवंशकाव्येषु। व्यासव्यातसन्निहित-ब्रह्मणा अनुगृहीतमिति प्राचीनशङ्करविजय-आनन्दगिरीय-चिद्विलासीय-जगद्गुरुरत्नमालास्तोत्रेषु। युधिष्ठिरशके २६४७ कार्तिकशुक्लाष्टम्यां श्रीमद्बादरायणाचार्यैः सह ब्रह्मविद्याविचारः इति विमर्शे ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरब्धव्यः, तत्रैव सन्ति। ततश्च तासां नयनं निष्प्रयोजनम्। तस्मादद्भिरसंपरिष्वक्तो याति ॥ २२ ॥

शङ्कर आह—एवं प्राप्ते पठत्याचार्यः—तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति। तदन्तरप्रतिपत्तौ देहात् देहान्तरप्रतिपत्तौ देहबीजैः भूतसूक्ष्मैः संपरिष्वक्तो रंहति गच्छति इति अवगन्तव्यम्। कुतः? प्रश्ननिरूपणाभ्याम्। तथाहि प्रश्नः—वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति (छा. ५-३३) इति। निरूपणं च प्रतिवचनं—द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीः दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा. ५-९-१) इति। तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते ॥ २३ ॥

वृद्धः—भो यते! अन्या श्रुतिः 'जलूकावत् पूर्वदेहं न मुञ्चति, यावत् न देहान्तरमाक्रमति' इति ॥ २४ ॥

शङ्करः—भो वृद्ध! तत्रापि अप्परिवेष्टितस्यैव जीवस्य कर्मोप-

(२३) आपः (भाविदेहबीजभूताः भूतसूक्ष्माः) पञ्चस्वग्निषु हुताः पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषात्मना परिणमन्ते, तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति राज्ञः प्रवाहणस्य प्रश्नः। तस्य चोत्तराज्ञाने तत्पितरं प्रति राजोवाच। 'असौ वाव लोको गौतमाग्निः, तत्र श्रद्धाख्या आपः आहुतिः, पर्जन्याग्नौ सोमरूपा, इह खल्वग्निहोत्रे श्रद्धया हुता दध्यादिरूपा आपो यजमानसंलग्नाः स्वर्गं लोकं प्राप्य सोमाख्यदिव्यदेहात्मना स्थिताः, कर्मान्ते द्रुताः पर्जन्ये हूयन्ते (यजमानस्य इन्द्रियाधिष्ठानदेवतैः), ततो वृष्टिरूपाः पृथिव्यां, अन्नरूपाः पुरुषे, रेतोरूपा योषिति, हुता आपः पुरुषशब्दवाच्याः पुमात्मका भवन्ति इति निरूपणं कृतम्। (रत्नप्रभा) ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयते इत्यविरोधः ॥ २५ ॥

वृद्धः—अथ यदुच्यते-व्यापिनां करणानां आत्मनश्च देहान्तरप्रतिपत्तौ कर्मवशात् वृत्तिलाभः तत्र भवति ; (यद्वा) केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति ; (यद्वा) इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते (यद्वा) मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते ; (यद्वा) जीव एव उत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते, शुक इव वृक्षात् वृक्षान्तरम् ; इति तर्हि ॥ २६ ॥

शङ्करः—पुरुषमतिप्रभवाः कल्पनाः ताः सर्वा एव अनादर्तव्याः श्रुतिविरोधात् ॥ २७ ॥

वृद्धः—उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिः अद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात् । तत्र कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति ॥

शङ्करः—तत्रेदमुत्तरं सूत्रमेव—'त्र्यात्मकत्वात्तु भूयस्त्वात् ।' इति तुशब्देन चोदितामाशङ्कां उच्छिनत्ति । त्र्यात्मका हि आपः, त्रिवृत्करणश्रुतेः । तासु आरंभिकासु अभ्युपगतासु इतरदपि भूतद्वयं अवश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहः, त्रयाणामपि तेजोऽबन्नानां तस्मिन्कार्योपलब्धेः । पुनश्च त्र्यात्मकः, त्रिधातुत्वात् त्रिभिः वातपित्तश्लेष्मभिः । न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिः आरब्धुं शक्यते । तस्मात् भूयस्त्वापेक्षोऽयं 'आपः पुरुष-

(२५) भावनाया दीर्घीभावो भाविदेहविषयत्वम् । इहैव धर्मायत्तभाविदेहं देवोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजति, न तु साक्षाद्देहान्तरं गृह्णाति । (रत्नप्रभा)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वचसः’ इति प्रश्नप्रतिवचनयोः अप्शब्दः ; न कैवल्यापेक्षः। सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते ॥ २९ ॥

सूद्रः—पार्थिवो धातुः भूयिष्ठो देहेषु उपलक्ष्यते ॥ ३० ॥

शङ्करः—नैष दोषः। इतरापेक्षया अपां बाहुल्यं भविष्यति। दृश्यते शुक्लशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम्। कर्म च निमित्तकारणं देहान्तरारम्भे। कर्माणि च अग्निहोत्रादीनि सोमाज्य-पयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि। कर्मसमवायिन्यश्चापः श्रद्धाशब्दो-दिताः सह कर्मभिः द्युलोकाख्ये अग्नौ हूयन्त इति वक्ष्यति। तस्मा-दप्यपां बाहुल्यप्रसिद्धिः। बाहुल्याच्च अप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणां उपादानमिति निरवद्यम्। प्राणगतेश्च इत्यपरं सूत्रम्। प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते—‘तमुत्क्रामन्तं प्राणो-ऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति’ इत्यादि-श्रुतिभिः। सा च प्राणानां गतिं नाश्रयमन्तरेण सम्भवतीत्यतः प्राणगतिप्रयुक्ता तदाश्रयभूतानामपि भूतान्तरोपसृष्टानां गतिरव-गम्यते। न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतो दर्शनात् ॥ ३१ ॥

इत्युक्तमर्थं निशमय्य तेन स वावदूकः शतधा विकल्प्य।
अखण्डयत् पण्डितकुञ्जराणां मध्ये महाविस्मयमादधानः ॥ ३२ ॥

अनूद्य सर्वं फणितं तदीयं सहस्रधा तीर्थकरश्चखण्ड।
तयोः सुराचार्यफणीन्द्रवाचोः दिनाष्टकं वाक्कलहो जजृम्भे ॥ ३३ ॥

तदन्तरे तु मतिमान् पद्मपादो व्यचिन्तयत्।
अयं न विप्रो यः कश्चित्कृष्णद्वैपायनो ध्रुवम् ॥ ३४ ॥

नान्योऽभियोक्तुमीष्टेऽस्मद्गुरुं सिंहं यथा मृगः।
मन्ये हृद्येन भाष्येण प्रीणितो बादरायणः ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति मत्वा कुशाग्रीयमतिः तौ प्रणमन् जगौ ।
शङ्करः शङ्करः साक्षात् व्यासो नारायणः स्वयम् ॥ ३६ ॥

तयोर्विवादे संप्राप्ते किंकरः किं करोम्यहम् ।
इति सूचिततत्त्वार्थो भाष्यकारः ससंभ्रमम् ॥ ३७ ॥

नमो भगवते सूत्रकारायेति ननाम तम् ।
कृताञ्जलिस्तं प्रयत उपतस्थे सपर्यया ॥ ३८ ॥

भावत्कसूत्रप्रतिपाद्यतादृक्परापरार्थप्रतिपादकं सत् ।
अद्वैतभाष्यं तव संमतं चेत् सोढा ममागः पुरतो भवाशु ॥ ३९ ॥

एवं वदन्नयमथैक्षत कृष्णमारात् चामीकरव्रततिचारुजटाकलापम् ।
विद्युल्लतावलयवेष्टितधारिदाभं चिन्मुद्रया प्रकटयन्तमभीष्टमर्थम् ॥ ४० ॥

शार्दूलचर्मोद्वहनेन भूतेरुद्धूलनेनापि जटाच्छटाभिः ।
रुद्राक्षमालावलयेन शम्भोरर्धासनाध्यासनसख्यपात्रम् ॥ ४१ ॥

अत्यादराच्छात्रगणैः सहासौ प्रत्युद्गतस्तच्चरणौ प्रणम्य ।
यत्यग्रगामी विनयी प्रहृष्यन्नित्यब्रवीत् सत्यवतीसुतं सः ॥ ४२ ॥

धत्से सदाऽऽर्तिशमनाय हृदा गिरीशं गोपायसेऽधिवदनं च चिरन्तनीर्गाः ।
दूरीकरोषि नरकं च दयार्द्रदृष्ट्या कस्ते गुणान् गदितुमद्भुतकृष्ण शक्तः ॥

लोकाननुजिघृक्षुस्त्वं लोके सञ्चरसि ध्रुवम् ।
पूर्णकामाः किमन्यस्मादभिवाञ्छन्ति पूरुषाः ॥ ४४ ॥

तथाऽप्यागमने हेतुं तव पृच्छामि कौतुकात् ।
इत्युक्तो यतिवर्येण शङ्करेण महात्मना ॥ ४५ ॥

प्रत्युवाचातिहृष्टात्मा महर्षिर्बादरायणः ।
वेदान्तागमसूत्राणां रचितानां महामते ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वया भाष्यं व्यधायीति श्रुत्वाऽऽयातोऽस्मि सांप्रतम् ।
तद्द्रष्टुं कौतुकेनालं त्वरते मम मानसम् ॥ ४७ ॥

इत्थं मुनीन्द्रवचनश्रवणोत्थहर्षं रोमाञ्चपूरमिषतो बहिरुत्प्लवन्तम् ।
बिभ्रत् तमभ्ररुचिमाल्यददभ्रशक्तिं श्रीशङ्करः शुकमतार्णवपूर्णचन्द्रः ॥

सुमन्तुपैलप्रथमा मुनीन्द्रा महानुभावा ननु यस्य शिष्याः ।
तृणाल्लघीयानपि तत्र कोऽहं तथापि कारुण्यमदर्शि दीने ॥ ४९ ॥

सोऽहं समस्तार्थविवेचकस्य कृत्वा भवत्सूत्रसहस्ररश्मेः ।
भाष्यप्रदीपेन महर्षिमान्य नीराजनं धृष्टतया न लज्जे ॥ ५० ॥

अकारि यत्साहसमात्मबुद्ध्या भवत्प्रशिष्यव्यपदेशभाजा ।
विचार्य तत्सूक्तिदुरुक्तिजालमर्हः समीकर्तुमिदं कृपालुः ॥ ५१ ॥

भाष्यं तदुक्त्वाऽर्पितमस्य हस्ते हस्तद्वयेनादरतो विनीतः ।
आदाय सर्वज्ञ निरैक्षतासौ प्रसादगांभीर्यगुणाभिरामम् ॥ ५२ ॥

सूत्रानुकारिमृदुवाक्यनिवेदितार्थं स्वीयैः पदैः सह निराकृतपूर्वपक्षम् ।
सिद्धान्तयुक्तिविनिवेशिततत्त्वरूपं दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥

न साहसं तात भवाननकार्षीत् यत्सूत्रभाष्यं गुरुणा विनीतः ।
विनिःसरेत्ते वदनाद्यतीन्दो गोविन्दशिष्यस्य कथं दुरुक्तम् ॥ ५४ ॥

बह्वर्थगर्भाणि लघूनि यानि निगूढभावानि च मद्वचांसि ।
त्वामेवमित्थं विरहय्य नास्ति यस्तानि सम्यग् विवरीतुमीष्टे ॥ ५५ ॥

व्याख्या हि भूयो निगमान्तविद्यां विभेदवादान् विदुषो विजित्य ।
ग्रन्थान्भुवि ख्यापय सानुबन्धान् अहं गमिष्यामि यथाभिलाषम् ॥

एवमुक्त्वा तु यास्यामीत्युच्चरन्तं मुनीश्वरम् ।
नत्वेदमाह सर्वज्ञ भदन्तोऽद्य भविष्यति ॥ ५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राणोत्क्रममवेक्ष्याद्य यास्यसि त्वं दयानिधे* ।
त्वत्पादसन्निधेर्योगात् मुक्त एवाहमद्वयः ॥ ५८ ॥

इत्युक्तः शङ्कराचार्यमिदमाह घृणान्वितः ।
कथं प्रवृत्तिर्भाष्यस्य गते त्वयि जगत्यलम् ॥ ५९ ॥

तस्मादद्वैतबोधाय स्थिरो भव परावरे ।
आज्ञप्तोऽप्येवमाचार्यः पुनराह मुनीश्वरम् ॥ ६० ॥

शरत्सु षोडशस्वेव मदायुस्स्थितिरित्यतः* ।
व्यासस्त्वाकर्षयामास ब्रह्माणं सृष्टिकारणम् ॥ ६१ ॥

ब्रह्माऽप्यवादीदेवं हिं स्वतन्त्रः शङ्करः प्रभुः ।
यावदिच्छाब्दमुर्व्यां हि स्थित्वा पश्चाद् गमिष्यति ॥ ६२ ॥

इत्युक्त्वान्तर्दधे ब्रह्मा व्यासश्च भगवान्मुनिः ।
ततो मुमुदिरे सर्वेऽप्यायुर्वृद्ध्या महागुरोः ॥ ६३ ॥

अंभोजसंभवपराशरपुत्रदत्तस्वायुर्विशेषदुरपोहहरिज्जयेच्छुः ।
प्रक्रान्तवान् दिशि विदिश्यतिधीरवादैः अद्वैतमेव परिवर्धयितुं बुधेषु ॥

शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥ ६५ ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशङ्कररूपाय श्रीपरब्रह्मणे नमः ॥ ६६ ॥

हरिहरयोरवतारावाकलये व्यासशङ्करौ हृदये ।
उदधारि कुमतिशङ्कापङ्कातङ्काजरद्गवी याभ्याम्* ॥ ६७ ॥

यदीयसूत्रविलसच्छास्त्रनावा भवाम्बुधिम् ।
सन्तस्तरन्ति तं वन्दे पाराशर्यमहर्निशम् ॥ ६८ ॥

यदीयभाष्यकमलस्यन्दमानमरन्दतः ।
विद्वद्भृङ्गस्तृप्तिमेति शङ्करं तमुपाश्रये ॥ ६९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णवे व्यासरूपाय ब्रह्मसूत्रकृते नमः ।
महेशाय च तद्भाष्यकृते शङ्कररूपिणे ॥ ७० ॥

इति श्रीशङ्करविजयमकरन्दे त्रयोदश आस्वादः समाप्तः ॥

---

## ॥ चतुर्दश आस्वादः ॥

---

### शिष्यसंग्रहः बदरीनारायणप्रतिष्ठा

श्रीभाष्यकृच्चरणसारसमादरेण योगीन्द्रवृन्दमधुपैरुपगीयमानम् ।
सद्भागधेयमखिलार्थनिदानभूतं कैवल्यपुष्परससंभृतमानतोऽस्मि ॥

अथ श्रीशङ्कराचार्यो निवसन् बदरीवने ।
शिष्यानध्यापयामास पद्मपादमुखान्गुरुः ॥ २ ॥

सुप्रसन्नतरं भाष्यं ते च सम्यग्विचक्षणाः ।
तथाऽप्यतिगभीरत्वात्तस्य गङ्गाप्रवाहवत् ॥ ३ ॥

उत्सुकत्वाच्च तत्सारं पातुं गुरुमुखांबुजात् ।
रसस्यायातयामत्वात् स्वाद्यत्वाच्च नवं नवम् ॥ ४ ॥

---

सङ्कलने मूलम् – षट्पदीस्तत्रशङ्करानन्दव्याख्यातः १, २९, भगवत्पादाभ्युदयतः ३-५, गुर्वष्टकतः ९-१०, माधवीयतः ९-१०, १५, ३२-३६, ९७, प्राचीनशङ्करविजयतः १४-१५ गुरुवंशकाव्यतः १६-१७, २६, ९८-९९, षट्पदीतः १८-२१, व्यासाचलीयतः ३०, ३१, ३६, ३७, ८८-९७ शिवभुजङ्गतः ३९-४२ विष्णुभुजङ्गतः ६१-६६ गोविन्दाष्टकतः ७०-७३ कृष्णाष्टकतः ८२-८४ बृहच्छङ्करविजयतः ८५ कालट्यां आर्याम्बासमाधिस्थलगतशिलालेखतः ८९, मातृपञ्चकतः ९१-९३ यतिसार्वभौमोपहारतः १००

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृण्वतामपि शुश्रूषा जाता तेषामतृप्यताम् ।
भूरिवात्सल्यवान् सोऽपि मुहुस्तानध्यजीगपत् ॥ ५ ॥

## चित्सुखस्य शिष्यतया स्वीकारः ।

कालटीसंभवः कश्चिद्विष्णुशर्माभिधो वटुः ।
सहाध्यायी शङ्करस्य स्निग्धोऽनुज इवाभवत् ॥ ६ ॥

निर्विण्णो लौकिकेष्वर्थेष्वन्विष्यन्गुरुमात्मनः ।
आगतो बदरीं शिष्यान् बोधयन्तं स शङ्करम् ॥ ७ ॥

पश्यन् लब्धं गुरुं मेने चिरादीप्सितमादरात् ।
नमन् स्तुवन् विष्णुशर्मा गुरोः पादावुपाग्रहीत् ॥ ८ ॥

श्रुतीनामाक्रीडः प्रथितपरहंसोचितगतिः
निजे सत्ये धाम्नि त्रिजगदतिवर्तिन्यभिरतः ।
असौ ब्रह्मैवास्मिन् न खलु विशये किन्तु कलये
बृहेरर्थं साक्षादनुपचरितं केवलतया ॥ ९ ॥

क्षीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्यागतं
दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् ।
येनाशेषविशेषदोषलहरीमासेदुषीं शेमुषीं
सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रणीः ॥ १० ॥

इत्थं स्तुवन्विष्णुशर्मा गुरोः पादावुपस्पृशन् ।
प्रार्थयामास शिष्यत्वेनात्मनो ग्रहणं मुहुः ॥ ११ ॥

एवं संप्रार्थितो युक्तं विदित्वा शङ्करोऽञ्जसा ।
विरक्तं चक्षुषा दिव्येनापश्यत् करुणावता ॥ १२ ॥

दत्वा श्रीचित्सुखाभिख्यां तस्मै देशिकपुङ्गवः ।
यतिं चकार विधिना महावाक्यान्युपादिशत् ॥ १३ ॥

(१३) कथेयं बृहच्छङ्करविजयानुसारिणी । सुरेश्वरवार्तिक-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## तप्तकुण्डोत्पत्तिः ।

तत्रातिशीतार्दितदेशिकस्य संरक्षणायातुलितप्रभावः ।
तप्तोदकं प्रार्थयते स्म चन्द्रकलाधरात्तीर्थकरप्रधानः ॥ १४ ॥

कर्मन्दिवृन्दपतिना गिरिशोऽर्थितः सन्
सन्तप्तवारिलहरीं स्वपदारविन्दात् ।
प्रावर्तयत् प्रथयती यतिनाथकीर्तिं
याऽद्यापि तत्र समुदञ्चति तप्ततोया ॥ १५ ॥

## बदरीनाथप्रतिष्ठा ।

एवं गुरुं पर्यचरत्स भक्त्या शिष्यैः समेतो यतिसार्वभौमः ।
तत्र स्थितः कान्यपि वासराणि स्वप्ने हरिं प्रैक्षत सुप्रसन्नम् ॥ १६ ॥

मूर्तिर्मदीया सलिलेऽत्र मग्नास्त्युद्धृत्य तां संपरिपूजयेति ।
तदुक्तिमाकर्ण्य तथा विधाय नारायणं तं समपूजयच्च ॥ १७ ॥

**अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदयां विस्तारय तारय संसारसागरतः ॥ १८ ॥**

---

करणावसरे चित्सुखाद्या इति माधवीये स्मर्यते । श्रुतीनामाक्रीड इत्यादि माधवीयगत (५ अ-११०-११७) श्लोकाष्टकं चित्सुखकर्तृकं गुर्वष्टकमिति प्रथा ॥

(१४) गुरुवंशकाव्ये—बालस्याचार्यस्य शीतबाधामसहिष्णुः देवः स्वयमुष्णोदककुण्डं निर्मम इति, माधवीये शिष्यसंघस्य शीतबाधानिवृत्त्यर्थे (तत्रातिशीतार्दित शिष्यसंघ-इति पाठः) आचार्यः शिवं प्रार्थयत इति च कथाक्रमः । स्वगुरोर्गोविन्दमुनेः शुश्रूषायामादरो मूलतयोद्धरणे हेतुः कृतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे भवभयखेदच्छिदौ वन्दे ॥ १९ ॥

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ २० ॥

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ २१ ॥

तस्यालयं कारयितुं पूजां कर्तुं च नित्यशः ।
यदा स चिन्तयन्नास्ते कालव्या आगमत्तदा ॥ २२ ॥

अग्निशर्माभिधो मात्रा प्रेषितस्तद्दिदृक्षया ।
आर्यांबा स्वं धनं पूर्णं तस्य हस्ते निधाय च ॥ २३ ॥

तमन्वयुंक्त व्ययितुं शंकरोद्दिष्टवर्त्मना ।
ववन्दे शंकरं पूर्णतेजस्कं प्रयतो वटुः ॥ २४ ॥

न्यवेदयज्जराजीर्णां मातरं तं दिदृक्षतीम् ।
धनं च भूरि तद्दत्तं आर्पिपत्पदयोर्गुरोः ॥ २५ ॥

शंकरः कारयामास तद्धनेनालयं हरेः ।
न्ययुंक्त चाग्निशर्माणं नियतं पूजने हरेः ॥ २६ ॥

अद्यापि देवं नियमेन तस्मात्समागतः केरलनामदेशात् ।
पौर्वाश्रमः स्वो जन एव चास्य तदा तदा पूजयति प्रसिद्धम् ॥

तदालयं कारयितुं पद्मपादं समादिशत् ।
गुरोरनुज्ञां शिरसा वहन् स निरमापयत् ॥ २८ ॥

षट्पदीनौकया सर्वानुदधार नतोऽस्म्यहम् ।
संसारसागरे मग्नान् यस्तं शङ्करदेशिकम् ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## मातुः निर्याणम् ।

अत्रान्तरेऽपि जननी जरती तदीया सस्मार शङ्करपदं निकटस्थमृत्युः ।
तच्छङ्करो विदितवान् युयुजे विविक्ते सोऽन्तर्दधे गगनमण्डलमाससाद ॥ ३० ॥

योगेन गच्छन् स मुहूर्तमात्रात् अवातरत्केरलभूविशेषे ।
तद्देशबुद्ध्या पुनरीक्षमाणः स्वां कालटीं जन्मभुवं प्रपेदे ॥ ३१ ॥

तत्रातुरां मातरमैक्षतासौ ननाम तस्याश्चरणौ महात्मा ।
सा चैनमुद्वीक्ष्य शरीरतापं जहौ निदाघार्तिमिवाम्बुदेन ॥ ३२ ॥

दृष्ट्वा चिरात्पुत्रमनामयं सा हृष्टान्तरात्मा निजगाद मन्दम् ।
अस्यां दशायां कुशली मया त्वं दिष्ट्यासि दृष्टः किमतोऽस्ति कृत्यम् ॥

इतः परं पुत्रक गात्रमेतत् वोढुं न शक्नोमि जरातिशीर्णम् ।
संस्कृत्य शास्त्रोदितवर्त्मना त्वं सद्वृत्त मां प्रापय पुण्यलोकान् ॥

सुतानुगां सूक्तिमिमां जनन्याः श्रुत्वाऽथ तस्यै सुखरूपमेकम् ।
मायामयाशेषविशेषशून्यं मानातिगं स्वप्रभमप्रमेयम ॥ ३५ ॥

उपादिशद्ब्रह्म परं सनातनं न यत्र हस्ताङ्घ्रिविभागकल्पना ।
अन्तर्बहिः संनिहितं यथाम्बरं निरामयं जन्मजरादिवर्जितम् ॥ ३६ ॥

तत्रोपदिष्टे न विवेद किञ्चित् माताऽवदच्छङ्कर न क्षमेऽहम् ।
त्वयोदितं वेदितुमन्यदेव वदेति तच्छङ्कर आप चिन्ताम् ॥ ३७ ॥

---

(३०) व्यासाचलीयानुरोधेनात्र कथेयं संदृभ्यते । माधवीये कालेन भिन्नः क्रमः । परं भट्टसमागमाय प्रयागं गतवति भगवत्पादैः 'अस्मारि माताऽपि च या पुपोष दधार या दुःखमसोढ भूरि' इति मातृस्मरणं मातरि जीवन्त्यां यतेः पुण्यतीर्थेषु अप्राप्तकालम् । चिद्विलासीये मातुर्मृतायाः स्मरणं इति स्पष्टमभिधानम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्त्यकालस्मृतिं तस्याः शिवे ब्रह्मणि निश्चलाम् ।
विधातुकामो मृत्योश्चाभीतिं प्रार्थयतेश्वरम् ॥ ३८ ॥

जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकम्पिन् विपन्नार्तिहारिन् ।
महस्स्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ ३९ ॥

विरूपाक्ष विश्वेश विश्वादिदेव त्रयीमूल शंभो शिव त्र्यंबक त्वम् ।
प्रसीद स्मर त्राहि पश्यावमुक्त्यै क्षमां प्राप्नुहि त्र्यक्ष मां रक्ष मोदात्॥

यदा दारुणाभाषणा भीषणा मे भविष्यन्त्युपान्ते कृतान्तस्य दूताः ।
तदा मन्मनस्त्वत्पदांभोरुहस्थं कथं निश्चलं स्यान्नमस्तेऽस्तु शंभो ॥

इदानीमिदानीं मृतिर्मे भवित्रीत्यहो सन्ततं चिन्तया पीडिताऽस्मि ।
कथं नाम माभून्मृतौ भीतिरेषा नमस्ते गतीनां गते नीलकण्ठ ॥

एवं स्तुवति मात्रर्थे शङ्करे गतमृत्युभीः ।
माता गृहीत्वा तं हस्तेऽवोचद्गद्गदितस्वरा ॥ ४३ ॥

वत्स त्वज्जनकं प्रापं धन्या त्वां तनयं तथा ।
वृषाचलेशितुः शम्भोः करुणापाङ्गवीक्षणात् ॥ ४४ ॥

मृते भर्तरि तद्दुःखं व्यस्मार्षं तव दर्शनात् ।
उपनीते गुरुकुलं गते त्वद्विरहातुरा ॥ ४५ ॥

अनैषं दिवसान् दुःखात् तवागमनकांक्षया ।
गृहीतपादो नक्रेण वत्स सन्न्यस्तवान् यदा ॥ ४६ ॥

अचक्षुरभवं मूका स्तब्धसर्वाङ्गचेष्टिता ।
नापश्यं नारुदं नैवाकार्षं किञ्चिदपि स्वयम् ॥ ४७ ॥

नैवाविदमहोरात्रं कदाचित्त्वागतस्मृतिः ।
क्रमाद्विदितवृत्ताहमरुदं त्वददर्शनात् ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा जाता घृणा काचिदस्थाने परमेश्वरे ।
रुद्रः करालो भूताभिङ्गी निष्करुणः स्वतः ॥ ४९ ॥

दत्तापहारी तं त्वां च दत्वा मह्यं स्वतो मुदा ।
युवयोर्वैभवज्ञानात्प्रागेवापाहरद्यतः ॥ ५० ॥

मनोरथान् समुद्दीप्य नैव पूर्णांश्चकार तान् ।
नापारयमपाकृष्टुं भावं तमशुभं हृदः ॥ ५१ ॥

स्मरद्भिर्नाम माहेशं भक्त्योच्चैः समुदाहृतम् ।
शिव शम्भो शङ्करेति युवयोः स्मरणप्रदम् ॥ ५२ ॥

श्रोतुं नाशक्नुवं कर्णौ पिदधे जातसाध्वसा ।
तदादि वन्दनं ध्यानं श्रवणं स्मरणं प्रभोः ॥ ५३ ॥

अर्चां च त्यक्तवत्यासं बलात् त्वद्विरहातुरा ।
क्रमात् विवेकहसिता दुर्भावाः परमेश्वरे ॥ ५४ ॥

वृषाचलेशं मनसा ध्यायन्ती तद्दिदृक्षया ।
तं देशं नाशकं गन्तुं जराजीर्णकृशाङ्गका ॥ ५५ ॥

स्वप्ने मामादिशच्छम्भुः गन्तुं गेहान्तिकस्थितम् ।
वल्गद्रौप्यमृगोद्दिष्टं स्वं धाम परमाद्भुतम् ॥ ५६ ॥

तदादेशेन तत्रस्थमुपातिष्ठे गतक्लमा ।
शक्तिः क्रमेण जहास गन्तुं तं देशमप्युत ॥ ५७ ॥

अपेक्षमाणान्यं कञ्चिदालम्बं तं गृहान्तगम् ।
गोविन्दं शरणं प्राप्तं तद्ध्यानाधूतवेदना ॥ ५८ ॥

---

(५६) वेल्लिमान तुलीति कालटीपरिसरगतं क्षेत्रम् । तत् भगवतः पुरः वल्गता रौप्यमृगेण सूचितमार्यायै ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स एव मेऽद्य हृदये तिष्ठत्यद्भुतविग्रहः ।
प्रार्थयस्व तमेवाद्य कीर्तयात्र तमेव भोः ॥ ५९ ॥

इत्थं सकरुणं भाववशयोदीरितं वचः ।
श्रुत्वा मातुः प्रियतरं अस्तौदच्युतमव्ययम् ॥ ६० ॥

चिदंशं विभुं निर्मलं निर्विकल्पं निरीहं निराकारमोंकारगम्यम् ।
गुणातीतमव्यक्तमेकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ॥ ६१ ॥

सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत्पुण्डरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ६२ ॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डैः चतुर्भिश्चलत्कङ्कणालंकृताग्रैः ।
उदारोदरालङ्कृतं पीतवस्त्रं पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥ ६३ ॥

स्वभक्तेषु सन्दर्शिताकारमेवं सदा भावयन् सन्निरुद्धेन्द्रियाश्वः ।
दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥ ६४ ॥

कफव्याहतोष्णोल्बणश्वासवेगव्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥

लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति ।
यथाऽनुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥

शृण्वन्ती तां स्तुतिं प्राह शङ्करं शान्तचेतसा ।
न मे भीर्मरणे, चिन्ता तवार्थे वा जितात्मनः ॥ ६७ ॥

अपि स्मरसि गोविन्दाष्टकं तन्मन्मनोहरम् ।
बाल्ये गीतं त्वया भक्त्या कुतुकात्कृष्णसन्निधौ ॥ ६८ ॥

तद्गायस्वाद्य मे प्राणान्मुमुक्षोर्हृद्रसायनम् ।
श्रुत्वा मातुः प्रियतमं तदगायन्मुदान्वितः ॥ ६९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्रांगणरिंखणलोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ ७० ॥

मृत्स्नामत्सीहेति यशोदाताडनशैशवसन्त्रासं
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।
लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥ ७१ ॥

गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं
गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् ।
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं
गोधीगोचरदूरं प्रणमत गोविन्दं परमानन्दम् ॥ ७२ ॥

स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं
व्यादित्सन्तीरथ दिग्वस्त्रा उपदातुमुपाकर्षन्तम् ।
निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्स्थं
सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥ ७३ ॥

स्तुतिमेनां श्रुतवती बभूवानन्दनिर्भरा ।
स्मरणादेव कृष्णस्य शाश्वतीं शान्तिमन्वभूत् ॥ ७४ ॥

चित्ते दधार तं कृष्णमम्बुजाक्षं मुनिर्मले ।
धारणा श्लथितेवाभूत् तदा प्राग्वासनाबलात् ॥ ७५ ॥

गायन्तं शङ्करं प्राह धारणादार्ढ्यवाञ्छया ।
अपि स्मरेयं गोविन्दं पूर्णभावेन मुक्तिदम् ॥ ७६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि वा वासना दुष्टा मोहयेन्मामसूद्गमे ।
वद कञ्चिदुपायं मे यथा स्याद्धारणा दृढा ॥ ७७ ॥

तमेव सर्वभावेन गच्छेयं शरणं हृदा ।
मातरं विह्वलां दृष्ट्वा सान्त्वयामास शङ्करः ॥ ७८ ॥

अंब मार्भैर्यथा चिन्ता न व्यपेयान्मुकुन्दतः ।
कृष्णस्य दर्शनं साक्षात्संभवेत् स्मृतिदार्ढ्यदम् ॥ ७९ ॥

तथा कृष्णमुपस्थास्ये मातस्तव कृपाबलात् ।
अथ संचिन्तयन्देवमुपतस्थे यदूद्वहम् ॥ ८० ॥

श्रियाश्लिष्टं शरण्यं तं चराचरगुरुं हरिम् ।
विषयीभवितुं मातुश्चक्षुषोर्मातृवत्सलः ॥ ८१ ॥

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयः
धियां साक्षी शुद्धो हरिरसुरहन्ताऽब्जनयनः ।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशस्तव भवतु कृष्णोऽक्षिविषयः ॥ ८२ ॥

यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निश्शेषं योऽवति निजसुखांशेन मधुहा ।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः
शरण्यो लोकेशस्तव भवतु कृष्णोऽक्षिविषयः ॥ ८३ ॥

पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशस्तव भवतु कृष्णोऽक्षिविषयः ॥ ८४ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति हरिरखिलात्माऽऽराधितः शङ्करेण श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः ।
यतिवरनिकटे श्रीयुक्त आविर्बभूव खगणवृत उदारः शङ्खचक्राब्जहस्तः ॥ ८५ ॥

पश्यन्ती मुरजिद्रूपं यथा शङ्करवर्णितम् ।
मृतिकाले समासन्ने श्रीकृष्णचरणाब्जयोः ॥ ८६ ॥

लीनचित्ता जहौ प्राणान्निर्वृतोदारदर्शना ।
योगिगम्यं पदं प्राप माता यतिवरस्य सा ॥ ८७ ॥

संस्कर्तुकामो जननीं सनाभीन् जुहाव नायन् किल दुर्विदग्धाः ।
ततो हुताशं प्रतिगेहमार्दत् तं चापि नास्मै वितताार कश्चित् ॥ ८८ ॥

निर्मथ्य बाहुमचिराद्दक्षिणमग्निं ततः समाहृत्य ।
कर्म यथावद्यताचक्रे मातुर्जगद्गुरुः स्वस्य ॥ ८९ ॥

यथाप्रतिश्रुतं मातुश्चरमां संस्कृतिं गुरुः ।
सन्निधाय स्वयं कुर्वन् दध्यौ मातरमात्मवान् ॥ ९० ॥

आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा
नैरुच्यं तनुशोषणं मलमयी शय्या च सांवत्सरी ।
एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमः
दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः ॥ ९१ ॥

यतिसमुचितवेषं स्वप्नकाले तु दृष्ट्वा गुरुकुलमुपसृत्य प्रारुदो मां त्वमुच्चैः ।
गुरुकुलमथ सर्वं प्रारुदत्ते समक्षं सपदि चरणयोस्ते मातरस्तु प्रणामः ॥

अंबेति तातेति शिवेति तस्मिन्प्रसूतिकाले यदवोच उच्चैः ।
कृष्णेति गोविन्द हरे मुकुन्देत्यन्ते जनन्यै रचितोऽयमञ्जलिः ॥ ९३ ॥

ध्यायन्नेवं स्वजननीं निर्जगाम स निर्ममः ।
गुरोश्चरणसेवायै प्रतस्थे बदरीं प्रति ॥ ९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीक्ष्य तद्दुष्करं कर्म शङ्करस्य यतीशितुः ।
आत्मानं मेनिरे विप्राः दग्धान्दौश्शील्यवह्निना ॥ ९५ ॥

न विप्रत्वं न बन्धुत्वं ग्रामगैस्तैः पुरस्कृतम् ।
यत्तेऽर्थिता नादुरग्निं नोपाकुर्वंश्च संस्कृतौ ॥ ९६ ॥

तदादि तद्देशभवा न वेदमधीयते नो यमिनां च भिक्षा ।*
महत्सु धीपूर्वकृतापराधो भवेत्पुनः कस्य सुखाय लोके ॥ ९७ ॥

---

(९७) एवं अभिशप्तं कालटीदेशं सप्ततिवत्सरेभ्यः प्राक् केरल-नृपात् स्वीकृत्य संशोध्य क्षेत्रात्मना परिष्कारयामासुः शृङ्गगिरि शारदा-पीठाधिपति जगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारती श्रीचरणाः। भजे शारदाम्बां मदम्बां इति आर्याम्बिकात्वेनैव स्मर्यमाणायाः शारदायाः भगवत्पादानां च तत्रालयं निर्माय प्रतिष्ठापयामासुः गत सौम्यमाघ शुक्लद्वादश्यां (२१-२-१९१०) मातुरन्त्येष्टिस्थलं प्रागेव शिलादीपनिवेशेन सुरक्षितं च परिष्कारयामासुः । तदा तच्छुभावसर-स्मारकाः श्लोकाः शिलासूट्टंकिताः ; येषु केचिदिमे शारदामन्दिरे —

प्रायशो वर्षसाहस्रद्वितयात्प्राक् सदाशिवः ।
दृष्ट्वाऽधर्मेण धर्मस्य ग्लानिं सर्वत्र भूतले ॥
कालट्यां केरले श्रीमच्छङ्कराचार्यसंज्ञया ।
प्राप्य जन्म स्वप्रतिज्ञापालनार्थमिवादरात् ॥
जुगोप धर्मं तेनास्मानिति वृत्तं पुरातनम् ।
ज्ञात्वाऽप्याचार्यचारित्रबोधकग्रन्थराशिभिः ।
अकृतज्ञा वयं मोहान्न स्मरामो जगद्गुरुम् ॥
तेन पापेन चास्माकं विविधापत्तिसंभवः ।
इत्यालोच्य महायोगी हितैषी जगतां सदा ॥
श्रीगुरुः सच्चिदानन्दशिवाभिनवपूर्वकः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशे समागतममुं कलयन् महान्तं द्राक् राजशेखरनृपः सविधं समेत्य ।
तं प्राणमद् गुरुरथैष तमप्यपृच्छत् किं नाटकत्रयमिह प्रथते भुवीति ॥ ९८ ॥

स्वामिन् गतं तदनले बत मे प्रमादात् इत्युक्तवांस्तदनु कारुणिकः सुमेधाः ।
स्मृत्वा तदैव तदलीलिखदेष चित्रं यच्छ्रावितं नृपतिना सकृदेव बाल्ये ॥ ९९ ॥

भूषणाय निगमान्तगवीनां भीषणाय कथकप्रकराणाम् ।
शङ्कराय भवसिन्धुनिमज्जत्किङ्करावनकृते प्रणतोऽस्मि ॥ १०० ॥

इति श्रीशङ्करविजयमकरन्दे चतुर्दश आस्वादः समाप्तः ॥

---

नृसिंहभारतीस्वामी दक्षिणाशामठाधिपः ॥
कृतघ्नतानिरासाय जनताभ्युदयाय च ।
कालट्यां जन्मपूतायां भूमौ लोकगुरोर्द्रुतम् ॥
निर्माप्यागारयुगलं मात्रा साकं सुतस्य च ।
स्मृतिर्भूयादेकदैवेत्याकलय्य हृदम्बुजे ॥
मूर्तिं गुरोर्जनिमतां मूर्त्या वाण्याः सहैव हि ।
संप्रतिष्ठाप्य वेदोक्तविधानेनातिभक्तितः ।
कुम्भाभिषेकं च ततः कारयामास योगिराट् ॥

## आर्याम्बासमाधिस्थले

शङ्करगुरुवरचरितं या भूः कालाद्बहोः प्रवृत्तमपि ।
बोधयितुं जनताया आस्ते पूर्णानदीतटेऽद्यापि ॥
तादृक्षमहिमवत्यां भूमौ स्वद्रष्टृपापभङ्गायाम् ।
श्रीमच्छङ्करदेशिकरचितव्याख्यानभद्रपीठवरम् ।
अधितिष्ठद्भिरिदानीं सच्चित्सुखपूर्वनवनृसिंहाख्यैः ॥
श्रीशङ्करार्यमातुः स्मृतिजननाय प्रतिष्ठितो ग्रावा ।
जीयाच्चिरं दिशन्नयमिह वसतां सौख्यमद्भुतं नृणाम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ पञ्चदश आस्वादः ॥

गोविन्दभगवत्पादानां ब्रह्मीभावः ।

अपि हालनृपालपालितं द्रागपहायेन्द्रहरिन्मुखं वितन्द्रम् ।
श्रितमुर्मुरमुद्दरंस्त्रिवेण्यां यतिराड् भट्टमघानि वो वितृण्यात् ॥ १ ॥

कालटीं प्रस्थिते तस्मिन् गुरुर्गोविन्दसंयमी ।
आम्रकूटं ययौ रेवातीरगं शिष्यसंवृतः ॥ २ ॥

शङ्करः संगतस्तत्र गुरुशुश्रूषणे रतः ।
तुरीयाश्रमधर्मांश्चाधिजगे गोविन्दयोगितः ॥ ३ ॥

कदाचित्प्रवया वृद्धो गुरुर्गोविन्दसंयमी ।
शिष्यानाकारयामास सर्वाननुशशास च ॥ ४ ॥

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहम् ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ ५ ॥

---

सङ्कलने मूलम् — जगद्गुरुरत्नमालास्तवतः १, बृहच्छङ्करविजयतः ५-१४, ७२-१०१, पतञ्जलिविजयतः १५, व्यासाचलीयतः १६-१८, २७, ६४-६५, ११४-१२३, यमुनाष्टकतः २४-२५, माधवीयतः २६-६५, १०३-१०७ १०९-११३ शङ्कराभ्युदयतः २६,१०२-११२ आनन्दगिरीयतः २९-५८ गोविन्दनाथीयतः ६६-७१ हरिहराद्वैतभूषणतः १२४

(१) हालनृपालेन तदभिधानेन मगधमहीपतिना तदात्वे पाल्यमानमपि, अतिधार्मिकराजरक्षितत्वेन त्यागानर्हमपि इन्द्रहरिन्मुखं विसृज्य । श्रितमुर्मुरं प्रायश्चित्तकाण्डप्रामाण्यनिर्वहणाय गुरुमतनिराकरणप्रायश्चित्तं तुषानलप्रवेशमनुतिष्ठन्तम् । वितृण्यात् विलोपयतु ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पवित्रं स्नानशाटीं तु चोत्तरासङ्गदण्डके ।
अतोऽतिरिक्तं यत्किञ्चित् सर्वं तद्वर्जयेद्यतिः ॥ ६ ॥

नदीपुलिनशायी स्यात् देवागारेषु बाह्यतः ।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ ७ ॥

स्नानं ध्यानं तथा शौचं अद्भिः पूताभिराचरेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ ८ ॥

हिरण्यानि च पात्राणि कृष्णायसमयानि च ।
यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः ॥ ९ ॥

भिक्षाटनं जपः शौचं स्नानं ध्यान सुरार्चनम् ।
कर्तव्यानि षडेतानि सर्वदा नृपदण्डवत् ॥ १० ॥

इत्थं प्रशास्य प्रवयाः स्वशिष्यान् शङ्करानुगान् ।
नियोज्य शङ्कराचार्यं अद्वैतस्थापने गुरुः ॥ ११ ॥

सोऽहमस्मीति निश्चित्य विसृज्येतरकांक्षितान् ।
ओमित्येकाक्षरं ब्रह्म ध्यायन्नन्तः परं शिवम् ॥ १२ ॥

शास्त्रश्रुत्यङ्गनेत्राब्दे युधिष्ठिरशकस्य वै ।
प्लवङ्गे कार्तिके मासि पूर्णिमायां गुरोर्दिने ॥ १३ ॥

श्रीमद्गौडपदाचार्यशिष्यो योगविदां वरः ।
गोविन्दभगवत्पादः सिद्धिं प्राप स संयमी ॥ १४ ॥

गोविन्दस्य व्रतिकुलगुरोः सिद्धिमाकर्ण्य कृत्वा
यत्कर्तव्यं तदपि वररुच्यादयो भ्रातरस्ते ।
स्वे स्वे कर्मण्यविहतधियो विद्यया कीर्तिमन्तः
चत्वारोऽपि स्थितिमभिमतामुज्जयिन्यामकुर्वन् ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## कुमारिलभट्टपादसमागमः ।

पृथ्वीं पृथ्वीं पर्यटन् भाष्यकारः स्वेच्छाचारी शिष्यसंघैः परीतः ।
भाष्यं भूष्यं सन्दधानः स्वहस्ते तीर्थं प्रापत्तीर्थिकस्तीर्थमूर्तिः ॥ १६ ॥

कलिन्दपुत्र्याः सजलाभ्रकान्त्याः क्षीराभया जह्नुतनूजया च ।
यत्राभवत्संगतिरल्पपुण्यैः सुदुर्लभा मुक्तिपदं जनानाम् ॥ १७ ॥

ब्रह्मादयोऽप्यमितसंप्रतिपादशक्ता यत्रायजन्त पुरुषार्थविशेषसिद्ध्यै ।
अद्यापि यत्र यजनं प्रथितं प्रशस्तं यस्य प्रयाग इति नाम बभूव लोके ॥ १८ ॥

यथावद्विहितस्नानो यमुनायास्तटे शुभे ।
गोविन्दचरणास्वादचणां प्रार्थयताथ ताम् ॥ १९ ॥

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ २० ॥

आर्तविपदम्बुधिमग्नजनं भवतापशताकुलमानसकं
गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम् ।
ऋणभयभीतमनिष्कृतपातककोटिशतायुतपुञ्जधरं
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥

विधूततापो यमुनामवगाह्य भवापहाम् ।
भागीरथीं शम्भुजटानिर्गतामाप संयमी ॥ २२ ॥

जाह्नवीं सरितां श्रेष्ठां यमुनासंगमेच्छया ।
आगच्छन्तीं जवाच्छुभ्रां ननाम प्रयतो गुरुः ॥ २३ ॥

ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्खलन्ती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षोणीपृष्ठे लुठन्ती दुरितचयचमूनिर्भरं भर्त्सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित् पावनी नः पुनातु ॥ २४ ॥

आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी पातु माम् ॥ २५ ॥

अज्ञातसंभवतिरोधिकथाऽपि वाणी यस्याः सितासिततयैव गृणाति रूपम् ।
भागीरथीं यमुनया परिचर्यमाणां एतां विगाह्य विनतो मुनिराप मोदम् ॥ २६ ॥

सस्नौ प्रयागे सह शिष्यसंघैः स्वयं कृतार्थो जनसंग्रहार्थी ।
अस्मारि माताऽपि च सा पुपोष दधार या दुःखमसोढ भूरि ॥ २७ ॥

अनुष्ठितिं द्रागवसाय्य वातैः कल्हारशीतैरुपसेव्यमानः ।
तीरे विशश्राम तमालशालिन्यत्रान्तरेऽश्रूयत लोकवार्ता ॥ २८ ॥

अथेन्द्रो नृपतिर्भूत्वा प्रजा धर्मेण पालयन् ।
सुधन्वनाम्ना प्रख्यातः सौराष्ट्रेष्वभवत्सुधीः ॥ २९ ॥

कृत्वा द्वारवतीं स्वस्य राजधानीं स भूपतिः ।
दिवं चकार पृथिवीं स्वपुरीममरावतीम् ॥ ३० ॥

स बाल्य एव जैनानां समयं समुपाश्रितः ।
निरादरोऽभूद्यज्ञेषु वेदेषु विबुधेषु च ॥ ३१ ॥

सर्वज्ञोऽप्यसतां शास्त्रे कृत्रिमश्रद्धयाऽन्वितः ।
प्रतीक्षमाणः क्रौञ्चारिं मेलयामास सौगतान् ॥ ३२ ॥

ततः स तारकारातिरजनिष्ट महीतले ।
भट्टपादाभिधा यस्य भूषा दिक्सुदृशामभूत् ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्फुटयन् वेदतात्पर्यमभाजैमिनिसूत्रितम् ।
सहस्रांशुरिवानूरुव्यञ्जितं भासयन् जगत् ॥ ३४ ॥

राज्ञः सुधन्वनः प्राप नगरीं स जयन् दिशः ।
प्रत्युद्गम्य क्षितीन्द्रोऽपि विधिवत्तमपूजयत् ॥ ३५ ॥

सोऽभिनन्द्याशिषा भूपमासीनं काञ्चनासने ।
जगाद कोकिलव्याजाद् राजानं पण्डिताग्रणीः ॥ ३६ ॥

मलिनैश्चेन्न संगस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ ३७ ॥

निर्ग्रन्थिनो निशम्यैनां वाचं तात्पर्यगर्भिताम् ।
नितरां चरणस्पृष्टा भुजङ्गा इव चुक्रुधुः ॥ ३८ ॥

छित्वा युक्तिकुठारेण जैनसिद्धान्तशाखिनम् ।
स तद्ग्रन्थेन्धनैश्चीर्णैः क्रोधज्वालामवर्धयत् ॥ ३९ ॥

उपन्यस्यत्सु साक्षेपं खण्डयत्सु परस्परम् ।
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥ ४० ॥

अधः पेतुर्भुवेन्द्रेण क्षताः पक्षेषु तत्क्षणम् ।
व्यूढकर्कशतर्केण तथागतधराधराः ॥ ४१ ॥

ततः प्रक्षीणदर्पेषु जैनेषु वसुधाधिपम् ।
बोधयन् बहुधा वेदवचांसि प्रशशंस सः ॥ ४२ ॥

बभाषेऽथ धराधीशो विद्यायत्तौ जयाजयौ ।
पृच्छामि भवतः किञ्चित् वक्तुं न प्रभवन्ति ये ॥ ४३ ॥

यन्त्रोपलेषु सर्वांस्तान् घातयिष्याम्यसंशयम् ।
इति संश्रुत्य गोत्रेशो घटमाशीविषान्वितम् ॥ ४४ ॥

 CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनीयात्र किमस्तीति पप्रच्छ द्विजसौगतान् ।
वक्ष्यामहे वयं भूप श्वः प्रभातेऽस्य निर्णयम् ॥ ४५ ॥

इति प्रसाद्य राजानं जग्मुर्भूसुरसौगताः ।
पद्मानीव तपस्तेपुः कण्ठद्वयसपाथसि ॥ ४६ ॥

भास्करं प्रति भूदेवाः सोऽपि प्रादुरभूत्ततः ।
सन्दिश्य वचनीयांशमादित्येऽन्तर्हिते द्विजाः ॥ ४७ ॥

भट्टाचार्यं पुरस्कृत्य समाजग्मुर्नृपान्तिकम् ।
ज्ञात्वा गूढं प्रधानेभ्यः सौगताः कलशस्थितम् ॥ ४८ ॥

निर्ग्रन्थिनोऽपि संहृष्टाः सभां प्रापुर्महीपतेः ।
जैनास्तु ज्ञातवृत्तान्ता भुजङ्गोऽस्तीत्यवादिषुः ॥ ४९ ॥

भोगीशभोगशयनो भगवानिति - भूसुराः ।
श्रुत्वा भूसुरवाक्यं तद्वदनं पृथिवीपतेः ॥ ५० ॥

कासारशोषणम्लानसारसश्रियमाददे ।
अथ प्रोवाच दिव्या वाक् सम्राजमशरीरिणी ॥ ५१ ॥

नुदन्ती संशयं तस्य सर्वेषामपि शृण्वताम् ।
सत्यमेव महाराज ब्राह्मणो यदभाषत ॥ ५२ ॥

मा कृथाः संशयं तत्र भव सत्यप्रतिश्रवः ।
श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ॥ ५३ ॥

मूर्तिं मधुरिपोः कुम्भे सुधामिव सुराधिपः ।
निरस्ताखिलसन्देहो विन्यस्तेतरदर्शनात् ॥ ५४ ॥

व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ।
ततो भगवतस्तस्य विग्रहं परमाद्भुतम् ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिलोकसुन्दराख्यं तं पुर्यां चक्रे प्रतिष्ठितम् ।
स्कन्दानुसारिणा राज्ञा जैना धर्मद्विषो हताः ॥ ५६ ॥

योगीन्द्रेणेव योगघ्नाः विघ्नास्तत्वावलम्बिना ।
हतेषु तेषु दुष्टेषु भूसुरः परितो बभौ ।
वर्णाश्रमसमाचारं स्थापयन्भुवि वैदिकम् ॥ ५७ ॥

कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु ।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ ५८ ॥

गिरेरवप्लुत्य गतिः सतां यः प्रामाण्यमाम्नायगिरामवादीत् ।
यस्य प्रसादात् त्रिदिवौकसोऽपि प्रपेदिरे प्राक्तनयज्ञभागान् ॥ ५९ ॥

सोऽयं गुरोरुन्मथनप्रसक्तं महत्तरं दोषमपाकरिष्णुः ।
अशेषवेदार्थविदास्तिकत्वात् तुषानलं प्राविशदेष धीरः ॥ ६० ॥

श्रुत्वेति तां सत्वरमेष गच्छन् व्यलोकयत्तं तुषराशिसंस्थम् ।
प्रभाकराद्यैः प्रथितप्रभावैः उपस्थितं साश्रुमुखैर्विनेयैः ॥ ६१ ॥

धूमायमानेन तुषानलेन सन्दह्यमानेऽपि वपुष्यशेषे ।
सन्दृश्यमानेन मुखेन बाष्पपरीतपद्मश्रियमादधानम् ॥ ६२ ॥

दूरे विधूताघमपाङ्गभंग्या तं देशिकं दृष्टिपथावतीर्णम् ।
ददर्श भट्टो ज्वलदग्निकल्पो जुगोप यो वेदपथं जितारिः ॥ ६३ ॥

अदृष्टपूर्वं श्रुतपूर्ववृत्तं दृष्ट्वाऽतिमोदं स जगाम भट्टः ।
अचीकरच्छिष्यगणैः सपर्यां उपाददे तामपि देशिकेन्द्रः ॥ ६४ ॥

उपात्तभिक्षः परितुष्टचित्तः प्रदर्शयामास स भाष्यमस्मै ।
सर्वो निबन्धो ह्यमलोऽपि लोके शिष्टेक्षितः सञ्चरणं प्रयाति ॥ ६५ ॥

भाष्यमालोक्य हृष्टात्मा भट्टाचार्यो यतीश्वरम् ।
निर्मत्सरो गुणग्राही निजगाद महामतिः ॥ ६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शनं दुर्लभं नृणां यतीश्वर भवादृशाम् ।
समासन्नशरीरान्ते समये तु विशेषतः ॥ ६७ ॥

पुण्यैः पुरातनैरेव दृष्टो हि भगवन्मया ।
नृणां संसृतिमोक्षाय त्वादृशैः संगतिर्भवेत् ॥ ६८ ॥

चिरं दिदृक्षुरेवास्मि भगवन्तं महायते ।
भगवानागतो दैवात्तन्मे दृष्टेर्महीयते ॥ ६९ ॥

अस्मिन्नष्टौ सहस्राणि वार्तिकानां यतीश्वर ।
विभान्ति प्रथमे भाष्ये तत्कृत्यै नालमस्म्यहम् ॥ ७० ॥

नाहमद्य मुमूर्षुश्चेत्करिष्यामस्य वार्तिकम् ।
ईदृश्या मे मुमूर्षाया हेतुं शृणु यतीश्वर ॥ ७१ ॥

इतः पूर्वं प्रवृत्तास्ते जैना ब्राह्मणदूषकाः ।
महावीरमताक्रान्तो विरलो वैदिकोऽभवत् ॥ ७२ ॥

नास्तिक्यमीश्वरे वेदे धर्मे चार्सीन्नृणां तदा ।
महावीरं पुरस्कृत्य वर्धमानं स्वदेशिकम् ॥ ७३ ॥

समाविश्य गृहे राज्ञां तान्वशीकृत्य सौगतान् ।
वेदोऽप्रमाणमित्यादिमिथ्यालापमचीकरन् ॥ ७४ ॥

ज्ञात्वाऽपि वैदिकं शास्त्रजालं सम्यग्गुरोर्मुखात् ।
निर्ग्रन्थिनो महातन्त्रान् महावीरमतानुगान् ॥ ७५ ॥

तान् जैनान्नाशकं जेतुं विवादे सर्वथैव हि ।
विजिगीषुरहं जैनान् उद्यतोऽभूवमादरात् ॥ ७६ ॥

तन्मतं न मया बुद्धं निषेध्यं वेददूषकम् ।
ततस्तेषां मतं बोद्धुं त एव शरणीकृताः ॥ ७७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्यत्वेन न ते कञ्चित्पर्यगृह्णन् महीसुरम् ।
तदब्राह्मणमात्मानं नाटयन् जैनवेषतः ॥ ७८ ॥

तन्मतस्थापनोद्युक्तं महावीराभिधं जिनम् ।
वर्धमानं गुरुं प्राप्य तदन्तेवासिभिः समम् ॥ ७९ ॥

पठन्ननुदिनं तत्र कतिचिद्धायनान्यहम् ।
तेषां सिद्धान्तमश्रौषं वेदमार्गमदूषयम् ॥ ८० ॥

तद्देशिकेन सश्लाघमभूवं चाभिनन्दितः ।
निष्णातश्चाभवं जैनरहस्येष्वखिलेष्वपि ॥ ८१ ॥

एकदा स महावीरो ब्रह्मद्वेषी निरंकुशः ।
अतीवादूषयद्वेदान् विप्रान्यज्ञांश्च देवताः ॥ ८२ ॥

श्रुतिस्मृतिविरुद्धार्थबोधकं तद्विजल्पितम् ।
दुराकर्ण्यं समाकर्ण्य विदीर्णमनसो मम ॥ ८३ ॥

अर्णो न्यपतदक्ष्णोऽथ स्थूलमुक्ताफलाकृति ।
ददृशुस्तत्र तच्छिष्यास्तदा सर्वत्र संस्थिताः ॥ ८४ ॥

अपृच्छन् किमिदं तेऽद्य निपतत्यम्बु लोचनात् ।
अवादिषमहं तेभ्यः कपटेनेत्थमञ्जसा ॥ ८५ ॥

युक्तीराकर्ण्य निर्णिक्ताः भवद्देशिकनिर्मिताः ।
समुद्यन्निर्भरानन्दतुन्दिलावशचेतसः ॥ ८६ ॥

निस्सरन्नुरश्रुव्याजेन बहिरानन्दबिन्दवः ।
इत्थं जल्पत्यनल्पं मय्यग्रजं मां तु मेनिरे ॥ ८७ ॥

गुरवे चापि वृत्तान्तमञ्जसैनं न्यवेदयन् ।
ततः साप्तपदीनं ते त्यक्तवन्तः पुरेव मे ॥ ८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणोऽहमिति ज्ञात्वा मद्वधार्थं समुद्यताः ।
महावीरश्च तच्छिष्या विप्रेषु कृतमत्सराः ॥ ८९ ॥

विपक्षपाती बलवान् दूषयिष्यति नो मतम् ।
यथाकथञ्चिन्नाश्योऽयं इत्यामन्त्र्य परस्परम् ॥ ९० ॥

एकदा मां सुविश्रब्धं चन्द्रिकायां सुखास्थितम् ।
गुरोरुत्तुङ्गसौधाग्रं नीत्वोपायेन केनचित् ॥ ९१ ॥

विश्राम्यतो गुरोरेव महावीरस्य शिष्यकाः ।
परस्परं सँल्लपन्तः क्रीडन्तश्च सुनिर्भरम् ॥ ९२ ॥

गुरोः संप्राप्य संकेतं उत्क्षिपन्तः परस्परम् ।
हस्तेनोत्क्षिप्य मां चापि प्रहसन्तः पुनः पुनः ॥ ९३ ॥

एते कदर्यहतकाः महावीरमतानुगाः ।
गुरोस्तत्सौधशिखरात् सहसा मां न्यपातयन् ॥ ९४ ॥

परिभ्रान्तस्तथा सौधात् पतन् सन्नुक्तवानहम् ।
यदि वेदाः प्रमाणं स्युर्जीवेयमिति चेतसि ॥ ९५ ॥

यदीति संशयत्वोक्तेः गुरुद्रोहात्तथा मम ।
पततस्तूच्चदेशान्मे चक्षुरेकं परिक्षतम् ॥ ९६ ॥

तत्प्रदेशाद्विनिष्क्रम्याक्षतगात्रः सपद्यहम् ।
महावीरे कृतद्वेषः तन्मतं सर्वतो भुवि ॥ ९७ ॥

युक्तिभिश्च तदुक्ताभिः विवाद्य नृपसंसदि ।
जित्वा जैनान्विवादेषु जिनं चापि न्यदूषयम्* ॥ ९८ ॥

स्थापितश्च पुनः कर्ममार्गः स्थिरतरो मया ।
एवं लोकहितं कृत्वा वर्तमानस्य मे मुदा ॥ ९९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईदृशी बुद्धिरुत्पन्ना निश्चिता यतिपुङ्गव ।
एकाक्षरोपदेष्टापि गुरुर्भूतो न संशयः ॥ १०० ॥

उपदेष्टा तु शास्त्रस्य किं पुनः कथ्यते जिनः ।
अहं सर्वज्ञतोऽधीत्य शास्त्रं तस्य निरासकः ।
अभूवं यत्ततो दोषः प्रभूतो मयि विद्यते ॥ १०१ ॥

बाह्यं मतं निरसितुं सुगतादधीत्य बाल्यात्तमेव समघातयमार्य जित्वा ।
ईशं निरास्थमपि च स्वत एव वेदा मानं न तत्कृततयेति मताभिमानात् ॥

प्रायोऽधुना तदुभयप्रभवाघशान्त्यै प्राविक्षमार्य तुषपावकमात्तदीक्षः ।
भाग्यं न मे व्यजनि शाबरभाष्यवत्त्वद्भाष्येऽपि किञ्चन विलिख्य यशोऽधिगन्तुम् ॥

इत्यूचिवांसमथ भट्टकुमारिलं तं ईषद्विकस्वरमुखाम्बुजमाह मौनी ।
हे भट्ट कर्मविमुखान् सुगतान्निहन्तुं जातं गुहं भुवि भवन्तमहं तु जाने ॥

संभावनाऽपि भवतो न हि पातकस्य सत्यं व्रतं चरसि सज्जनशिक्षणाय ।
उज्जीवयामि करकाम्बुकणोक्षणेन भाष्येऽपि मे कलय वार्तिकमङ्ग भव्यम् ॥

प्रत्युत्तरं व्यधित भट्टगुरुर्मुनीन्दो मय्यल्पकेऽपि महिमोक्तिरियं तवार्हा ।
आजानतोऽत्र कुटिलेऽपि जने महान्तस्त्वारोपयन्ति हि गुणं धनुषीव शूराः ॥

सञ्जीवनाय चिरकालमृतस्य च त्वं शक्तोऽसि शङ्कर दयोर्मिकटाक्षपातैः ।
आरब्धमेतदधुना व्रतमागमोक्तं मुञ्चन् सतां न भविताऽस्मि बुधाविनिन्द्यः ॥

चार्वाकदर्शनविधानसरोषधातृशापेन संप्रति शतक्रतुदेशिकेन्द्रः ।
विद्योतते मगधसीमनि विश्वरूपनामा समस्तनयसागरपारदर्शी ॥ १०८ ॥

उम्बेक इत्यभिहितस्य हि तस्य लोके उंवेति बान्धवजनैरभिधीयमाना ।
शप्ता सरोरुहभवेन सरस्वती सा जाता वधूरुभयभारतिकाभिधाना ॥ १०९ ॥

---

(१०८) बृहस्पतेर्ब्रह्मणश्च अंशात् जातो विश्वरूपः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वासु शास्त्रसरणीषु स विश्वरूपो मत्तोऽधिकः प्रियतमश्च ममाश्रवेषु ।
तत्प्रेयसीं शमधनेन्द्र विधाय साक्ष्ये वादे विजित्य तमिमं वशगं विधेहि ॥

तेनैव तावकृतिष्वपि वार्तिकानि कर्मन्दिवर्यतम कारय मा विलम्बः ।
त्वं विश्वनाथ इव मे समये समागाः तत्तारकं समुपदिश्य कृतार्थयेथाः ॥

इत्यूचिवांसमिममृद्धसुखप्रकाशं ब्रह्मोपदिश्य बहिरन्तरपास्तमोहम् ।
तन्वन्दयानिधिरसौ तरसाऽभ्रमार्गमार्गादवाप विषयान्मगधाभिधानान् ॥ ११२ ॥

अथ गिरमुपसंहृत्यादराद्भट्टपादः
शमधनपतिनाऽसौ बोधिताद्वैततत्वः ।
प्रशमितममतः संस्तत्प्रसादेन सद्यो
विदलदखिलबन्धो धाम सत्यं प्रपेदे ॥ ११३ ॥

यदा प्रणम्योपशशाम शङ्करं स भट्टनामा मरणाय दीक्षितः ।
तत्पार्श्ववर्ती विदितार्थसंग्रहः स मण्डनाख्योऽभिजगाम शङ्करम् ॥ ११४ ॥

गुरुर्गरीयानपि वित्तहीनो विद्यासु वृद्धोऽपि गुरुप्रदिष्टः ।
अयं कुरूपी गुरुगेहवासी गुरुं विपत्तावपि नो जहाति ॥ ११५ ॥

गमित एष जनोऽद्य महात्मनो भगवतस्तव पादसरोरुहम् ।
कुरु दृशं कृपयेति समीपगः श्रुतवचाः सहसा स ददौ करम् ॥ ११६ ॥

---

(११४) मण्डनोऽयं अन्यः विश्वरूपात् । ब्रह्मसिद्धिकारोऽयमिति विपश्चितः । व्यासाचलीये गुरुवंशकाव्ये च प्रस्तूयतेऽयं कथाक्रमः । विश्वरूपादन्य एवायमित्यत्र 'किञ्च प्रसिद्धप्रभावैः विश्वरूपप्रभाकरमण्डनवाचस्पतिसुचरितमिश्रैः शिष्टाग्रणीभिः परिगृहीतस्य कथं द्वेषमोहाभ्यां विना अपलापसंभवः' इति न्यायरत्नदीपावल्यामन्यत्र च स्मरणमपि प्रमाणमिति विमर्शकाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिमुनिवारमसावपवित्रजलं स्वमयं मुनिवक्त्रविलोद्भवम् ।
इति मया पुर एव बहु श्रुतो नयनगोचरतामधुना गतः ॥ ११७ ॥

इति वचस्सुधयाप्यभिषिक्तवान् मुनिवरो गृहमेधिशिरोमणिम् ।
विदितवेद्यमनुद्धतभाषिणं मुनिजनैरभिवन्द्यपदाम्बुजः ॥ ११८ ॥

अथ गिरं गृहिराज उपाददे मम जनिस्सफला भवदीक्षणात् ।
न खलु लोचनमाश्रयते फलं घटपटादिभिरीक्षणमात्रतः ॥ ११९ ॥

भवादृशैः संगतिरेव नो गतिः गृहे स्थितानां सुतदारपोषिणाम् ।
क्रमेण मोक्तुं भवदीयसेवनामतो गृहीत्वार्हसि मामितोऽटितुम् ॥१२०॥

एवं वादिनि मण्डने मृदुमनाः प्रोचे दयालिङ्गितः
श्रुत्या चोदितकर्म तच्च तनुयास्तेनान्तरं शुध्यति ।
शुद्धेऽन्तःकरणे परिस्फुरति तत् सौख्यात्मकं ब्रह्म ते
शुद्धे दर्पणमण्डले मुखमिव स्वात्मप्रभं सर्वगम् ॥ १२१ ॥

त्यक्त्वा मण्डन भेदगोचरधियं मिथ्याभिमानात्मिकां
अद्वैते भव निष्ठितो मम वचस्ते रोचते यद्वदः ।
तीर्त्वा संसृतिवारिधिं परपदे ज्ञानप्लवारोहणात्
पारे स्थास्यसि निर्वृतः सुखमये संसारवार्तोज्झिते ॥ १२२ ॥

एवमेनमनुनीय सत्पदैः ब्रह्मबोधनपरैर्गुरुवर्यः ।
मण्डनं निजपदे स्थिरभक्तिं संविधाय गमनाय मनोऽधात् ॥ १२३ ॥

वेदान्तार्थाभिधानेन सर्वानुग्रहकारिणम् ।
यतिरूपधरं वन्दे शङ्करं लोकशङ्करम् ॥

इति श्रीशङ्करविजयमकरन्दे पञ्चदश आस्वादः समाप्तः ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ षोडश आस्वादः ॥

### विश्वरूपजयः ।

पद्ममण्डनमिश्रखण्डनार्थं प्रविशन् पद्मवनं नवं जयार्थी ।
तमधृष्यगिरं विधृष्य वादैर्यतिमाधात्स च पातु मां प्रमोदी ॥ १ ॥

निगमाध्ययने पूर्वं दुर्वासा धातुरन्तिके ।
स्वरेऽस्खलत्तदा वाणीं विहसन्तीं शशाप सः ॥ २ ॥

मानुषी त्वं भवेत्याशु शप्त्वा तस्यै मुनिर्ददौ ।
दर्शने शापमोक्षं च मर्त्यमूर्तेरुमापतेः ॥ ३ ॥

अथ सा भारती जज्ञे शोणातीरे द्विजन्मनः ।
तनया विष्णुमित्रस्य सर्वाङ्गमधुरा सती ॥ ४ ॥

सा वाणी बाल्यमायाता पितृभ्यां परिलालिता ।
क्रमेण ववृधे चान्द्री कलेव सितपक्षगा ॥ ५ ॥

विवाहोचितकाले तामुपयेमे यथाविधि ।
विश्वरूपो महाविप्रः सर्वज्ञां सर्ववित्तमः ॥ ६ ॥

जग्राह पाणिकमलं हिममित्रसूनुः श्रीविष्णुमित्रदुहितुः करपल्लवेन ।
भेरीमृदङ्गपटहाध्ययनाब्जघोषैः दिङ्मण्डले सुपरिमूर्च्छति दिव्यकाले ॥ ७ ॥

---

सङ्कलने मूलम् - जगद्गुरुरत्नमालास्तवतः १. चिद्विलासीयतः २-६, १०-१७. गोविन्दनाथीयतः २-६, ८, ३३-३४, ४४-४५. व्यासाचलीयतः, ७, २०-२१, २५-३२. माधवीयतः ७-९, १८-१९, २५-२९, ३१-३२, ३५-३६, ३८-४३. गुरुवंश-काव्यतः २२-२४. शङ्कराभ्युदयतः ३७. सुषमातः ४६.

(१) पद्मवननामा अग्रहारो मण्डनाधिष्ठितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तया पत्न्या सहावात्सीत् सुचिरं भवने सुखम् ।
निरतो वैदिके मार्गे विश्वरूपो महाद्विजः ॥ ८ ॥

अथ प्रतस्थे भगवान्प्रयागात् तन्मण्डनं पण्डितमाशु जेतुम् ।
गच्छन् खसृत्या पुरमालुलोके माहिष्मतीं मण्डनमण्डितां सः ॥ ९ ॥

---

(९) विन्ध्यादुत्तरतो गौडदेश इति दक्षिणतो द्रविडदेश इति पुरा प्रसिद्धिः । सारस्वताः कान्यकुब्जाः गौडाः उत्कलाः मैथिलाश्चेति गौडाः पञ्च । तत्र कान्यकुब्जगौडदेशीयोऽयं विश्वरूपः । अस्य पिता हिममित्रः काश्मीरराजगुरुः । अतोऽस्य जन्म काश्मीरे । कुमारिलभट्टस्य भगिनीपतिरयं इति केचित् । शोणनदतीरवासिविष्णुमित्रकन्यां परिणेमे । कुमारिलशिष्योऽयं मगधेषु माहिष्मत्यां कुलपतिरासीत् । 'गौडः काश्मीरजन्मा कलितपरिचितिः पूर्वतन्त्रे कुमारात् ब्रह्मण्यः सर्ववेदाः' इत्यस्य परिचयः पुण्यश्लोकमञ्जर्याम् ॥

एतन्निवासभूता माहिष्मती, 'नेपालगिरिसंभूतधर्ममूलानदीतटे । माहिष्मती पुरी चोग्रतारापीठविलासिनी ।' 'यस्याः पुरा राजति माहिष्मती मण्डनधर्ममूला या क्षालयन्ती चरणौ सदाऽस्याः । माहिष्मती मण्डनमण्डिता सा यत्रास्ति तारा भुवनस्य तारा ।' इति महाचीनकर्मान्तर्गतताराचारादिषु प्रसिद्धा, अद्यत्वे बिहारराज्यान्तर्गतसहरसानामकपत्तनात् अष्टक्रोशदूरस्थाने महिसी इति आख्यायमाना, यस्याः पूर्वदिशि धर्ममूला (घेमुण्डा) प्रवहति इति विमर्शकाः । नर्मदातीरगता हैहयराजधानीत्वेन पुराणेषु प्रसिद्धा माहिष्मती अद्यत्वे महेश्वर इति आख्यायमाना इति केचित् । (सुरेश्वराचार्यजीवितसरणतः) परं सर्वत्र मगधेष्विति देशसङ्केतः महेश्वरे न सङ्गच्छते । काश्मीरराजगुरुमण्डनपिता, अतः काश्मीर एव मण्डनसमागम इति ब्रह्मानन्दीये चिद्विलासीये च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पप्रच्छैकं द्विजं तत्र तद्गेहं गन्तुमुन्मनाः ।
क्व हि मण्डनमिश्रस्य वर्तते सद्म विस्तृतम् ॥ १० ॥

तमुवाच स विप्रोऽपि देशिकेन्द्रमनन्यधीः ।
विद्यालयमिति ख्यातं तालद्रुमसमुच्छ्रितम ॥ ११ ॥

प्राकारतोरणाकीर्णं शिलास्तम्भशतावृतम् ।
तत्पुरः पाठशालाभिर्विशालाभिः समन्वितम् ॥ १२ ॥

वितर्दिकां विनिर्माय दशहस्तसमुन्नताम् ।
तत्राध्यस्य स्वयं शिष्यानध्यापयति नित्यशः ॥ १३ ॥

अगारोभयतो वीथ्यौ विनिर्मायातिशोभने ।
तद्द्वारेषु च सर्वत्र पाठयित्वा श्रुतीरपि ॥ १४ ॥

पञ्जरेष्वभितो बद्धाः प्रबुद्धा इव सर्वतः ।
शुकशारीमुखा यत्र तन्वते ननु वाङ्मुखम् ॥ १५ ॥

यद्वीथिकाद्वारनिबद्धकीरैरारादधिष्ठाय परस्परेण ।
विधीयते शास्त्रकथाप्रसंगो जानीहि तन्मण्डनपण्डितौकः ॥ १६ ॥

गायन्ति सामानि च यत्र शार्यः स्तुवन्ति कीरा यजुषा ऋचा च ।
परस्परं सुस्वरमादरेण जानीहि तन्मण्डनमिश्रधाम ॥ १७ ॥

स्वतः प्रमाणं परतः श्रुतिस्सा फलप्रदं कर्म फलप्रदोऽजः ।*
जगद्ध्रुवं स्याज्जगदध्रुवं स्यात् कीरांगना यत्र गिरं गिरन्ति ॥*

द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।
श्रुत्वा च तत्प्राप्य कवेः सकाशं ददर्श तं पद्मजसन्निकाशम् ॥

स विश्वरूपः कृतवह्निकार्यः प्रतीक्षमाणोऽतिथिमातिथेयः ।
उदैक्षतैनं स्वशरीरभाभिः प्रकाशयन्तं विदिशो दिशश्च ॥ २० ॥

(२०) कथाऽत्र द्वेधा दृश्यते । अतिथीन प्रतीक्षमाणं विश्वरूप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुपगतवान शङ्करो भिक्षास्वीकरणार्थं प्रार्थितो वादभिक्षां ययाचे । तदभ्युपगमे च भिक्षानन्तरं सपणबन्धं प्रवृत्ते वादे, जिते विश्वरूपे, विमुक्तशापा तत्पत्नी वाणी अन्तरधात् इति । अयं कथाक्रमः व्यासाचलीये गोविन्दनाथीये गुरुवंशकाव्ये च दृश्यते । आनन्दगिरीय-माधवीय-चिद्विलासीयादौ तु-पैत्र्ये कर्मणि, व्यासजैमिनी सूत्रकारौ महर्षी निमन्त्र्य प्रवृत्ते, द्वारे च मुद्रिते गगनमार्गादवतरन्तं शङ्करं दृष्ट्वा सहसा जातेन क्रोधेनाधिक्षिपति विश्वरूपे, व्यासजैमिनिभ्यां यत्याराधनोपदेशेन शान्ते शङ्करेण वादभिक्षा; वादे जिते मण्डने उभयभारत्या जयाय प्रवृत्तिः, कामविषयकवादसमाहितौ प्रवृत्तस्य शङ्करस्य परकायप्रवेशः कामशास्त्राध्ययनं, पुनः परावृत्य उभयभारत्या जयः, तस्या अनुग्रहप्राप्तिः इति कथाक्रमः । प्रथमोऽत्रानुस्रियते ॥

विश्वरूपस्याधिक्षेपवाक्येषु मध्यगतं 'कन्थां वहसि दुर्बुद्धे' इत्यादिकं माधवीयगतं भास्कराचार्योक्ततया विवृणोति आनन्दानुभवाचार्यो न्यायरत्नदीपावल्याम् । एकदण्डग्रहणकर्मत्यागनिराकरणपूर्वकं त्रिदण्डग्रहणं स्थापयति भेदाभेदवादी भास्कराचार्यः । सन्ध्यावन्दनादिकर्मतदङ्गशिखादिलिङ्गनाम्बदण्डिन एव सन्न्यासिनः न शिखादित्यागिनः इति पक्षं भास्करीयं विश्वरूपप्रभाकरादिमतानुवादपूर्वकं खण्डयति आनन्दानुभवाचार्यः तत्रत्योऽयं सन्दर्भः प्रकृतोपयोगी– "अपि चास्मद्द्वेषोपहतमतिः पश्यन्नपि न पश्यतीति वदेत् । प्रसिद्धं हि तस्य द्वेषाद्भाषणं 'कन्थां वहसि दुर्बुद्धे' इत्यादि" । एकदण्डिसन्न्यास्यधिक्षेपपरं भास्कराचार्यवाक्यं माधवीयादिषु मण्डनवाक्यतया उपनिबद्धं वा? अत्रैव सन्दर्भे प्रभाकरस्य (हस्तामलकपितुः ?) मलयाचलसंभवत्वम्, विश्वरूपस्य हिमालयसम्भवत्वं, विश्वरूपस्यैव तुरीयाश्रमे सुरेश्वरत्वं, विश्वरूपमण्डनयोः पृथक्त्वं च स्मर्यते । यथा वा— "किञ्च प्रसिद्धाप्तवाक्यैः विश्वरूपप्रभाकरगुरुमण्डनवाचस्पतिसुचरितमिश्रैः शिष्टाग्रणीभिः परिगृहीतस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स भिक्षवेऽदृष्टचराय तस्मै सङ्कल्प्य भिक्षां पदयोरमुष्य ।
चिक्षेप पुष्पं चरणावनेजत् तत्पाथसाऽऽत्मानमसिञ्चताद्धा ॥ २१ ॥

आतिथ्यमातनुत सर्वमथैष तस्मै भिक्षार्थमाश्रयत तं परिवेष्य भोज्यम् ।
हस्तेऽस्य नीरमदितोभयभारती सा नासौ पपौ न च मुमोच तथैव तस्थौ ॥

किं कारणं न्विति विशंकितविश्वरूपः पप्रच्छ तं यदि करोषि मयाथ वादम् ।
सम्यग्जयावधि तदेव समाददीय हस्ताम्भ इत्युदित आशु तदभ्युपागात् ॥

जैत्राश्रमाभ्युपगमे पणबन्धभाजौ साक्ष्ये विधाय वनितां च गिरोऽवतारम् ।
आरभ्य भुक्तिसमनन्तरकालमेव मीमांसयोरकुरुतां विबुधौ विवादम् ॥ २४ ॥

ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्ती रूप्यपरात्मनेव बहुलाज्ञानावृतं भासते ।
तज्ज्ञानान्निखिलप्रपञ्चविलयात् स्वात्मन्यवस्था परं
निर्वाणं जनिमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकम् ॥ २५ ॥

बाढं जये यदि पराजयभागहं स्यां सन्न्यासमंग परिहृत्य कषायचैलम् ।
शुक्लं वसीय वसनं द्वयभारतीयं वादे जयाजयफलप्रतिपादिकाऽस्तु ॥ २६ ॥

---

कथं द्वेषमोहाभ्यां विनाऽपलापसंभवः? ननु विश्वरूपप्रभाकरौ भवत्पक्षपातिनौ । उभावप्येकदण्डिनौ प्रसिद्धौ । एवं तर्हि? तादृशसन्न्यासः तत्प्रमाणश्चेत् नापलापमर्हति । न हि तादृशाः स्वपुरुषार्थनाशे बुद्धिपूर्वं यतन्ते । गृहस्थावस्थायां विरचिते च विश्वरूपग्रन्थे दर्शितवाक्यपरिग्रहो दृश्यते । न चासौ ग्रन्थः सन्न्यासिना विरचितः । तथाहि 'परिव्राजकाचार्यसुरेश्वरविरचिते' इति ग्रन्थे नाम लिखेत् । लिखितं तु 'भट्टविश्वरूपविरचिते' इति । तस्मात् प्रसिद्धशिष्टपरिगृहीतयोः मलयहिमालयादिनिलयविद्वदुपासितयोः वाक्यतदर्थयोः द्वेषमात्रान्न विवदितव्यम्', इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थं प्रतिज्ञां कृतवत्युदारां श्रीशङ्करे भिक्षुवरे स्वकीयाम् ।
स विश्वरूपो गृहमेधिवर्यः चक्रे प्रतिज्ञां स्वमतप्रतिष्ठाम् ॥ २७ ॥

वेदान्ता न प्रमाणं चितिवपुषि पदे तत्र संगत्ययोगात्
पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ।
शब्दानां कार्यमात्रं प्रति समधिगता शक्तिरभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामाऽऽयुषः स्यात्समाप्तेः ॥ २८ ॥

वादे कृतेऽस्मिन्यदि मे जयान्यः त्वयोदितः स्याद्विपरीतभावः ।
येयं त्वयाऽभूद्वदिता प्रसाक्ष्ये जानाति चेत्सा भविता वधूर्मे ॥ २९ ॥

इत्थं प्रतिज्ञां सपणां विधाय वादं व्यधत्तां किल देशिकेन्द्रौ ।
कृत्वाऽथ वाणीमथ साक्षिभावे जयाजयप्राप्त्यभिधानदक्षाम् * ॥ ३० ॥

एवं विजेतुमनसोरुपविष्टयोस्तां मालां गले व्यधित सोभयभारतीयम् ।
माला यदा मलिनभावमुपैति कण्ठे यस्यापि तस्य विजयेतरनिश्चयः स्यात् ॥

दिने दिने वासरमध्यने सा ब्रूते पतिं भोजनकालमेव ।
समेत्य भिक्षुं समयं च भक्ष्ये दिनान्यभूवन्निति पञ्चषाणि ॥ ३२ ॥

सस्मिताननपद्माभ्यां प्रगल्भाभ्यां प्रतिक्षणम् ।
ताभ्यामुत्तरमन्योन्यमश्रमेणैव खण्डितम् ॥ ३३ ॥

स्वेदकम्पचिन्तारुट् तयोरेका न वागभूत् ।
न किञ्चित्कालहानिश्च दिनकृत्यकृतं विना ॥ ३४ ॥

अन्ते यतिक्षितिपतेरनुमोच युक्तिं मालां च मण्डनगले मलिनामवेक्ष्य ।*
भिक्षार्थमुच्चलतमद्य युवामितीमावाचष्ट तं पुनरुवाच यतीन्द्रमम्बा ॥ ३५ ॥

ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ।
ब्रह्मणोऽधिपतिर्ब्रह्मन् भवान् साक्षात्सदाशिवः ॥ ३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोपातिरेकवशतः शपता पुरा मां शापावधिस्तव जयो विहितो विधात्रा ।
साऽहं यथागतमुपैमि शमिप्रवीरेत्युक्त्वा तिरोधिमकृतोभयभारती सा ॥ ३७ ॥

---

(३७) माधवीये—शापान्मुक्ता उभयभारती निजधाम यान्ती, तज्जयेच्छुना यतिवरेण वनदुर्गामन्त्रेण बद्धा, वादे प्रवृत्तेऽजय्यं तं बुद्ध्वा, कामशास्त्रविषयकप्रश्नानुत्थापयति । तदुत्तरणाय लब्धावकाशो यतिवरः परकायप्रवेशशैल्या मृतामरुककायं प्रविश्य, कामशास्त्ररहस्यं बुद्ध्वा स्वदेहं प्रत्यावर्तते. यावता मृतनृपजीवनविषये सन्दिहानैः नरपतिभृत्यैः यतिवरवपुषि वह्निर्विसृष्टः । दहनशान्तये नृसिंहं स्तौति यतिवरः । नृसिंहकृपया प्रशान्ते वह्नौ निर्व्रणो यतिपुंगवः पुनर्वादाय उभयभारतीं अभ्येति । वादे जिता उभयभारती शारदाख्यया भगवत्पादकल्पितेषु स्थानेषु सन्निधातुं प्रार्थिता तथेत्यनुगृह्णाति । शृङ्गगिरिपुरे सा शारदाख्यया सन्निहिता प्रद्योतते इति । गुरुवंशकाव्ये—शापान्मुक्ता उभयभारती अन्तर्दधाति । ततः श्रीशैलशेषाचलनारसिंहगिरिजगन्नाथवाराणसीयात्रानन्तरं काश्मीरं गच्छति यतिवरः । तत्र शारदागारस्थसर्वज्ञपीठमारुरुक्षुः अशरीरवाण्या वादायाहूतः कामशास्त्रविषयकोत्तरदानाय परकायप्रवेशशैल्या प्रमीतामरुकशरीरं प्रविश्य भोगान् भुङ्क्ते कामरहस्यज्ञानाय । शङ्कितया राजमहिष्या दह्यमानं स्वशरीरं नरसिंहप्रसादेन पुनर्निर्व्रणं प्रविश्य वादे तां वाणीं जित्वा तां तुष्टां ऋश्यशृङ्गाश्रमागमनाय प्रार्थयते । तथेत्यङ्गीकृत्य तेनैव सह ऋश्यशृङ्गाश्रममागतवतीं वाणीं यतिवरः प्रतिष्ठापयामास तत्रेति कथाक्रमः । अस्मिन्सन्दर्भे भगवत्पादैः नरसिंहप्रसादनाय कृता स्तुतिः लक्ष्मीनृसिंहकरावलम्बाख्या—

श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥

ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसङ्घट्टिताङ्घ्रिकमलामलकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तामामन्त्र्यान्तर्हितां योगशक्त्या पश्यन्देवीं भाष्यकर्ता बभाषे ।*
जानामि त्वां देवि देवस्य धातुर्भार्यामिष्टामष्टमूर्तेः सगर्भ्याम् ॥ ३८ ॥

वाचामाद्यां देवतां विश्वगुप्त्यै चिन्मात्रामप्यात्तलक्ष्म्यादिरूपाम् ।
स्थानेषु त्वं स्मर्यमाणाऽऽविरास्व श्रेष्ठान् अर्थान् शारदाख्या दिशन्ती ॥

तथेति संश्रुत्य सरस्वती सा प्रायात्प्रियं धाम पितामहस्य ।
अदर्शनं तत्र समीक्ष्य सर्वे आकस्मिकं विस्मयमीयुरुच्चैः ॥ ४० ॥

स च यायजूकपरिषत्प्रमुखः प्रणिपत्य शङ्करमवोचदिदम् ।
विदितोऽस्ति संप्रति भवान् जगतः प्रकृतिर्निरस्तसमतातिशयः ॥ ४१ ॥

अहमाचरं बहु तपोऽसुकरं ननु पूर्वजन्मसु न चेदधुना ।
जगदीश्वरेण करुणानिधिना भवता कथा मम कथं घटते ॥ ४२ ॥

तदहं विसृज्य सुतदारगृहं द्रविणानि कर्म च गृहे विहितम् ।
शरणं वृणोमि भगवच्चरणावनुशाधि किङ्करममुं कृपया ॥ ४३ ॥

विश्वरूपं ततो नीत्वा भिक्षुतां देशिकोत्तमः ।
स्वमनोरथलाभेन सन्तुष्टः सुतरामभूत् ॥ ४४ ॥

आचार्यस्य प्रियकरः शिष्यः सन्न्यासनामतः ।
सुरेश्वर इति ख्यातो बभूव भुवनत्रये ॥ ४५ ॥

यो बन्धुः सहभूः सखा च सविता माता धनं दैवतं
त्रातापीति च सर्वमीश्वरमनिरुद्धं च यः सौम्ययेत् ।

---

इत्यादि सप्तदशश्लोकघटिता । परकायप्रवेशवृत्तान्तः सदाशिवब्रह्मेन्द्र-सरस्वतीकृतजगद्गुरुनवरत्नमालिकायां सन्दर्भान्तरे प्रस्तुतः । काञ्च्यां सर्वज्ञपीठारोहणाय प्रवृत्तः शङ्करः अशरीरया वाण्या वादायाहूयते । परकायप्रवेशशैल्या ज्ञातकामतत्त्वः यतिवरः तां वशीकरोतीति तत्र कथासन्दर्भः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्सेवाविधुरा स्थितिः स्रवति हि ब्रह्मादराधीतम-
प्याचार्यं तमहं पुनर्भवगदोल्लाघाय लब्धाश्रये ॥ ४६ ॥

इति श्रीशङ्करविजयमकरन्दे षोडश आस्वादः संपूर्णः ॥

---

## ॥ सप्तदश आस्वादः ॥

### सुरेश्वराय तत्त्वोपदेशः ।

मीमांसया कपटतो भुजगाम्वयेव स्वाधीनतामुपनिषद्विनतेव नीता ।
येनोद्धृताऽमृतफलेन गरुत्मतेव तस्मै नमो भगवतेऽद्भुतशङ्कराय ॥ १ ॥

सन्न्यासमादौ विधिवत्प्रदाय पश्चाद्गुपादिक्षदथात्मतत्त्वम् ।
आचार्यवर्यः श्रुतिमस्तकस्थं तदादिवाक्यं पुनराबभाषे ॥ २ ॥

तत्त्वंपदार्थशुद्ध्यर्थं गुरुः शिष्यं वचोऽब्रवीत् ।
वाक्ये तत्त्वमसीत्यत्र त्वंपदार्थं विवेचय ॥ ३ ॥

न त्वं देहोऽसि दृश्यत्वात् रूपजात्यादिमत्त्वतः ।
भौतिकत्वादशुद्धत्वात अनित्यत्वात्तथैव च ॥ ४ ॥

---

सङ्कलने मूलम् = वेदान्तकल्पलतिकातः माधवीयतः २, ६८, व्यासाचलीयतः २, ६८. तत्त्वोपदेशतः ३-२६, २८-६७, वाक्यवृत्तितः २७. आचार्यदिग्विजयतः ६९.

(३) तत्त्वोपदेशाख्यं प्रकरणमिदं भगवत्पादकर्तृकम् । कथासन्दर्भेऽस्मिन् व्यासाचलीये माधवीये चैकाकारतया 'त्वं नासि देहो घटवद्ध्यनात्मा रूपादिमत्त्वादिह जातिमत्त्वात्' इत्यारभ्योपलभ्यमानो भागः प्रायः प्रकरणमिदं अर्थशोऽनुसरतीति, तस्यैव प्रकरणस्यात्र निवेशः कृतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदृश्यो रूपहीनस्त्वं जातिहीनोऽप्यभौतिकः ।
शुद्धनित्योऽसि दृग्रूपो घटो यद्वन्न दृग्भवेत् ॥ ५ ॥

न भवानिन्द्रियाण्येषां करणत्वेन यच्छ्रुतिः ।
प्रेरकस्त्वं पृथक्तेभ्यो न कर्त्ता करणं भवेत् ॥ ६ ॥

नानैतान्येकरूपस्त्वं भिन्नस्तेभ्यः कुतः शृणु ।
न चैकेन्द्रियरूपस्त्वं सर्वत्राहंप्रतीतितः ॥ ७ ॥

न तेषां समुदायोऽसि तेषामन्यतमस्य च ।
विनाशेऽप्यात्मधीस्तावत् अस्ति स्यान्नैवमन्यथा ॥ ८ ॥

प्रत्येकमपि तान्यात्मा नैव तत्र नयं शृणु ।
नानास्वामिकदेहोऽयं नश्येद्भिन्नमताश्रयः ॥ ९ ॥

नानात्मामिमतं नैव विरुद्धविषयत्वतः ।
स्वाम्यैक्ये तु व्यवस्था स्यादेकपार्थिवदेशवत् ॥ १० ॥

न मनस्त्वं न वा प्राणो जडत्वादेव चैतयोः ।
गतमन्यत्र मे चित्तं इत्यन्यत्वानुभूतितः ॥ ११ ॥

क्षुत्तृड्भ्यां पीडितः प्राणो ममायं चेति भेदतः ।
तयोर्द्रष्टा पृथक्ताभ्यां घटद्रष्टा घटाद्यथा ॥ १२ ॥

सुप्तौ लीनास्ति या बोधे सर्वं व्याप्नोति देहकम् ।
चिच्छायया च संबद्धा न सा बुद्धिर्भवान् द्विज ॥ १३ ॥

नानारूपवती बोधे सुप्ता लीनातिचञ्चला ।
यतो दृगेकरूपस्त्वं पृथक्तस्य प्रकाशकः ॥ १४ ॥

सुप्तौ देहाद्यभावेऽपि साक्षी तेषां भवान् यतः ।
स्वानुभूतिस्वरूपत्वात् नान्यस्तस्यास्ति भासकः ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाणं बोधयन्तं तं बोधं मानेन ये जनाः ।
बुभुत्सन्ते त एधोभिर्दग्धुं वाञ्छन्ति पावकम् ॥ १६ ॥

विश्वमात्माऽनुभवति तेनासौ नानुभूयते ।
विश्वं प्रकाशयत्यात्मा तेनासौ न प्रकाश्यते ॥ १७ ॥

ईदृशं तादृशं नैतन्न परोक्षं सदेव यत् ।
तद्ब्रह्म त्वं न देहादिदृश्यरूपोऽसि सर्वदृक् ॥ १८ ॥

इदंत्वेनैव यद्भाति सर्वं तच्च निषिध्यते ।
अवाच्यतत्त्वमनिदं न वेद्यं स्वप्रकाशतः ॥ १९ ॥

सत्यं ज्ञानमनन्तं च ब्रह्मलक्षणमुच्यते ।
सत्यत्वात् ज्ञानरूपत्वात् अनन्तत्वात्त्वमेव हि ॥ २० ॥

सति देहाद्युपाधौ स्यात् जीवस्तस्य नियामकः ।
ईश्वरः शक्त्युपाधित्वात् द्वयोर्बाधे स्वयंप्रभः ॥ २१ ॥

अपेक्ष्यतेऽखिलैर्मानैः न यन्मानमपेक्षते ।
वेदवाक्यं प्रमाणं तद् ब्रह्मात्मावगतौ मतम् ॥ २२ ॥

अतो हि तत्त्वमस्यादि वेदवाक्यं प्रमाणतः ।
ब्रह्मणोऽस्ति यया युक्त्या साऽस्माभिः संप्रकीर्त्यते ॥ २३ ॥

शोधिते त्वंपदार्थे हि तत्त्वमस्यादि चिन्तितम् ।
संभवेन्नान्यथा तस्माच्छोधनं कृतमादितः ॥ २४ ॥

देहेन्द्रियादिधर्मान् यः स्वात्मन्यारोपयन् मृषा ।
कर्तृत्वाद्यभिमानी च वाच्यार्थस्त्वंपदस्य सः ॥ २५ ॥

देहेन्द्रियादिसाक्षी यस्तेभ्यो भाति विलक्षणः ।
स्वयंबोधस्वरूपत्वात् लक्ष्यार्थस्त्वंपदस्य सः ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलस्सत्याद्यात्मकस्तत्पदाभिधः ॥ २७ ॥

वेदान्तवाक्यसंवेद्यविश्वातीताक्षरद्वयम् ।
विशुद्धं यत्स्वसंवेद्यं लक्ष्यार्थस्तत्पदस्य सः ॥ २८ ॥

सामानाधिकरण्यं हि पदयोः तत्त्वमोर्द्वयोः ।
संबन्धस्तेन वेदान्तैः ब्रह्मैक्यं प्रतिपाद्यते ॥ २९ ॥

भिन्नप्रवृत्तिहेतुत्वे पदयोरेकवस्तुनि ।
वृत्तित्वं यत्तथैवैकविभक्त्यन्तकयोस्तयोः ॥ ३० ॥

सामानाधिकरण्यं तत् संप्रदायिभिरीरितम् ।
तथा पदार्थयोरेव विशेषणविशेष्यता ॥ ३१ ॥

अयं स सोऽयमितिवत्संबन्धो भवति द्वयोः ।
प्रत्यक्त्वं सद्वितीयत्वं परोक्षत्वं च पूर्णता ॥ ३२ ॥

परस्परविरुद्धं स्यात्ततो भवति लक्षणा ।
लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनोः ॥ ३३ ॥

मानान्तरोपरोधाच्च मुख्यार्थस्यापरिग्रहे ।
मुख्यार्थस्याविनाभूते प्रवृत्तिर्लक्षणोच्यते ॥ ३४ ॥

त्रिविधा लक्षणा ज्ञेया जहत्यजहती तथा ।
अन्योभयात्मिका ज्ञेया तत्राद्या नैव संभवेत् ॥ ३५ ॥

वाच्यार्थमखिलं त्यक्त्वा वृत्तिः स्याद्या तदन्विते ।
गङ्गायां घोष इतिवज्जहती लक्षणा हि सा ॥ ३६ ॥

वाच्यार्थस्यैकदेशस्य प्रकृते त्याग इष्यते ।
जहती संभवेन्नैव संप्रदायविरोधतः ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यार्थमपरित्यज्य वृत्तिरन्यार्थके तु या ।
कथितेयमजत्ती शोणोऽयं धावतीतिवत् ॥ ३८ ॥

न संभवति साप्यत्र वाच्यार्थेऽतिविरोधतः ।
विरोधांशपरित्यागो दृश्यते प्रकृते यतः ॥ ३९ ॥

वाच्यार्थस्यैकदेशं च परित्यज्यैकदेशकम् ।
या बोधयति सा ज्ञेया तृतीया भागलक्षणा ॥ ४० ॥

सोऽयं विप्र इदं वाक्यं बोधयत्यादितस्तथा ।
तत्कालत्वविशिष्टं च तथैतत्कालसंयुतम् ॥ ४१ ॥

अतस्तयोर्विरुद्धं तत्तत्कालत्वादिधर्मकम् ।
त्यक्त्वा वाक्यं यथा विप्रपिण्डं बोधयतीरितम् ॥ ४२ ॥

तथैव प्रकृते तत्त्वमसीत्यत्र श्रुतौ शृणु ।
प्रत्यक्त्वादीन्परित्यज्य जीवधर्मान् त्वमः पदात् ॥ ४३ ॥

सर्वज्ञत्वपरोक्षादीन् परित्यज्य तदः पदात् ।
शुद्धं कूटस्थमद्वैतं बोधयत्यादरात्परम् ॥ ४४ ॥

तत्त्वमोः पदयोरैक्यमेव तत्त्वमसीत्यलम् ।
इत्थमैक्यावबोधेन सम्यग्ज्ञानं दृढं नयैः ॥ ४५ ॥

अहं ब्रह्मेति विज्ञानं यस्य शोकं तरत्यसौ ।
आत्मा प्रकाशमानोऽपि महावाक्यैस्तथैकता ॥ ४६ ॥

तत्त्वमोर्बोध्यतेऽथापि पौर्वापर्यानुसारतः ।
तथाऽपि शक्यते नैव श्रीगुरोः करुणां विना ॥ ४७ ॥

अपरोक्षयितुं लोके मूढैः पण्डितमानिभिः ।
अन्तःकरणसंशुद्धौ स्वयं ज्ञानं प्रकाशते ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदवाक्यैरतः किं स्याद्गुरुणेति न सांप्रतम् ।
आचार्यवान् हि पुरुषो वेदेत्येवं श्रुतिर्जगौ ॥ ४९ ॥

अनादाविह संसारे बोधको गुरुरेव हि ।
अतो ब्रह्मात्मवस्त्वैक्यं ज्ञात्वा दृश्यमसत्तया ॥ ५० ॥

अद्वैते ब्रह्मणि स्थेयं प्रत्यग्ब्रह्मात्मना सदा ।
तत्प्रत्यक्षात्परिज्ञातं अद्वैतं ब्रह्मचिद्घनम् ॥ ५१ ॥

प्रतिपाद्यं तदेवात्र वेदान्तैर्न द्वयं जडम् ।
सुखरूपं चिदद्वैतं दुःखरूपमसत् जडम् ॥ ५२ ॥

वेदान्तैस्तद्द्वयं सम्यङ् निर्णीतं वस्तुनो नयात् ।
अद्वैतमेव सत्यं त्वं विद्धि द्वैतमसत्सदा ॥ ५३ ॥

त्वमप्येवमनेकेषु दुःखदायिषु जन्मसु ।
भ्रान्तो दैवाच्छुभे मार्गे जातश्रद्धः सुकर्मकृत् ॥ ५४ ॥

वर्णाश्रमाचारपरोऽवाप्तपुण्यमहोदयः ।
ईश्वरानुग्रहाल्लब्धब्रह्मविद्गुरुसत्तमः ॥ ५५ ॥

विधिवत्कृतसन्न्यासो विवेकादियुतः सुधीः ।
प्राप्तो ब्रह्मोपदेशोऽद्य वैराग्याभ्यासतः परम् ॥ ५६ ॥

पण्डितस्तत्र मेधावी युक्त्या वस्तु विचारयन् ।
निदिध्यासनसंपन्नः प्राप्तो हि त्वं परं पदम् ॥ ५७ ॥

अतो ब्रह्मात्मविज्ञानमुपदिष्टं यथाविधि ।
मयाऽऽचार्येण ते धीर सम्यक्त्वं प्रयत्नवान् ॥ ५८ ॥

भूत्वा विमुक्तबन्धस्त्वं छिन्नद्वैतात्मसंशयः ।
निर्द्वन्द्वो निस्पृहो भूत्वा विचरस्व यथासुखम् ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतो निष्प्रपञ्चोऽसि नित्यमुक्तः स्वभावतः ।
न ते बन्धविमोक्षौ स्तः कल्पितौ तौ यतस्त्वयि ॥ ६० ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ६१ ॥

श्रुतिसिद्धान्तसारोऽयं तथैव त्वं स्वया धिया ।
संविचार्य निदिध्यास्व निजानन्दात्मकं परम् ॥ ६२ ॥

साक्षात्कृत्वाऽपरिच्छिन्नाद्वैतब्रह्माक्षरं स्वयम् ।
जीवन्नेव विनिर्मुक्तो विश्रान्तः शान्तिमाश्रय ॥ ६३ ॥

विचारणीया वेदान्ता वन्दनीयो गुरुस्सदा ।
गुरूणां वचनं पथ्यं दर्शनं सेवनं नृणाम् ॥ ६४ ॥

गुरुर्ब्रह्म स्वयं साक्षात्सेव्यो वन्द्यो मुमुक्षुभिः ।
नोद्वेजनीय एवायं कृतज्ञेन विवेकिना ॥ ६५ ॥

यावदायुस्त्वया वन्द्या वेदान्तगुरुरीश्वरः ।
मनसा कर्मणा वाचा श्रुतिरेवैष निश्चयः ॥ ६६ ॥

भावाद्वैतं सदा कुर्यात् क्रियाद्वैतं न कर्हिचित् ।
अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह ॥ ६७ ॥

एवं पुराणगुरुणा परमार्थतत्त्वं शिष्टो गुरोश्चरणयोर्निपपात तस्य ।
धन्योऽस्म्यहं तव गुरो करुणाकटाक्षपातेन पातिततमा इति भाषमाणः ॥ ६८ ॥

श्रीमच्छङ्करसद्गुरोर्भगवतोऽगाधामसाधारणीं
वाणीं नः प्रतनीयसीं मुहुरिमां गातुं समुत्कण्ठते ।
तन्मूर्तिः प्रभुरेव भक्तजनतावात्सल्यवैपुल्यभूः
अस्मै साधु ददातु शस्तदयया हस्तावलम्बं हरः ॥ ६९ ॥

इति श्रीशङ्करविजयमकरन्दे सप्तदशः आस्वादः समाप्तः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ अष्टादश आस्वादः ॥

पद्मपादस्य बदरीनाथालयनिर्माणम् ।

प्रविशन्बदरीमवाप्य सद्यः परमाचार्यपदार्चनं क्रमाद्यः ।
धवलाचलमाप्य योऽप्यमाद्यच्छिवलावण्यमुदीक्ष्य तं प्रपद्ये ॥ १ ॥

बदर्यां पद्मपादोऽपि गुर्वाज्ञां शिरसा वहन् ।
मन्दिरं बदरीशस्य शीघ्रेण निरमापयत् ॥ २ ॥

ततः कदाचिन्नृपतेरगारं गतः स भिक्षां त्वरितं ययाचे ।
आलोचयज्ज्येष्ठवधूर्नृपस्य सांसारिकावश्यककार्यधुर्या ॥ ३ ॥

अद्यालये कव्यमयं महात्मा स्नातुं गतो नेह नृपः स एनम् ।
वीक्ष्याह्वयेदित्यथ सा तटिन्यां स्नात्वा समेहीत्यवदद्यतीशम् ॥ ४ ॥

विचार्य दूरां स नदीं क्षुधार्तो बहिः समेत्योन्नतगण्डशैले ।
दण्डेन घातद्वयमाततान धाराद्वयं निस्सृतमाशु तस्मात् ॥ ५ ॥

स्नात्वाऽथ तत्तांभसि योगिवर्यो भिक्षार्थमागत्य गृहे न्यषीदत् ।
आश्चर्यवित् कव्यकृतेन तेनाप्यन्नेन भिक्षामदित द्रुतं सा ॥ ६ ॥

अत्रान्तरे सोऽपि गृहं समागात् निमन्त्रितैर्विप्रवरैः सहैव ।
अश्रावयत्तं च कनिष्ठभार्या द्वेषात्सपत्नीकृतकव्यनाशम् ॥ ७ ॥

---

सङ्कलने मूलम् – जगद्गुरुरत्नमालास्तवतः १. गुरुवंशकाव्यतः ३-१६, २९, ३०-३२. नरसिंहाष्टकतः १७-१९. शङ्कराभ्युदयतः २०, २२-२८. माधवीयतः २१-२८, ३३-४६. धन्याष्टकतः ४८-५०, जीवन्मुक्तानन्दलहरीतः ५२-५९. यतिपञ्चकतः ६०-६१ दक्षिणामूर्तिस्तोत्रतः ६४-६५, ६७-७३. दक्षिणामूर्त्यष्टकतः ७४-७८. निर्गुणमानसपूजातः ७९-८५. दक्षिणामूर्तिवर्णमालास्तोत्रतः ८६-८९. विवेकचूडामणितः ९१-९४ सिद्धान्तलेशसंग्रहतः ९६ ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोपेन खड्गं परिगृह्य राजा तां हन्तुकामः करमुद्दधार।
स दर्शितश्रीनरसिंहरूपो हस्तं तदाऽस्तम्भयदस्य योगी ॥ ८ ॥

तुष्टाव चैनं नृपतिस्तदा तत्तुष्टयै नृसिंहायतनं विभाव्य।
स्वमन्दिरं चास्य समर्चनाय समर्पयामास समस्तराज्यम् ॥ ९ ॥

## भैरवानुग्रहः नरसिंहप्रसादनं च।

तदैव काशीनगरोषितः स श्रीशङ्कराचार्यमुनिर्विशेषात्।
श्रीभैरवोपासकभैरवाख्यविप्रेण धूर्तेन चिरं न्यषेवि ॥ १० ॥

बलेः प्रदानादचिरात्प्रसीदेत् श्रीभैरवस्त्वेककपालमूर्ध्नः।
इत्येवमालोच्य तमस्य मत्वा ग्रहीतुमेनं समवञ्चयत्सः ॥ ११ ॥

शुश्रूषयैवातितरां प्रसन्नं कदाचिदेनं कठिनाशयः सः।
दित्से बलिं देशिक भैरवाय भवच्छिरो मे वितरेत्यवोचत् ॥ १२ ॥

उदारचेता अथ शङ्करार्यः आलोचयद् दिग्विजयं प्रपूर्णम्।
परोपकाराय शरीरमेतत् प्रयात्विति द्रागुररीचकार ॥ १३ ॥

नीत्वा स तं निर्जन एव धूर्तो वने प्रशान्तं निजभैरवेशम्।
समर्च्य खड्गं निशितं करेण धृत्वा शिरश्छेत्तुमनाः पुरोऽस्थात् ॥१४॥

नृसिंहदेवायतने तदैव ध्यायन्गुरुं चेतसि पद्मपादः।
विज्ञाय योगात्तदिदं नृसिंहाविष्टो रुषाऽयाशु समीपमाप ॥ १५ ॥

तेनैव खड्गेन समं स विप्रं धृत्वा क्षणादस्य पुरो ननर्त*।
कोलाहलत्यक्तसमाधिरेषः स्तुत्या नृसिंहं व्यतनोत्प्रसन्नम् ॥ १६ ॥

---

(१०) श्रीशैले प्रवृत्तेयं कथेति माधवीयादिषु।

(१६) भैरवाराधको हतो नृसिंहेनेति माधवीयादिषु। शङ्कराभ्युदये त्यक्तः स पश्चादनुगृहीतश्चेति। वृत्तं तदत्रानुस्रियते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमदकलङ्कपरिपूर्णशशिकोटिश्रीधर मनोहरसटापटलकान्त।
पालय कृपालय भवाम्बुधिनिमग्नं मामसुरकाल नरसिंह नरसिंह ॥१७॥

मौलिषु विभूषणमिवासुरवराणां योगिहृदयेषु च शिरस्सु निगमानाम्।
राजदरविन्दरुचिरं पदयुगं ते धेहि मम मूर्ध्नि नरसिंह नरसिंह। १८॥

माधव मुकुन्द मधुसूदन मुरारे वामन नृसिंह शरणं भव ममेति।
कामद लपन्नखिलकारण नयेयं कालममरेश नरसिंह नरसिंह। १९॥

स्तुत्या तुष्टादेष तुर्यावतारात् मोहाक्रान्तं मोचयन् साधकं तम्।
सिद्धिश्चास्य श्रीमदार्योऽनुगृह्णन् दान्तैः कैश्चित्तत्र कालं व्यनैषीत्॥ २०॥

एवं विशिष्टनुतिभिर्नृहरौ प्रशान्ते स्वं भावमेत्य मुनिरेष बभूव शान्तः।
स्वप्नानुभूतमिव शान्तमनास्तमेनमात्मानमात्मगुरवे प्रणतं चकार॥ २१॥

प्रह्लादवश्यो भगवान् कथं वा प्रसादितोऽयं नृहरिस्त्वयेति।
सविस्मयैः स्निग्धजनैः स पृष्टः सनन्दनः सस्मितमित्यवादीत्॥ २२॥

पुरा किलाहोबिलभूधराग्रे पुण्यं समाश्रित्य किमप्यरण्यम्।
भक्तैकवश्यं भगवन्तमेनं ध्यायन्ननेकान्दिवसाननैषम्॥ २३॥

किमर्थमेको गिरिगह्वरेऽस्मिन् वाचंयम त्वं वससीति शश्वत्।
केनापि पृष्टोऽत्र किरातयूना प्रत्युत्तरं प्रागहमित्यवोचम्॥ २४॥

आकण्ठमत्यद्भुतमर्त्यमूर्तिः कण्ठीरवात्मा परतश्च कश्चित्।
मृगो वनेऽस्मिन्मृगयो वसन् मे भवत्यहो नाक्षिपथे कदापि॥ २५॥

---

(१७) श्रीनरसिंहस्तवोऽयं भगवत्पादकर्तृकः। 'भैरवसुरारिनिधनाय किल पद्मश्रीनृहरिकोपवहलानलशमाय। श्रीभगवदंघ्रिमुनिवागमृतवर्षि स्तोत्रमिदमष्टकमभीष्टफलदं नः' इति फलश्रुतिरन्ते। श्रीसुन्दरजामातृमुनिकर्तृकतया वैष्णवैः स्मर्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतीरयत्येव मयि क्षणेन वनेचरोऽयं प्रविशन्वनान्तम् ।
निबध्य गाढं नृहरिं लताभिः पुण्यैरगण्यैः पुरतो न्यधान्मे ॥ २६ ॥

महर्षिभिस्त्वं मनसाऽप्यगम्यो वनेचरस्यास्य कथं वशोऽभूः ।
इत्यद्भुताविष्टहृदा मयाऽसौ विज्ञाप्यमानो विभुरित्यवादीत् ॥ २७ ॥

एकाग्रचित्तेन यथाऽमुनाऽहं ध्यातस्तथा धातृमुखैर्न पूर्वैः ।
नोपालभेयास्त्वमितीरयन्मे कृत्वा प्रसादं कृतवांस्तिरोधिम् ॥ २८ ॥

ततस्तयोरद्भुतवृत्तभाजोः स्तोत्रं वितेने सकलैश्च शिष्यैः ।
तैः साकमागाद्बदरीवनं स नारायणागारविलोकनाय* ॥ २९ ॥

संपूज्य नारायणमादरेण प्रेमोदयामोदितपद्मपादः ।
देवं त्विमं केरललोक एव संपूजयत्वित्यपि सोऽन्वजानात् ॥ ३० ॥

ततो नृसिंहायतनं समेत्य संजातमाकर्ण्य समस्तवृत्तम् ।
माहात्म्यविद्भक्तवरात्स भूपादन्वग्रहीद्भूरितरां सपर्याम् ॥ ३१ ॥

तुष्टस्तया देशिकसार्वभौमः श्रीचक्रलीला नगरं कृतेऽस्य ।
निर्माप्य च श्रीनगरं महात्मा पट्टाभिषेकं विततान तस्य ॥ ३२ ॥

## श्रीगौडपादानुग्रहलाभः ।

स्वस्थः सोऽयं ब्रह्म सायं कदाचिद्ध्यायन् गङ्गापूरसंगार्द्रवातैः ।
आगच्छन्तं सैकते प्रत्यगच्छत् योगीशानं गौडपादाभिधानम् ॥ ३३ ॥

पाणौ फुल्लश्वेतपङ्केरुहश्रीमैत्रीपात्रीभूतभासा घटेन ।
आराद्राजत्कैरवानन्दसन्ध्यारागारक्तांभोदलीलां दधानम् ॥ ३४ ॥

पाणौ शोणांभोजबुद्ध्या समन्तात् भ्राम्यद्भृङ्गीमण्डलीतुल्यकुल्याम् ।
अंगुल्यग्रासंगिरुद्राक्षमालामङ्गुष्ठाग्रेणासकृद् भ्रामयन्तम् ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आर्यस्याथो गौडपादस्य पादावभ्यर्च्यासौ शङ्करः पङ्कजाभौ।
भक्तिश्रद्धासंभ्रमाक्रान्तचेताः प्रह्वस्तस्थावग्रतः प्राञ्जलिः सन् ॥ ३६ ॥

सिञ्चन्नेनं क्षीरवाराशिवीचीसाचिव्यायासज्ञयत्नैः कटाक्षैः।
दन्तज्योत्स्नादन्तुराश्चापि कुर्वन्नाशाः सूक्तिं सन्दधे गौडपादः ॥ ३७ ॥

कच्चित्सर्वं वेत्सि गोविन्दनाम्नो हृद्या विद्या संसृदुद्धारदक्षा।
कच्चित्तत्वं तत्वमानन्दरूपं नित्यं सच्चिन्निर्मलं वेत्सि वेद्यम् ॥ ३८ ॥

भक्त्या युक्ताः स्वानुरक्ता विरक्ताः शान्ता दान्ताः सन्ततं श्रद्दधानाः।
कच्चित्तत्वज्ञानकामा विनीताः शुश्रूषन्ते शिष्यवर्या गुरुं त्वाम् ॥ ३९ ॥

कच्चिन्नित्याः शत्रवो निर्जितास्ते कच्चित्प्राप्ताः सद्गुणाः शान्तिपूर्वाः।
कच्चिद्योगः साधितोऽष्टाङ्गयुक्तः कच्चिच्चित्तं साधु चित्तत्वगं ते ॥ ४० ॥

इत्यद्वैताचार्यवर्येण तेन प्रेम्णा पृष्टः शङ्करः साधुशीलः।
भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षो बध्नन्मूर्धन्यञ्जलिं व्याजहार ॥ ४१ ॥

यद्यत्पृष्टं स्पष्टमाचार्यपादैः तत्तत्सर्वं भो भविष्यत्यवश्यम्।
कारुण्याब्धीभूतयुष्मत्कटाक्षैः दृष्टस्याह्नुर्दुर्लभं किन्तु जन्तोः* ॥ ४२ ॥

तत्तादृक्षज्ञानपाथोधियुष्मत्पाददृन्द्वं पद्मसौहार्दहृद्यम्।
दैवादेतद्दीनदृग्गोचरं चेद् भक्तस्यैतद्भागधेयं ह्यमेयम् ॥ ४३ ॥

इत्याकर्ण्याथाब्रवीद्गौडपादो वत्स श्रुत्वा वास्तवांस्त्वद्गुणौघान्।
द्रष्टुं शान्तस्वान्तवन्तं मम त्वां गाढोत्कण्ठागर्भितं चित्तमासीत् ॥ ४४ ॥

दास्ये वरं ते विदुषां वराय प्रह्वानताङ्गाय वरं वृणीष्व।*
स प्राह पर्यायगुरुकर्षिमद्य भवन्तमद्राक्षमतुल्यभासम् ॥ ४५ ॥

वरः परः कोऽस्ति तथापि चिन्ता चित्तत्वगा मेऽस्तु गुरो सदाऽपि।
तथेति चोक्त्वा तमपास्तमोहो गतश्चिरञ्जीविमुनिस्तदानीम्* ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यायन्स परमाचार्यं चरन्तं विजने वने ।
विर्जितात्मपदं धन्यं स्तुवन्निदमगायत ॥ ४७ ॥

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् ।
ते धन्या भुवि परमार्थनिश्चितेहाः शेषास्तु भ्रमनिलये परिभ्रमन्तः ॥

त्यक्त्वा गृहे रतिमधोगतिहेतुभूतां आत्मेच्छयोपनिषदर्थरसं पिबन्तः ।
वीतस्पृहा विषयभोगपदे विरक्ता धन्याश्चरन्ति विजनेषु विरक्तसंगाः ॥

शान्तैरनन्यमतिभिर्मधुरस्वभावैः एकत्वनिश्चितमनोभिरपेतमोहैः ।
साकं वनेषु विदितात्मपदस्वरूपं तद्वस्तु सम्यगनिशं विमृशन्ति धन्याः ॥

तत्तादृक्षगुरोर्दीक्षां प्राप्य भाग्यात्तमोऽपहाम् ।
जीवन्मुक्तो मोहमेति न क्वापीति जगाद सः ॥ ५१ ॥

पुरे पौरान्पश्यन्नरयुवतिनामाकृतिमयान्
सुवेषान् स्वर्णालङ्करणकलितांश्चित्रसदृशान् ।
स्वयं साक्षाद्द्रष्टेत्यपि च कलयंस्तैः सह रमन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५२ ॥

कदाचित्प्रासादे क्वचिदपि च सौधेषु धनिनां
कदा काले शैले क्वचिदपि च कूलेषु सरिताम् ।
कुटीरे दान्तानां मुनिजनवराणामपि वसन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५३ ॥

कदाचिद्विद्वद्भिर्विविदिषुभिरत्यन्तनिरतैः
कदाचित्काव्यालङ्कृतिरससरसालैः कविवरैः ।
कदाचित्सत्तर्कैरनुमितिपरैस्तार्किकवरैः
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिवायाः शम्भोर्वा क्वचिदपि च विष्णोरपि कदा
गणाध्यक्षस्यापि प्रकटितवरस्यापि च कदा ।
पठन्वै नामालिं नयनरचितानन्दसलिलो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५५ ॥

कदा गङ्गाम्भोभिः क्वचिदपि च कूपोत्थसलिलैः
क्वचित्कासारोत्थैः क्वचिदपि सदुष्णैश्च शिशिरैः ।
भजन् स्नानं भूत्या क्वचिदपि च कर्पूरनिभया
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५६ ॥

कदाप्याशावासाः क्वचिदपि च दिव्याम्बरधरः
क्वचित्पञ्चास्योत्थां त्वचमपि दधानः कटितटे ।
मनस्वी निस्संगः सुजनहृदयानन्दजनको
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५७ ॥

कदाचिन्मौनस्थः क्वचिदपि च वाग्वादनिरतः
कदाचित्सानन्दं हसितरभसत्यक्तवचनः ।
कदाचिल्लोकानां व्यवहृतिसमालोकनपरो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५८ ॥

कदाऽद्वैतं पश्यन्नखिलमपि सत्यं शिवमयं
महावाक्यार्थानामवगतिसमभ्यासवशतः ।
गतद्वैताभ्यासः शिव शिव शिवेत्येव विलपन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५९ ॥

मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुमभन्त्रयन्तः ।
कन्थामिव श्रीमपि कुत्सयन्तः कौपीनवन्तः किल भाग्यवन्तः ॥ ६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वानन्दभावे परितुष्टिमन्तः संशान्तसर्वेन्द्रियदृष्टिमन्तः ।
अहर्निशं ब्रह्मणि ये रमन्तः कौपीनवन्तः किल भाग्यवन्तः ॥ ६१ ॥

इत्थमन्तर्हृदब्जे तं भास्वन्तं परमं गुरुम् ।
चिन्तयन्नेव गहनं वनं किञ्चित्प्रविष्टवान् ॥ ६२ ॥

श्रीदक्षिणामूर्त्यनुग्रहलाभः ।

तस्य चिन्तयतश्चेतो लग्नमाद्ये गुरूत्तमे ।
वटद्रुमतलासीने तद्ध्याने निभृतं ह्यभूत् ॥ ६३ ॥

उपासकानां यदुपासनीयं उपात्तवासं वटशाखिमूले ।
तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥ ६४ ॥

एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः ।
स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥ ६५ ॥

ध्यायतस्तस्य पुरतः प्रादुरास्तादिदेशिकः ।
प्राणौत्प्रास्तौच्च तं वाग्भिर्गद्गदाभिः परं शिवम् ॥ ६६ ॥

अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे ।
मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥ ६७ ॥

विद्रावितोशेषतमोगुणेन मुद्राविशेषेण मुहुर्मुनीनाम् ।
निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥ ६८ ॥

कलाभिरिन्दोरिव कल्पिताङ्गं मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥ ६९ ॥

आलेपवन्तं मदनाङ्गभूत्या शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कञ्चन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः ।
तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥ ७१ ॥

कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वसन्
कारुण्यामृतवारिभिर्मुनिजनं संभावयन् वीक्षितैः ।
मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥ ७२ ॥

स्तुवतस्तदाऽऽस्त हृदयं गलिततमो मोदमतुलमनुभवतः ।
मौनव्याख्याप्रकटितपरात्मतत्त्वानुभूतिपरम् ॥ ७३ ॥

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः ।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ ७४ ॥

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यस्साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७५ ॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७६ ॥

भूरंभांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७७ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अंगुष्ठतर्जनीयोगमुद्राव्याजेन देहिनाम् ।
श्रुत्यर्थं ब्रह्मजीवैक्यं दर्शयन्नोऽवताच्छिवः ॥ ७८ ॥

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।
स्थितेऽद्वितीयभावेऽपि कथं पूजा विधीयते ॥ ७९ ॥

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ ८० ॥

निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ।
अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥ ८१ ॥

निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ।
निर्विशेषस्य का भूषा कोऽलङ्कारो निराकृतेः ॥ ८२ ॥

निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ।
निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥ ८३ ॥

विश्वानन्दयितुस्तस्य किं ताम्बूलं प्रकल्पते ।
स्वयंप्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥ ८४ ॥

गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ।
प्रदक्षिणमनन्तस्य प्रणामोऽद्वयवस्तुनः ।
वेदवाचामवेद्यस्य किं वा स्तोत्रं विधीयते ॥ ८५ ॥

ओमित्येतद्यस्य बुधैर्नाम गृहीतं
यद्भासेदं भाति समस्तं वियदादि ।
यस्याज्ञातः स्वस्वपदस्था विधिमुख्याः
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ८६ ॥

येन ज्ञातेनैव समस्तं विदितं स्यात्
यस्मादन्यद्वस्तु जगत्यां शशशृङ्गम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं प्राप्तानां नास्ति परं प्राप्यमनादिं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ८७ ॥

मेधावी स्यादिन्दुवतंसं धृतवीणं
कर्पूराभं पुस्तकहस्तं कमलाक्षम् ।
चित्ते ध्यायन्यस्य वपुर्द्राङ् निमिषार्धं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ८८ ॥

यस्याज्ञानादेव नृणां संसृतिबन्धो
यस्य ज्ञानादेव विमोक्षो भवतीति ।
स्पष्टं ब्रूते वेदशिरो देशिकमाद्यं
तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ८९ ॥

स्तुवन्तं तं परेशानो दीक्षयामास भद्रया ।
मुद्रया गुरुदिष्टं तद्ब्रह्म तद्धृदि भामयन् ॥ ९० ॥

वाचा वक्तुमशक्यमेव मनसा मन्तुं तथाऽऽस्वादितुं
स्वानन्दामृतपूरपूरितपरब्रह्माम्बुधेर्वैभवम् ।
अंभोराशिविशीर्णवार्षिकशिलाभावं भजत्तन्मनः
यस्यांशांशलवे विलीनमधुनाऽऽनन्दात्मना निर्वृतम् * ॥ ९१ ॥

कञ्चित्कालं समाधाय परे ब्रह्मणि मानसम् ।
व्युत्थाय परमानन्दादिदं वचनमब्रवीत् ॥ ९२ ॥

धन्योऽहं कृतकृत्योऽहं विमुक्तोऽहं भवग्रहात् ।
नित्यानन्दस्वरूपोऽहं पूर्णोऽहं त्वदनुग्रहात् ॥ ९३ ॥

नमस्तस्मै सदेकस्मै नमश्चिन्महसे मुहुः ।
यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ ९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति नतमवलोक्य शिष्यवर्यं समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
हितमिदमवबोधय प्रपन्नान् इति निगदन् स शिवस्तमन्वगृह्णात् * ॥ ९५ ॥

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभागान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ ९६ ॥

इति श्रीशङ्करविजयमकरन्दे अष्टादश आस्वादः समाप्तः ॥

## ॥ एकोनविंशः आस्वादः ॥

कैलासे शम्भोः पञ्चलिङ्गप्राप्तिः ।

प्रतिपादितलिङ्गपञ्चकेऽमुं प्रणिवत्याशु तिरोहिते गिरीशे ।
विनिवृत्य स दिग्जयप्रवृत्तो विविधैः शिष्यवरैर्विभातु चित्ते ॥ १ ॥

अन्तर्हिते भगवति दक्षिणास्ये चिरं मुदा ।
तत्रैव वासमकरोत् स्वेच्छाचारी यतीश्वरः ॥ २ ॥

---

सङ्कलने मूलम्— जगद्गुरुरत्नमालास्तवतः १ मार्कण्डेयसंहितातः ३-७, गुरुवंशकाव्यतः ८-११, ३५, ४०, आर्याष्टकतः १४-१८, रत्नपुष्पाञ्जलिस्तोत्रतः १९-३३, चिद्विलासीयतः ३६-३९, ४१, ब्रह्मानन्दीयतः ४२-४३, ४८-५१, ९३-१०८, शिवानन्दलहरीतः ४४-४६, शिवपादादिकेशान्तस्तोत्रतः ५३-७४, शिवकेशादिपादान्तस्तोत्रतः ७५-७६, सुवर्णमालास्तुतितः ७७-८५, दशश्लोकीतः ८६, उमामहेश्वरस्तोत्रतः ८७-८८, शिवरहस्यतः ८९-९२, श्रीशंकरार्यपदावलम्बस्तवतः १०९,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परितप्तपञ्चलोहद्रुतिपानेनातिविस्मितान् शिष्यान् ।
परिहृत्य परमयोगी परमैकान्तातिसुखमगादखिलम् ॥ ३ ॥

नेपालेश्वरमाकलय्य तदनु श्रीनीलकण्ठेश्वरं
हैमं शैलमपारपुण्यबदरीकेदारमारादगात् ।
श्रीशैलं कनकाचलं शुभमहाकैलासमासेदिवान्
लोकानुग्रहकाम्यया निरुपमः श्रीशङ्करार्यो गुरुः ॥ ४ ॥

नेपालेश्वरपञ्चवक्त्रकमलामोदातिभारोल्लसत्-
पञ्चद्वारशुभालये निवसतिं कृत्वाऽथ योगीश्वरः ।
वाञ्छासिद्धिमवाप्य विश्वजनकं श्रीनीलकण्ठेश्वरं
प्राप्य प्रौढतपश्चचार च ततः श्रीमेरुशैलं ययौ ॥ ५ ॥

तत्र स्वर्णशिलोच्चसानुशिखरप्रत्यन्तशैलान् गुहाः
वेदान्तागमसप्तकोटिसुमहामन्त्रान् महाघापहान् ।
संभाव्यातितरां पुरश्चरणया लब्ध्वाष्टसिद्धीस्ततः
कृत्वा मेरुनुतिं महार्थजनिकां कैलासशैलं ययौ ॥ ६ ॥

गत्वा कैलासशैलं जगदखिलगुरुः शङ्कराचार्ययोगी
दृष्ट्वा सांब शिवं तं स्वयमिति सुचिरं चिन्तयन्नन्तरङ्गे ।

---

(३) कदाचिन्नास्तिकमताभिमानिना केनापि कुबुद्धिना राजन्येन भिक्षार्थमामन्त्रिताः द्रुतपञ्चलोहधारां निवेद्य 'सर्वं ब्रह्ममयमिति सिद्धान्तवादिभिः भवद्भिरङ्गीक्रियतां भिक्षात्वेनेयं' इति प्रार्थिताः, तस्मिन् किञ्चिदप्यविकृतमनसः सादरमादाय तामेव लोहधारां निपीय, अनन्तरं भीतभीतं पादयोः पतितं असकृदनुनयन्तं दुर्नयं तं अकृतागसमिव दयातरङ्गितया दृशाऽवलोकय अद्वैतोपदेशेन कृतार्थयांचक्रुः । अत एव निरन्तरालङ्कृतीकृतशान्तिदान्तिभूम्नामिति विरुदः । (श्रीगुरुदर्पणम्) ३-७ भाविकथासङ्ग्रहः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लब्ध्वा पञ्चात्मलिङ्गान्यमलतरशुभालिङ्गितान्यङ्गभाजां
भूत्यै सौन्दर्यसारं हिमगिरिदुहितुः प्रापयन् गामयासीत् ॥ ७ ॥

यातुं समादिश्य चतुर्दिशासु यतीश्वरोऽथानुसृतांश्च शिष्यान् । *
सिद्धेश्वरीं सिद्धनुतां दिदृक्षुः चचाल नेपालविशालदेशे ॥ ८ ॥

स्वांके मुनिं साऽप्युपवेश्य वाक्यैः सुधोपमैः स्कन्दमिवाममर्श ।
सेर्ष्यं समालोक्य स सिद्धसंघः तयोरुपर्येव शिला ववर्ष ॥ ९ ॥

तां वृष्टिमस्तम्भयदस्य योगी प्रावारयत्ताश्च शिलाः परीताः ।
विभाति चाद्यापि तथैव चित्रं व्यर्थश्रमः सिद्धगणो बभूव ॥ १० ॥

सिद्धेश्वरीं चारु तदा ययाचे तक्रं पिपासुर्जननीमिवैषः ।
आस्फालितात्मोरुरजीजनत्सा तक्रापगां सा प्रथिताऽधुना सा ॥ ११ ॥

ततः पशुपतीशानं देवं श्रीकाष्ठमण्डले ।
पूजयामास विधिवत् द्राविडैः पूजकोत्तमैः ॥ १२ ॥

तत्समीपस्थितां शक्तिपीठगां गुह्यकेश्वरीम् ।
समयाचारविहितसपर्यां स्तुतवान्मुनिः ॥ १३ ॥

चित्सरसीकलहंसी चलदवतंसीकृतव्याला ।
दशवदना जगदव्यादव्यापृतविग्रहा गुणयोः ॥ १४ ॥

रुधिरोदधिकृतवासां भैरवहासां वितीर्णजनताशाम् ।
उन्मूलितभवपाशां मेचकभासां नमामि सुविलासाम् ॥ १५ ॥

संसाराम्बुधितरणिं जडतामोहान्धकारयोस्तरणिम् ।
उपनिषदटवीसरणिं जन्माकरणिं नुमः क्षमाधरणिम् ॥ १६ ॥

सारां त्रिभुवनतारां प्रमोदधारां श्मशानसञ्चाराम् ।
दर्वीकरवरहारां ब्रह्माकारां नमस्यामः ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्तप्रतिपाद्या हरिहरयोरप्यनासाद्या ।
हृद्यागमसतवेद्या कल्पितबाधा सदाऽवताद्वेद्या ॥ १८ ॥

ब्रह्मलतेति स्फुटसंकेता त्वमसि हराच्युतशाखोपेता ।
श्रुतिकिसलययुग्ज्ञानं कुसुमं धत्से मोक्षफलं बहुसुषमम् ॥

ज्ञानामृतमयपारावारे शिवेन बद्धा हृदयागारे ।
अथ नृत्यसि च प्रेतावासे का ते लीला दारुणहासे ॥

बिभर्षि हस्ते जम्बुकपोतं मौलौ मुण्डं भुजगप्रोतम् ।
पतिमधितिष्ठसि विष्टभ्य त्वं मातुः कीदृक् तव विज्ञत्वम् ॥

शिखिहरिफेरवकीशनरर्क्षद्विपहयगरुडग्राहसदृक्षम् ।
धारयसीदृक्छ्रुतिसुखरूपं वस्तुमपीच्छसि रुधिरानूपम् ॥ २२ ॥

त्वामेवैकां निगदति वेदः शिवेन साकं न हि ते भेदः ।
शिवशक्तिक्रमविद्याशिक्षा दातव्येति त्वयि मम भिक्षा ॥

भूजलतेजोऽनिलगगनानि ध्रुवमेतान्यपि तव देहानि ।
त्रिभुवनमेतैरेव ग्रस्तं त्वन्मयमेवातो हि समस्तम् ॥ २४ ॥

शमनः प्रतिदिनमनुसन्धत्ते मदघं तदनु च कुमतिं दत्ते ।
अथ मयि यदि तव करुणा मातः क्व यमः क्वाहं क्व निरयपातः ॥

निरवधि चेतसि वससि मम त्वं किमिति नैव निकृन्तसि ममत्वम् ।
रूढपदं हृदि यदि तत्क त्वं तदपगमे सति भवती तत्त्वम् ॥ २६ ॥

करुणामयि मयि करुणालेशं यदि कुरुषे बत वशितमहेशम् ।
तदा न कुर्वे निगमादेशं हित्वा ननु यतिकर्मक्लेशम् ॥ २७ ॥

द्रविडशिशुर्यतिशङ्करनामा श्रेयस्त्वत्पदपङ्कजधामा ।
अस्य तथापि हि यदि भवबन्धः तर्हि समाधिस्तेऽनृतसन्धः ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तिनिमित्तं काशीसेवामिह भुवि विदधति जननि न के वा ।
तत्र मनस्त्वयि यदि सासूयं कल्पशतैरपि नामृतभूयम् ॥ २९ ॥

त्रिभुवनमध्ये न किञ्चिदस्ति त्वया विनेति हि तव प्रशस्तिः ।
तन्मध्ये किं न हि मम हृदयं किं वा चेतस्ते न हि सदयम् ॥ ३० ॥

ज्ञातं नैव पुमर्थत्रितयं कीदृगितीदं नु मया सभयम् ।
देवि चतुर्थे मनो निखातं यत्र भवत्या रूपं भातम् ॥ ३१ ॥

आदिवर्णजनुषोऽतितितिक्षोरवतस्तुर्याश्रममथ भिक्षोः ।
त्वत्पदयुगले मनोनिवासं भिक्षामर्पय जननि सहासम् ॥ ३२ ॥

जन्मैधो मोहनागं भ्रमशवपललं प्राग्भवदुर्व्युष्टिमेनो-
गात्रं रागारिमीर्ष्याहिमुपधिविटपं रुड्झषं लोभघासम् ।
वाजिग्राहेभपक्षीश्वरमनुजमहाभल्लुकोद्यत्प्लवङ्ग-
क्रोष्टृस्तम्बेरमारिज्वलनसमसुखैर्युत्क्रमैर्मे जहि त्वम् ॥ ३३ ॥

इत्थमाराधयन्पद्यैः देवीं गुह्येश्वरीं हृदि ।
तुष्टाशयस्ततोऽगच्छत् महतां हि दिदृक्षया ॥ ३४ ॥

मत्वा यतीन्द्रः कृतकृत्यभावं महत्समाभाषणमाप्तुकामः ।
स्वच्छन्दचारी मुनिराजदत्तात्रेयस्य रम्याश्रममाजगाम ॥ ३५ ॥

तत्रत्यान्यद्भुतान्येष पश्यन्नेव सुसंस्थितः ।
तस्मिन्नवसरे श्रीमान् दत्तात्रेयो महामुनिः ॥ ३६ ॥

---

( ३३ ) जन्मैधः=ज्वलनः, मोहनागः=स्तम्बेरमारिः (सिंहः), भ्रमशवपललं – क्रोष्टा, प्राग्भवदुर्व्युष्टिः (प्रारब्धदुष्कृतं फलं) - उद्यत्प्लवङ्गः, एनोगात्रं–महाभल्लूकः, रागारिः–मनुजः, ईर्ष्याहिः–पक्षीश्वरो गरुडः, उपधि( छल ) विटपः= इभः, रुड्झषः – ग्राहः, लोभघासः – वाजी इति दश दोषानात्मगतान् दशभिर्मुखैः जहि इति प्रार्थना ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वच्छन्दचारी सर्वत्र स्वेच्छाकलितविग्रहः ।
मूर्तित्रयात्मको योगी दिग्वासा विजितेन्द्रियः ॥ ३७ ॥

शङ्कराचार्यवर्यं तमवलोकितुमागतः ।
श्रुत्वोदन्तं तदीयं स विस्मयाकलितान्तरः ॥ ३८ ॥

आगतं तं निरीक्ष्यासौ प्रेमालिंगनपूर्वकम् ।
पप्रच्छ कुशलं तस्य सोऽप्यपृच्छद्गुरोः शुभम् ॥ ३९ ॥

दत्तात्रेयं भुवनविनुतं वीक्ष्य नत्वा न्यगादीत्
वृत्तं स्वीयं सकलमपि तथा तान् विनीतांश्च शिष्यान् ।*
सोऽपि श्रुत्वा मुनिपतिरदादाशिषो विश्वरूपा-
चार्यादिभ्यः सुखमवसतां तत्र तौ भाषमाणौ ॥ ४० ॥

स्वकृतान् दर्शयामास ग्रन्थान्भाष्यादिकानसौ ।
दृष्ट्वा तुष्टाव बहुधा सूत्रभाष्यमशेषतः ॥ ४१ ॥

उवाच तं प्रसन्नात्मा बाष्पगद्गदया गिरा ।
कैलासे गिरिवर्ये तु दिव्यमूर्तिसमन्वितम् ॥ ४२ ॥

पार्वतीस्कन्दनन्द्याद्यैः सेवितं परमेश्वरम् ।
द्रष्टुं वाञ्छामि योगीन्द्र कृपया तव सत्तम ॥ ४३ ॥

कदा वा कैलासे कनकमणिसौधे सह गणैः
वसन् शम्भोरग्रे स्फुटघटितमूर्धाञ्जलिपुटः ।
विभो साब स्वामिन् परमशिव पाहीति निगदन्
विधातॄणां कल्पान् क्षणमिव विनेष्यामि सुखतः ॥ ४४ ॥

फलाद्वा पुण्यानां मयि करुणया वा त्वयि विभो
प्रसन्नेऽपि स्वामिन् भवदमलपादाब्जयुगलम् ।
कथं पश्येयं मां स्थगयति नमःसंभ्रमजुषां
निलिम्पानां श्रेणिर्निजकनकमाणिक्यमुकुटैः ॥ ४५ ॥

 CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कदा वा त्वां दृष्ट्वा गिरिश तव भव्यांघ्रियुगलं
गृहीत्वा हस्ताभ्यां शिरसि नयने वक्षसि वहन् ।
समाश्लिष्याघ्राय स्फुटजलजगन्धान् परिमलान्
अलभ्यां ब्रह्माद्यैर्मुदमनुभविष्यामि हृदये ॥ ४६ ॥

इत्यहं प्रत्यहं देवं प्रार्थये तद्दिदृक्षया ।
अद्यैवान्वग्रहीद्देवो भवतो दर्शनं यतः ॥ ४७ ॥ *

शङ्करस्य वचः श्रुत्वा दत्तो हृष्टो बभूव ह ।
भवन्तं प्रापयिष्यामि महेशस्य तु सन्निधिम् ॥ ४८ ॥

दत्तस्य वचनं श्रुत्वा शङ्करो हृष्टमानसः ।
न्यदधात्तत्र दण्डादीन् कैलासगमनोत्सुकः ॥ ४९ ॥

दत्तो हस्तं समालम्ब्य शङ्करस्य हसन्प्रभुः ।
प्रविवेश गुहायां तु योगसिद्धिप्रभावतः ॥ ५० ॥

तत्क्षणाच्छङ्करेणैव कैलासे पर्वतोत्तमे ।
भोगवत्यां महेशस्य सन्निधौ संस्थितोऽभवत् ॥ ५१ ॥

विस्मयाविष्टहृदयो ददर्श गिरिशं मुदा ।
आपादचूडमातृप्तेः अंगे चांगे मनो दधत् ॥ ५२ ॥

कल्याणं नो विधत्तां कटकतटलसत्कल्पवाटीनिकुञ्ज-
क्रीडासंसक्तविद्याधरनगरवधूगीतरुद्रापदानः ।
तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी
कैलासः शर्वनिर्वृत्यभिजनकपदः सर्वदा पर्वतेन्द्रः ॥ ५३ ॥

---

(४९) "दण्डो द्रुरूपेण स पर्यणंसीत् तीर्थात्मना चांबु कमण्डलुस्थम् । महात्मनो हस्तपरिग्रहेण जडौ च तौ सार्थतनू अभूताम् ॥" इति गुरुवंशे । अद्यापि तथा ख्यातिस्तत्र वर्तते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्ठप्रान्तावसज्जत्कनकमयमहाघण्टिकाघोरघोषैः
कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवालान्तरालः ।
चण्डः प्रोद्दण्डशृङ्गः ककुदकवलितोत्तुङ्गकैलासशृङ्गः
कण्ठेकालस्य वाहः शमयतु शमलं शाश्वतः शाक्वरेन्द्रः ॥ ५४ ॥

निर्यद्दानाम्बुधाराःपरिमलतरलीभूतरोलम्बपाली-
झंकारैः शङ्कराद्रेः शिखरशतदरीः पूरयन्भूरिघोषैः ।
शार्वैः सौवर्णशैलप्रतिमपृथुवपुः सर्वविघ्नापहर्ता
शर्वाण्याः पूर्वसूनुः स भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ।५५॥

यः पुण्यैर्देवतानां समजनि शिवयोः श्लाघ्यवीर्यैकमत्याद्
यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते ।
भूयात्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैलः
संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥ ५६ ॥

आरूढः प्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तुरङ्गं
चेलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः ।
रागद्वेषादिनानाविधमृगपटलीभीतिकृद्भूतभर्ता
कुर्वन्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥ ५७ ॥

अंभोजाभ्यां च रंभारथचरणलताद्वन्द्वकुम्भीन्द्रकुम्भैः
बिम्बेनेन्दोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् ।
अंभोदेनापि संभावितमुपजनिताडम्बरं शम्बरारेः
शम्भोः संभोगयोग्यं किमपि धनमिदं संभवेत्संपदे नः ॥ ५८ ॥

वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासान्
वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् ।
एणीनेत्रान्तभङ्गीनिरसननिपुणापाङ्गकोणानुपासे
शोणान् प्राणानुदञ्चत्प्रतिनवसुषमाकन्दलानिन्दुमौलेः ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नृत्तारम्भेषु हस्ताहतमुरजधिमिद्धिङ्कृतैरत्युदारैः
चित्तानन्दं विधत्ते सदसि भगवतः सन्ततं यः स नन्दी ।
चण्डीशाद्यास्तथान्ये चतुरगुणगणप्रीणितस्वामिसत्का-
रोत्कर्षोद्यत्प्रसादाः प्रमथपरिबृढाः पान्तु सन्तोषिणो नः ॥ ६० ॥

मुक्तामाणिक्यजालैः परिकलितमहासालमालोकनीयं
प्रत्युप्तानर्घरत्नैर्दिशि दिशि भवनैः कल्पितैर्दिक्पतीनाम् ।
उद्यानैरद्रिकन्यापरिजनवनितामाननीयैः परीतं
हृद्यं हृद्यस्तु नित्य मम भुवनपतेर्धाम सोमार्धमौलेः ॥ ६१ ॥

स्तम्भैर्जम्भारिरत्नप्रवरविरचितैः संभृतोपान्तभागं
शुम्भत्सोपानमार्गं शुचिमणिनिचयैर्गुम्भितानल्पशिल्पम् ।
कुम्भैः संपूर्णशोभं शिरसि सुघटितैः शातकुम्भैरपङ्कैः
शम्भोः संभावनीयं सकलमुनिजनैः स्वस्तिदं स्यात्सदो नः ॥ ६२ ॥

न्यस्तो मध्ये सभायाः परिसरविलसत्पादपीठाभिरामो
हृद्यः पादैश्चतुर्भिः कनकमणिमयैरुच्चकैरुज्ज्वलात्मा ।
वासो रत्नेन केनाप्यधिकमृदुतरेणास्तृतो विस्तृतश्रीः
पीठः पीडाभरं नः शमयतु शिवयोः स्वैरसंवासयोग्यः ॥ ६३ ॥

आसीनस्याधिपीठं त्रिजगदधिपतेरङ्घ्रिपीठानुषक्तौ
पाथोजाभोगभाजौ परिमृदुलतलोल्लासिपद्मादिरेखौ ।
पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीर-
श्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥ ६४ ॥

सन्ध्याकालानुरज्यद्दिनकरसरुचा कालधौतेन गाढं
व्यानद्धः स्निग्धमुग्धः सरसमुदरबन्धेन वीतोपमेन ।
उद्दीप्रैः स्वप्रकाशैरुपचितमहिमा मन्मथारेरुदारो
मध्यो मिथ्यार्थसध्र्यङ् मम दिशतु सदा संगतिं मङ्गलानाम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वामाङ्के विस्फुरन्त्या करतलविलसच्चारुरक्तोत्पलायाः
कान्ताया वामवक्षोरुहभरशिखरोन्मर्दनव्यग्रमेकम् ।
अन्यांस्त्रीनप्युदारान्वरपरशुमृगालङ्कृतानिन्दुमौलेः
बाहूनाबद्धहेमाङ्गदमणिकटकानन्तरालोकयामः ॥ ६६ ॥

संभ्रान्तायाः शिवायाः पतिविलयभिया सर्वलोकोपतापात्
संविग्नस्यापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्याम् ।
मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा
सोऽयं सर्वापदां नः शमयतु निचयं नीलकण्ठस्य कण्ठः ॥ ६७ ॥

याम्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां
येषामाहुः स्वरूपं जगति मुनिवरा देवतानां त्रयीं ताम् ।
रुद्राणीवक्त्रपङ्केरुहसततविहारोत्सुकेन्दिन्दिरेभ्यः
तेभ्यस्त्रिभ्यः प्रणामाञ्जलिमुपरचये त्रीक्षणस्येक्षणेभ्यः ॥ ६८ ॥

वामं वामाङ्कगाया वदनसरसिजे व्यावलद्वल्लभायाः
व्यानम्रेष्वन्यदन्यत्पुनरलिकभवं वीतनिश्शेषरौक्ष्यम् ।
भूयो भूयोऽपि मोदान्निपतदतिदयाशीतलं चूतबाणे
दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ६९ ॥

स्वामिन् गङ्गामिवाङ्गीकुरु तव शिरसा मामपीत्यर्थयन्तीं
धन्यां कन्यां खरांशोः शिरसि वहति किं न्वेष कारुण्यशाली ।
इत्थं शङ्कां जनानां जनयदतिघनं कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥ ७० ॥

वक्राकारः कलङ्की जडतनुरहमप्यंघ्रिसेवानुभावात्
उत्तंसत्वं प्रयातः सुलभतरघृणास्यन्दिनश्चन्द्रमौलेः ।
तत्सेवन्तां जनौघाः शिवमिति निजयावस्थयैव ब्रुवाणं
वन्दे देवस्य शम्भोर्मुकुटसुघटितं मुग्धपीयूषभानुम् ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कान्त्या संफुल्लमल्लीकुसुमधवलया व्याप्य विश्वं विराजन्
वृत्ताकारो वितन्वन्मुहुरपि च परां निर्वृतिं पादभाजाम् ।
सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः
श्वेतच्छत्राख्यशीतद्युतिरपहरतात्तापदस्तापदा नः ॥ ७२ ॥

स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणा-
स्वानावच्छिन्नतालक्रमममृतमिवास्वाद्यमानं शिवाभ्याम् ।
नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं
गानं वीणामहर्षेः कलमतिललितं कर्णपूरायतां नः ॥ ७३ ॥

देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः ।
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये सन्ति तेभ्यः
सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥ ७४ ॥

न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्घुष्टमेघौघघोषं
स्फूर्जद्वार्ध्युत्थितोरुध्वनितमपि परब्रह्मभूतो गभीरः ।
सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरुणः प्राणनाथस्य सत्याः
प्रीत्या वः संविदध्यात्फलविकलमलं जन्म नादः स नादः ॥७५॥

भूम्ना यस्यास्तसीम्ना भुवनमनुसृतं यत्परं धाम धाम्नां
साम्नामाम्नायतत्त्वं यदपि च परमं यद्गुणातीतमाद्यम् ।
यच्चांहोहन्निरीहं गहनमिति मुहुः प्राहुरुच्चैर्महान्तो
माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥ ७६ ॥

उमया दिव्यसुमङ्गलविग्रहयालिङ्गितवामाङ्ग विभो ।
साम्ब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ७७॥

ऊरीकुरु मामज्ञमनाथं दूरीकुरु मे दुरितं भो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकं सदिति श्रुत्या त्वमेव सदसीत्युपास्महे मृड भो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ७९ ॥

अन्तःकरणविशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८० ॥

जय कैलासनिवास प्रमथगणाधीश भूसुरार्चित भो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८१ ॥

ज्ञानं विक्षेपावृतिरहितं कुरु मे गुरुस्त्वमेव विभो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८२ ॥

दयनीयश्च दयालुः कोऽस्ति मदन्यस्त्वदन्य इह वद भो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८३ ॥

षड्रिपुषडूर्मिषड्विकारहर सन्मुख षण्मुखजनक विभो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८४ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्येतल्लक्षणलक्षित भो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥ ८५ ॥

यस्यासन् धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेचनी श्रुतिरियं चाचष्ट तुर्यं शिवं
तस्मिन्मे हृदयं सुखेन रमतां सांबे परब्रह्मणि ॥ ८६ ॥

नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शङ्करपार्वतीभ्याम् ॥

नमः शिवाभ्यां कलिनाशनाभ्यां कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्यां नमो नमः शङ्करपार्वतीभ्याम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थं स्तुवन्तं त प्रेम्णा जगाद परमेश्वरः ।
मदंशतस्त्वं जातोऽसि भुवि चाद्वैतसिद्धये ॥ ८९ ॥

एतत्प्रतिगृहाण त्वं पञ्चलिङ्गं सुपूजय ।
भस्मरुद्राक्षसंपन्नः पञ्चाक्षरपरायणः ॥ ९० ॥

शतरुद्रावर्तनैश्च तारेण भसितेन च ।
बिल्वपत्रैश्च कुसुमैः नैवेद्यैर्विविधैरपि ।
त्रिवारं सावधानेन गच्छ सर्वजयाय च ॥ ९१ ॥

त्वदर्थे कैलासाचलसुपालीगतमहा-
समुद्यच्चन्द्राभं स्फटिकधवलं लिङ्गकुलकम् ।
समानीतं सोमोद्यतविमलमौल्यर्चय परं
कलौ लिङ्गार्चायां भवति हि विमुक्तिः परतरा ॥ ९२ ॥

पुरा त्रेतायुगे सेन्द्रान्सिन्धुदैत्यविर्हिंसितान् ।
देवर्षीन्पातुकामोऽहं तेजोदेहसमन्वितः ॥ ९३ ॥

पार्वत्या नन्दिमुख्यैश्च त्रिसन्ध्यक्षेत्रगोऽभवम् ।
तदा मे त्र्यंबकश्चेति नाम प्रोक्तं मुनीश्वरैः ॥ ९४ ॥

सुन्दरी चेति नामापि पार्वत्याः परिकीर्तितम् ।
शक्तिभक्तो हयग्रीवो देवीतत्त्वविशारदः ॥ ९५ ॥

देवीं द्रष्टुं समायातः सुन्दरीं मम वल्लभाम् ।
नत्वा तुष्टाव संहृष्टः सर्वशास्त्रानुसारतः ॥ ९६ ॥

सौन्दर्यलहरी चेति स्तोत्रं तद्विश्रुतं त्वभूत् ।
नन्दिकेशस्तु तत्स्तोत्रं विलिख्य ग्रन्थरूपतः ॥ ९७ ॥

गौतमादिमुनीन्द्रेभ्यो देवेभ्यश्च ह्युपादिशत् ।
इदानीं काकयोगेन सौन्दर्यलहरी क्षितौ ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नष्टा जाता च लोकेषु जनानां च हिताय हि ।
उपदिश्याः स्तोत्रमेतत् नन्दिना लिखितं वरम् ॥ ९९ ॥

पुस्तकं त्वं गृहाणेति शङ्कराय ददौ शिवः ।
शङ्करो भृशसन्तुष्टः प्रणम्य परमेश्वरम् ॥ १०० ॥

विज्ञाप्य परमेशानं दत्तेनापि समन्वितः ।
गन्तुकामश्च बदरीं जगृहे दत्तहस्तकम् ॥ १०१ ॥

सौन्दर्यलहरीस्तोत्रघटितं पुस्तकं वरम् ।
हस्ते धृत्वाऽतिहर्षेण बहिर्द्वारमुपागतम् ॥ १०२ ॥

दृष्ट्वा नन्दी कोपयुक्तो मया विलिखितं त्विदम् ।
कथं गृहीत्वा यासि त्वं भूलोकं यतिसत्तम ॥ १०३ ॥

इत्युक्त्वा तस्य हस्ताच्च जगृहे पुस्तकं हठात् ।
शिवदत्तं न दास्यामीत्येवं प्रोवाच शङ्करः ॥ १०४ ॥

नन्दिहस्तगतं त्वर्धं अर्धं वै शङ्करस्य च ।
तदर्धपुस्तकेनैव शङ्करः प्राप तं शिवम् ॥ १०५ ॥

अर्धं नन्दीश्वरोऽगृह्णात् मम हस्ताद्धठेन च ।
इत्युवाच, तदा शम्भुः वीक्ष्य प्राहाऽथ शङ्करम् ॥ १०६ ॥

मत्प्रसादात्त्वमेवार्धं कुरुष्व यतिसत्तम ।
हयग्रीवकृतं सर्वं समागच्छेत्तवाननात् ॥ १०७ ॥

एवं वरं तु संप्राप्य शम्भोः शङ्करदेशिकः ।
दत्तेन सह संप्राप क्षणात्तद्बदरीवनम् ।
दत्तेनानुगृहीतस्स प्रतस्थे दिग्जयेच्छया ॥ १०८ ॥

दक्षेण पाणिकमलेन विबोधमुद्रां अन्येन नम्रवरदानसमर्थचिह्नम् ।
बिभ्राण पद्मनिभनेत्र कृपाम्बुराशे श्रीशङ्करार्य मम देहि पदावलम्बम् ॥

इति श्रीशङ्करविजयमकरन्दे एकोनविंश आस्वादः समाप्तः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ विंश आस्वादः ॥

### भगवत्पादानां तीर्थक्षेत्रयात्रा ।

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥ १ ॥

रौद्रे हिमालये पुण्ये क्षेत्रे केदारसंज्ञके ।
कृतस्थितिं पशुपतिं तपतस्थे स शङ्करः ॥ २ ॥

अस्य खण्डस्य स स्वामी सर्वेशोऽपि विशेषतः ।
सर्वकामप्रदः शम्भुः केदाराख्यो विशेषतः ॥ ३ ॥

हिमाद्रिपार्श्वेऽपि तटे रमन्तं संपूज्यमानं सततं मुनीन्द्रैः ।
सुरासुरैर्यक्षमहोरगाद्यैः केदारसंज्ञं शिवमीशमीडे ॥ ४ ॥

केदारेशं स्तुवन्नित्थं गन्धमादनसंस्थितम् ।
दिव्यक्षेत्राटनपरः प्रपेदे दक्षिणां दिशम् ॥ ५ ॥

नन्दयन् शास्त्रसंल्लापैः शिष्याननुचरान्बहून् ।
उज्जयिन्यभिधं क्षेत्रं क्रमेणाप स देशिकः ॥ ६ ॥

---

सङ्कलने मूलम्-शान्तिपाठतः १, शिवपुराणतः ३, द्वादशलिङ्ग-स्तोत्रतः ४, ८, ११, १४, १६, १८, २०, २२, २४, २९, चिद्विलासीयतः ६-७, माधवीयतः २५-२८, ६७-६८, ७३-८१, १०५-११७, १३१, १३२, १३६-१४२, शिवानन्दलहरीतः ३०-५० भ्रमराम्बाष्टकतः ५२-५३, योगतारावलीतः ५५-६५ शङ्कराभ्युदयतः ६७-६८, ७३-८१, अर्धनारीश्वरस्तोत्रतः ६९-७२, देवीभुजङ्गतः ८२-८४, आनन्दलहरीतः ८५-८९, त्रिपुरसुन्दरीमानसपूजास्तोत्रतः ९०-१०२, गुरुवंशकाव्यतः १०४ हस्तामलकीयतः ११८-१२९ गोविन्दनाथीयतः १३०, १३३-१३५ चित्सुखीतः १४४.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिच्छक्त्या भासते यत्र महाकालेश्वरः स्वयम् ।
निवासमकरोत्तत्र स्तुवन् देवमुमापतिम् ॥ ७ ॥

अवन्तिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम् ।
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहं सुरेशम् ॥ ८ ॥

आनर्तेषु प्रभासाख्यं क्षेत्रमाप यतीश्वरः ।
यत्र सोमेश्वरो देवो यत्र प्राची सरस्वती ॥ ९ ॥

देवं सोमेश्वरं तत्र सोमेनाराधितं पुरा ।
चिरमाराध्य तुष्टाव सरस्वत्यब्धिसङ्गमे ॥ १० ॥

सौराष्ट्रदेशे वसुधावकाशे ज्योतिर्मयं चन्द्रकलावतंसम् ।
भक्तिप्रदानाय कृतावतारं तं सोमनाथं शरणं प्रपद्ये ॥ ११ ॥

ततो जगाम विन्ध्यस्य शिरो ह्यमरकण्टकम् ।
ऋक्षपादं च यच्छीर्षात् रेवानर्मदयोर्जनिः ॥ १२ ॥

तयोश्च संगमस्थाने मान्धाताख्येऽतिपावने ।
कृतालयमथोंकारमीशमस्तौत्कृतार्हणः ॥ १३ ॥

कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्तमोङ्कारमीशं शिवमेकमीडे ॥ १४ ॥

---

(१२) विन्ध्याद्रिमालान्तर्गतमेकलापर्वतस्य प्राच्यं शिखरममरकण्टकाख्यं, यस्मात् नर्मदा उत्पद्यते । शिखरमन्यत् ऋक्षपादाख्यं कवेरापराभिधं यस्माद्रेवा उत्पद्यते । तस्याः कावेरिकेति नाम । उभे नद्यौ मान्धातृ(मण्डला)समीपे सङ्गम्य एकामभिधां भजतः नर्मदेति । क्वचित् रेवेत्यपि । अस्यास्तीरे अमरकण्टकक्षेत्रे गोविन्दभगवत्पादा अवसन्, तत्रैव सिद्धिमापुश्च ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोदावर्याः समुत्पत्तिस्थले सह्याद्रिपार्श्वगे ।
कृतालयं त्र्यंबकेशमाराध्यास्तौत्सुनिर्वृतः ॥ १५ ॥

सिंहा(सह्या)द्रिपार्श्वेऽपि तटे रमन्तं गोदावरीनीरपवित्रदेशे ।
यद्दर्शनात्पातकजातनाशः प्रजायते त्र्यंबकमीशमीडे ॥ १६ ॥

एलापुर्यां देवगिरौ घृषणेशं कृतालयम् ।
ववन्दे वरदं योगी स्तुवन् शिष्यैः परीवृतः ॥ १७ ॥

एलापुरीरम्यशिवालयेऽस्मिन् समुल्लसन्तं त्रिजगद्वरेण्यम् ।
वन्दे महोदारतरस्वभावं सदाशिवं तं घृषणेश्वराख्यम् ॥ १८ ॥

दारुकावनमासाद्य शङ्करो यतिपुङ्गवः ।
आमर्दनगराधीशमस्तौन्नागेशमादरात् ॥ १९ ॥

आमर्दसंज्ञे नगरे च रम्ये विभूषिताङ्गं विविधैश्च भोगैः ।
सद्भुक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥ २० ॥

ततो जगाम परलीं वैद्यनाथाभिधां पुरीम् ।
कृतालयं वैद्यनाथं तत्रास्तौन्निभृतान्तरः ॥ २१ ॥

---

(१५) नासिकनगरतः विंशतिक्रोशान्तरे त्र्यंबकेश्वरक्षेत्रम् । ब्रह्मगिरिनाम्नः सह्यशिखरात् उत्पन्ना गोदावरी क्षेत्रेऽस्मिन् प्रसरति ।

(१७) घिषणेश्वराख्यं इत्यपि पाठः । घृष्णेश्वरः घसृणेश्वर इत्यपि प्रथा । एलोरागुहापरिसरे देवगिरितः सप्तक्रोशान्तरे क्षेत्रमिदम् ।

(१९) औन्ध-दारुकावनक्षेत्रतः चतुर्दशक्रोशान्तरे क्षेत्रमिदम् । अल्मोरापरिसरस्थमेव तदिति केचित् ।

(२१) हैदराबाद-परिसरे परल्याख्ये ग्रामे क्षेत्रमिदम् । केचित् वङ्गेषु सन्तलपरगणामध्यगदेवगढ़नगरस्थं वैद्यनाथक्षेत्रमेव द्वादशस्वन्तर्गतं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वोत्तरे पारलिकाभिधाने सदाशिवं तं गिरिजासमेतम् ।
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं सततं नमामि ॥ २२ ॥

ततो निर्गत्य पुण्यौघां नदीं भीमामवाप सः ।
तत्रालये कृतावासमस्तौत्तं भीमशङ्करम् ॥ २३ ॥

यो डाकिनीशाकिनिकासमाजे निषेव्यमाणः पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धं तं शङ्करं भक्तहितं नमामि ॥ २४ ॥

श्रीशैले वासः ।

कुसुमितविविधपलाशभ्रमदलिकुलगीतमधुरनिस्वानम् ।
पश्यन्विपिनमयासीत् श्रीशैलं मल्लिकार्जुनावसथम् ॥ २५ ॥

कलिकल्मषभङ्गायां सोऽद्रेराराच्चलत्तरङ्गायाम् ।
अधरीकृततुङ्गायां सस्नौ पातालगामिगङ्गायाम् ॥ २६ ॥

नमन्मोहभङ्गं नभोलेहिशृङ्गं त्रुटत्पापसङ्गं रटत्पक्षिभृङ्गम् ।
समाश्लिष्टगङ्गं प्रहृष्टान्तरङ्गं तमारुह्य शृङ्गं ददर्शेशलिङ्गम् ॥ २७ ॥

प्रणमद्भवबीजभर्जनं प्रणिपत्यामृतसंपदार्जनम् ।
प्रमुमोद स मल्लिकार्जुनं भ्रमराम्बासचिवं नतः स्तुवन् * ॥ २८ ॥

श्रीशैलशृङ्गे विविधप्रसङ्गे शेषाद्रिशृङ्गेऽपि सदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेनं नमामि संसारसमुद्रसेतुम् ॥ २९ ॥

कलाभ्यां चूडालङ्कृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।

---

वदन्ति । (२३) पुणेमण्डलमध्यगभोवरगिरिग्रामे भीमानद्युत्पत्तिस्थले क्षेत्रमिदम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥ ३० ॥

नरत्वं देवत्वं नगवनमृगत्वं मशकता
पशुत्वं कीटत्वं भवतु विहगत्वादिजननम् ।
सदा त्वत्पादाब्जस्मरणपरमानन्दलहरी-
विहारासक्तं चेद्धृदयमिह किं तेन वपुषा ॥ ३१ ॥

वटुर्वा गेही वा यतिरपि जटी वा तदितरो
नरो वा यः कश्चिद्भवतु भव किं तेन भवति ।
यदीयं हृत्पद्मं यदि भवदधीनं पशुपते
तदीयस्त्वं शम्भो भवसि भवभारं च वहसि ॥ ३२ ॥

प्रभुस्त्वं दीनानां खलु परमबन्धुः पशुपते
प्रमुख्योऽहं तेषामपि किमुत बन्धुत्वमनयोः ।
त्वयैव क्षन्तव्याः शिव मदपराधाश्च सकलाः
प्रयत्नात्कर्तव्यं मदवनमियं बन्धुसरणिः ॥ ३३ ॥

सदा मोहाटव्यां चरति युवतीनां कुचगिरौ
नटत्याशाशाखास्वटति झटिति स्वैरमभितः ।
कपालिन् भिक्षो मे हृदयकपिमत्यन्तचपलं
दृढं भक्त्या बद्ध्वा शिव भवदधीनं कुरु विभो ॥ ३४ ॥

प्रलोभाद्यैरर्थाहरणपरतन्त्रो धनिगृहे
प्रवेशोद्युक्तः सन् भ्रमति बहुधा तस्करपते ।
इमं चेतश्चोरं कथमिह सहे शङ्कर विभो
तवाधीनं कृत्वा मयि निरपराधे कुरु कृपाम् ॥ ३५ ॥

सारूप्यं तव पूजने शिव महादेवेति सङ्कीर्तने
सामीप्यं शिवभक्तिधुर्यजनतासाङ्गत्यसंभाषणे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सालोक्यं च चराचरात्मकतनुध्याने भवानीपते
सायुज्यं मम सिद्धमत्र भवति स्वामिन् कृतार्थोऽस्म्यहम् ॥

योगक्षेमधुरन्धरस्य सकलश्रेयःप्रदोद्योगिनः
दृष्टादृष्टमतोपदेशकृतिनो बाह्यान्तरव्यापिनः ।
सर्वज्ञस्य दयाकरस्य भवतः किं वेदितव्यं मया
शम्भो त्वं परमान्तरङ्ग इति मे चित्ते स्मराम्यन्वहम् ॥

मा गच्छ त्वमितस्ततो गिरिश भो मय्येव वासं कुरु
स्वामिन्नादिकिरात मामकमनःकान्तारसीमान्तरे ।
वर्तन्ते बहुशो मृगा मदजुषो मात्सर्यमोहादयः
तान्हत्वा मृगयाविनोदरुचितालाभं च संप्राप्स्यसि ॥ ३८ ॥

आद्यायामिततेजसे श्रुतिपदैर्वेद्याय साध्याय ते
विद्यानन्दमयात्मने त्रिजगतः संरक्षणोद्योगिने ।
ध्येयायाखिलयोगिभिः सुरगणैर्गेयाय मायाविने
सम्यक् ताण्डवसंभ्रमाय जटिने सेयं नतिः शम्भवे ॥ ३९ ॥

नित्यं स्वोदरपूरणाय सकलानुद्दिश्य वित्ताशया
व्यर्थं पर्यटनं करोमि भवतः सेवां न जाने विभो ।
मज्जन्मान्तरपुण्यपाकबलतस्त्वं शर्व सर्वान्तरः
तिष्ठस्येव हि तेन वा पशुपते ते रक्षणीयोऽस्म्यहम् ॥

अमितमुदमृतं मुहुर्दुहन्तीं विमलभवत्पदगोष्ठमावसन्तीम् ।
सदय पशुपते सुपुण्यपाकां मम परिपालय भक्तिधेनुमेकाम् ॥ ४१ ॥

कल्याणिनं सरसचित्रगतिं सवेगं सर्वेङ्गितज्ञमनघं ध्रुवलक्षणाढ्यम् ।
चेतस्तुरङ्गमधिरुह्य चर स्मरारे नेतः समस्तजगतां वृषभाधिरूढ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एष्यत्येष जनिं मनोऽस्य कठिनं तस्मिन्नटानीति मद्-
रक्षायै गिरिसीम्नि कोमलपदन्यासः पुराऽभ्यासितः ।
नो चेद्दिव्यगृहान्तरेषु सुमनस्तल्पेषु वेद्यादिषु
प्रायः सत्सु शिलातलेषु नटनं शम्भो किमर्थं तव ॥ ४३ ॥

शिव तव परिचर्यासन्निधानाय गौर्याः
भव मम गुणधुर्यां बुद्धिकन्यां प्रदास्ये ।
सकलभुवनबन्धो सच्चिदानन्दसिन्धो
सदय हृदयगेहे सर्वदा संवस त्वम् ॥ ४४ ॥

अशनं गरलं फणी कलापो वसनं चर्म च वाहनं महोक्षः ।
मम दास्यसि किं किमस्ति शम्भो तव पादाम्बुजभक्तिमेव देहि ॥

वचसा चरितं वदामि शम्भोरहमुद्योगविधासु तेऽप्रसक्तः ।
मनसा कृतिमीश्वरस्य सेवे शिरसा चैव सदाशिवं नमामि ॥ ४६ ॥

धैर्याङ्कुशेन निभृतं रभसादाकृष्य भक्तिशृङ्खलया ।
पुरहर चरणालाने हृदयमदेभं बधान चिद्यन्त्रैः ॥ ४७ ॥

प्रचरत्यभितः प्रगल्भवृत्त्या मदवानेष मनःकरी गरीयान् ।
परिगृह्य नयेन भक्तिरज्ज्वा परम स्थाणु पदं दृढं नयामुम् ॥ ४८ ॥

सर्वालङ्कारयुक्तां सरलपदयुतां साधुवृत्तां सुवर्णां
सद्भिः संस्तूयमानां सरसगुणयुतां लक्षितां लक्षणाढ्याम् ।
उद्यद्भूषाविशेषामुपगतविनयां द्योतमानार्थरेखां
कल्याणीं देव गौरीप्रिय मम कवितांकन्यकां त्वं गृहाण ॥ ४९ ॥

इदं ते युक्तं वा परमशिव कारुण्यजलधे
गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ
कथं शम्भो स्वामिन् कथय मम वेद्योऽसि पुरतः ॥ ५० ॥

इत्थं स्तुवन्नमन्नीशं भक्तिवश्यं स भक्तितः ।
आनन्दलहरीमग्नो भ्रमराम्बामथानमत् ॥ ५१ ॥

चाञ्चल्यारुणलोचनाञ्चितकृपां चन्द्रार्कचूडामणिं
चारुस्मेरमुखीं चराचरजगत्संरक्षिणीं तत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ५२ ॥

षट्ताराङ्गणदीपिकां शिवसतीं षड्वैरिवर्गापहां
षट्चक्रान्तरसंस्थिताम्बरसुधां षड्योगिनीवेष्टिताम् ।
षट्चक्राञ्चितपादुकाञ्चितपदां षड्भावगां षोडशीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ५३ ॥

इत्थं तयोर्योगिवर्यः सपर्यां विदधत्सुधीः ।
कञ्चित्कालमुवासात्र सिद्धिक्षेत्रे तपश्चरन् ॥ ५४ ॥

अशेषदृश्योज्झितदृङ्मयानां अवस्थितानामिह राजयोगे ।
निष्ठास्वरूपं मुनिपुङ्गवानां स वर्णयामास निरीक्ष्य सम्यक् * ॥ ५५ ॥

चित्तेन्द्रियाणां चिरनिग्रहेण श्वासप्रचारे शमिते यमीन्द्राः ।
निवातदीपा इव निश्चलाङ्गा मनोन्मनीमग्नधियो भवन्ति ॥ ५६ ॥

असह्य सङ्कल्पपरंपराणां संभेदने सन्ततसावधानम् ।
आलम्बनाशादपचीयमानं शनैः शनैः शान्तिमुपैति चेतः ॥ ५७ ॥

निश्वासलोपैर्निभृतैः शरीरैः नेत्राम्बुजैरर्धनिमीलितैश्च ।
आविर्भवन्तीममनस्कमुद्रां आलोकयामो मुनिपुङ्गवानाम् ॥ ५८ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमी यमीन्द्राः सहजामनस्कात् अहंममत्वे शिथिलायमाने ।
मनोऽतिगं मारुतवृत्तिशून्यं गच्छन्ति भावं गगनावशेषम् ॥ ५९ ॥

निवर्तयन्तीं निखिलेन्द्रियाणि प्रवर्तयन्तीं परमात्मयोगम् ।
संविन्मयीं तां सहजामनस्कां कदा गमिष्यामि गतान्यभावः ॥ ६० ॥

प्रत्यग्विमर्शातिशयेन पुंसां प्राचीनगन्धेषु पलायितेषु ।
प्रादुर्भवेत्काचिदजाड्यनिद्रा प्रपञ्चचिन्तां परिवर्जयन्ती ॥ ६१ ॥

विच्छिन्नसङ्कल्पविकल्पमूले निःशेषनिर्मूलितकर्मजाले ।
निरन्तराभ्यासनितान्तभद्रा सा जृम्भते योगिनि योगनिद्रा ॥ ६२ ॥

विश्रान्तिमासाद्य तुरीयतल्पे विश्वाद्यवस्थात्रितयोपरिस्थे ।
संविन्मयीं कामपि सर्वकालं निद्रां सखे निर्विश निर्विकल्पाम् ॥ ६३ ॥

प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते ।
अहो बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति जगत्समग्रम् ॥ ६४ ॥

सिद्धिं तथाविधमनोविलयां समाधौ
श्रीशैलशृङ्गकुहरेषु कदोपलप्स्ये ।
गात्रं यदा मम लताः परिवेष्टयन्ति
कर्णे यदा विरचयन्ति खगाश्च नीडान् ॥ ६५ ॥

विचरन्तीं मतिं शुद्धां समाधौ निर्विकल्पके ।
विन्दन्मतिक्रान्तैर्दोषैरलिप्तो व्यचरत्ततः ॥ ६६ ॥

---

(६६) श्रीशैलक्षेत्र एव कापालिकाय स्वशिरोग्रहणाभ्यनुज्ञा, पद्मपादशरीराविष्टेन भगवता नरसिंहेन शङ्करहननोद्युक्तस्य कापालिकस्य शिक्षणमिति कथाक्रमो माधवीये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## गोकर्णक्षेत्रयात्रा, मृतद्विजसुतोज्जीवनम् ।

अथैकदासौ यतिसार्वभौमः सर्वाणि तीर्थानि चरन् सतीर्थ्यैः ।
घोरात्कलेर्गोपितधर्ममारात् गोकर्णमभ्यर्णचलार्णवौघम् ॥ ६७ ॥

विरिञ्चनाभोरुहनामवन्द्यं प्रपञ्चनाट्यादूभुतसूत्रधारम् ।
तुष्टाव वामार्धवधूकं अस्तदुष्टावलेपं प्रणमन्नटेशम् ॥ ६८ ॥

चांपेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥ ६९ ॥

कस्तूरिकाकुङ्कुमचर्चितायै चितारजःपुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ॥ ७० ॥

अंभोधरश्यामलकुन्तलायै तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय ॥ ७१ ॥

प्रपञ्चसृष्ट्युन्मुखलास्यकायै समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥ ७२ ॥

गुणत्रयातीतविभावमित्थं गोकर्णनाथं वचसाऽर्चयित्वा ।
तिस्रस्स रात्रीस्त्रिजगत्पवित्रे क्षेत्रे मुदाऽत्र क्षिपति स्म कालम् ॥ ७३॥

वैकुण्ठकैलासविवर्तभूतं हरस्ततोऽपं हरिशङ्कराख्यम् ।
दिव्यस्थलं देशिकसार्वभौमः तीर्थप्रवासी नचिरादयासीत् ॥ ७४ ॥

भ्रमापनोदाय भिदावदानां अद्वैतमुद्रामिह दर्शयन्तौ ।
आराध्य देवौ हरिशङ्करौ द्वौ मूकांबिकायाः सदनं प्रतस्थे ॥ ७५ ॥

अंके निधाय व्यसुमात्मजातं मोहाकुलौ हन्त मुहुः प्ररुद्य ।
तदेकपुत्रौ द्विजदम्पती स दृष्ट्वा दयाधीनतया शुशोच ॥ ७६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपारमब्धत्यथ शोकमस्मिन् अभूयतोच्चैरशरीरवाचा ।
जायेत संरक्षितुमक्षमस्य जनस्य दुःखाय परं दयेति ॥ ७७ ॥

आकर्ण्य वाणीमशरीरिणीं तामसाविति व्याहरति स्म तज्ज्ञः ।
जगत्त्रयीरक्षणदक्षिणस्य सत्यं तवैकस्य तु शोभते सा ॥ ७८ ॥

इतीरयत्येव यतौ द्विजातेः सुतस्सुखं सुप्त इवोदतिष्ठत् ।
समीपगैः सर्वजनीनमस्य चरित्रमालोक्य विसिष्मिये च ॥ ७९ ॥

मूकाम्बिकाक्षेत्रवासः ।

रम्योपशल्यं कृतमालसालरसालहिन्तालतमालतालैः ।
सिद्धिस्थलीं साधकसंसदां तत् मूकांबिकाधाम मुनिर्जगाहे ॥ ८० ॥

उच्चावचानन्दजबाष्पमुच्चैरुद्गीर्णरोमाञ्चमुदारभक्तिः ।
अंबामिहापारकृपावलम्बां संभावयन्नस्तुत निस्तुलं सः ॥ ८१ ॥

विरिञ्चादिरूपैः प्रपञ्चे विहृत्य स्वतन्त्रा यदा स्वात्मविश्रान्तिरेषा ।
तदा मानमातृप्रमेयातिरिक्तं परानन्दमीडे भवानि त्वदीयम् ॥ ८२ ॥

महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ॥ ८३ ॥

नमोवाकमाशास्महे देवि युष्मत्पदाम्भोजयुग्माय तिग्माय गौरि ।
विरिञ्च्यादिभास्वत्किरीटप्रतोलीप्रदीपायमानप्रभाभास्वराय ॥ ८४ ॥

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि ।

---

(७९) अयमेव उदङ्क इति प्रथित इति केचित्। शैलादेर्नन्दिनोऽम्शात् जातोऽयमिति माधवीये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिः
तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ ८५ ॥

घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैः
विशिष्यानाख्येयो भवति रसनामात्रविषयः ।
तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः
कथङ्कारं ब्रूमः सकलनिगमागोचरगुणे ॥ ८६ ॥

विधात्री धर्माणां त्वमसि सकलाम्नायजननी
त्वमर्थानां मूलं धनदनमनीयांघ्रिकमले ।
त्वमादिः कामानां जननि कृतकन्दर्पविजये
सतां मुक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८७ ॥

कृपापाङ्गालोकं वितर तरसा साधुचरिते
न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते ।
न चेदिष्टं दद्यादनुपदमहो कल्पलतिका
विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥ ८८ ॥

महान्तं विश्वासं तव चरणपङ्केरुहयुगे
निधायान्यन्नैवाश्रितमिह मया दैवतमुमे ।
तथापि त्वच्चेतो यदि मयि न जायेत सदयं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ८९ ॥

मम न भजनशक्तिः पादयोस्ते न भक्तिः
न च विषयविरक्तिर्ध्यानयोगे न सक्तिः ।
इति मनसि सदाहं चिन्तयन्नाद्यशक्ते
रुचिरवचनपुष्पैरर्चनं सञ्चिनोमि ॥ ९० ॥

इन्द्रादींश्च दिगीश्वरान् सहपरीवारानथो सायुधान्
योषिद्रूपधरान् स्वदिक्षु निहितान् सञ्चिन्त्य हृत्पङ्कजे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्खं श्रीवसुधारया वसुमतीयुक्तं च पद्मं स्मरन्
कामं नौमि रतिप्रियं सहचरं प्रीत्या वसन्तं भजे ॥ ९१ ॥

गायन्तीः कलवीणयातिमधुरं हुङ्कारमातन्वतीः
द्वाःशाभ्यासकृतस्थितीरिह सरस्वत्यादिकाः पूजयन् ।
द्वारे नौमि मदोन्मदं सुमगणाधीशं मदेनोन्मदां
मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ॥ ९२ ॥

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमले प्रादुर्भूतां भजे परदेवताम् ॥ ९३ ॥

आलम्ब्य स्वसखीं करेण शनकैः सिंहासनादुत्थिता
कूजन्मन्दमरालमञ्जुलगतिप्रोल्लासिभूषाम्बरा ।
आनन्दप्रतिपादकैरुपनिषद्वाक्यैः स्तुता वेधसा
मच्चित्ते स्थिरतामुपैतु गिरिजा यान्ती सभामण्डपम् ॥ ९४ ॥

चञ्चद्वेत्रकराभिरङ्गविलसद्भूषांबराभिः पुरो-
यान्तीभिः परिचारिकाभिरमरव्राते समुत्सारिते ।
रुद्धे निर्जरसुन्दरीभिरभितः कक्षान्तरे निर्गतं
वन्दे नन्दितशम्भु निर्मलचिदानन्दैकरूपं महः ॥ ९५ ॥

कस्मैचित्सुचिरादुपासितमहामन्त्रौघसिद्धिं क्रमात्
एकस्मै भवनिःस्पृहाय परमानन्दैकरूपां गतिम् ।
अन्यस्मै विषयानुरक्तमनसे दीनाय दुःखापहं
द्रव्यं द्वारसमाश्रिताय ददतीं वन्दामहे सुन्दरीम् ॥ ९६ ॥

सन्तुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पौघैरभिपूजितां भगवतीं त्वां वन्दमाना मुदा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्फूर्जच्चावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थिताः सविनयं वन्दामहे देवताः ॥ ९७ ॥

परमामृतमत्तसुन्दरीगणमध्यस्थितमर्कभासुरम् ।
परमामृतघूर्णितेक्षणं किमपि ज्योतिरुपास्महे परम् ॥ ९८ ॥

चक्षुः पश्यतु नेह किञ्चन परं घ्राणं न वा जिघ्रतु
श्रोत्रं हन्त शृणोतु न त्वगपि न स्पर्शं समालम्बताम् ।
जिह्वा वेत्तु न वा रसं मम परं युष्मत्स्वरूपामृते
नित्यानन्दविघूर्णमाननयने नित्यं मनो मज्जतु ॥ ९९ ॥

यस्त्वां पश्यति पार्वति प्रतिदिनं ध्यानेन तेजोमयीं
मन्ये सुन्दरि तत्त्वमेतदखिलं वेदेषु निष्ठां गतम् ।
यस्तस्मिन्समये तवार्चनविधावानन्दसान्द्राशयो
यातोऽहं तदभिन्नतां परशिवे सोऽयं प्रसादस्तव ॥ १०० ॥

विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते सन्निधिं
प्राप्तं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरेद् दृग्वाक् च मे जातु चेत्
तत्सौम्ये स्वगुणैर्बधान न यथा भूयो विनिर्गच्छति ॥ १०१ ॥

क्वाहं मन्दमतिः क्व चेदमखिलैरेकान्तभक्तैः स्तुतं
ध्यातं देवि तथापि ते स्वमनसा श्रीपादुकापूजनम् ।
कादाचित्कमदीयचिन्तनविधौ सन्तुष्टया शर्मदं
स्तोत्रं देवतया तया प्रकटितं मन्ये मदीयानने ॥ १०२ ॥

मूकाम्बामभिवाद्याथ शिष्यैः परिवृतोऽनघः ।
तं देशं तौलवं कृत्स्नं परिचक्राम शङ्करः ॥ १०३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## हस्तामलकस्य शिष्यतया स्वीकारः ।

स तौलवग्रामवरं प्रतीतं श्रीरौप्यपीठाख्यपुरं प्रपेदे ।
श्रीमाननन्तेश्वरमर्चयित्वा चन्द्रेश्वरं चारु मुनीन्द्र आर्चत् ॥ १०४ ॥

तत्र द्विजः कश्चन शास्त्रवेदी प्रभाकराख्यः प्रथितानुभावः ।
प्रवृत्तिशास्त्रैकरतः सुबुद्धिः आस्ते क्रतून्मीलितकीर्तिवृन्दः ॥ १०५ ॥

गावो हिरण्यं धरणी समग्रा सद्बान्धवा ज्ञातिजनाश्च तस्य ।
सन्त्येव किं तैर्नहि तोष एभिः पुत्रो यदस्याजनि मुग्धचेष्टः ॥ १०६ ॥

न वक्ति किञ्चिन्न शृणोति किञ्चिद्ध्यायन्निवास्ते किल मन्दचेष्टः ।
रूपेषु मारो महसा महस्वान् मुखेन चन्द्रः क्षमया मही च ॥ १०७ ॥

ग्रहग्रहार्त्तः जडवद्विचेष्टते किं वा स्वभावादुत पूर्वकर्मणः ।
संचिन्तयंस्तिष्ठति तत्पिताऽनिशं समागतान्प्रष्टुमना बहुश्रुतान् ॥ १०८ ॥

शुश्राव तं ग्राममनिन्दितात्मा समागतं कञ्चन पूज्यपादम् । *
सोपायनः प्राप गुरुं व्यशिश्रणत् फलं ननामास्य च पादपङ्कजे ॥ १०९ ॥

अनीनमत्तं च तदीयपादयोः जडाकृतिं भस्मनिगूढवह्निवत् ।
स नोदतिष्ठत्पतितः पदांबुजे प्रायः स्वजाड्यं प्रकटं विधित्सति ॥ ११० ॥

उपात्तहस्तः शनकैरवाङ्मुखं तं देशिकेन्द्रः कृपयोदतिष्ठिपत् ।
उत्थापिते स्वे तनये पिताऽब्रवीत् वद प्रभो जाड्यममुष्य किंकृतम् ॥ १११ ॥

---

(१०६) वायोरंशजः, इति माधवीये । दिवाकर इति पितृनाम, प्रयागक्षेत्रपरिसरगतग्रामे इदं वृत्तं, व्याससमागमात्पूर्वमेवं वृत्तं इति चिद्विलासीये । शिव इति पितृनामेति गोविन्दनाथीये । चन्द्रेश्वराख्ये उडुपीग्रामे कथेयं प्रवृत्तेति गुरुवंशकाव्ये माधवीये च । अयमेव पृथ्वीधवः (पृथ्वीधरो वा) इति गोवर्धनजगद्गुरुनाममाला सुधन्वलेखश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्षाण्यतीयुर्भगवन्नमुष्य पञ्चाष्ट जातस्य विनाऽवबोधम् ।
नाध्यैष्ट वेदानलिखच्च नार्णानचीकरं चोपनयं कथञ्चित् ॥ ११२ ॥

क्रीडापरः क्रोशति बालवर्गः तथाऽपि न क्रीडितुमेष याति ।
बालाः शठा मुग्धमिमं निरीक्ष्य सन्ताडयन्तेऽपि न रोषमेति ॥ ११३ ॥

भुङ्क्ते कदाचिन्न च जातु भुङ्क्ते स्वेच्छाविहारी न करोति चोक्तम् ।
तथापि रुष्टेन न ताड्यतेऽयं स्वकर्मणा वर्धत एव नित्यम् ॥ ११४ ॥

इतीरयित्वोपरते च विप्रे पप्रच्छ तं शङ्करदेशिकेन्द्रः ।
कस्त्वं किमेवं जडवत्प्रवृत्तः स चाब्रवीद्बालवपुर्महात्मा ॥ ११५ ॥

नाहं जडः किन्तु जडः प्रवर्तते मत्सन्निधानेन न सन्दिहे गुरो ।
षडूर्मिषड्भावविकारवर्जितं सुखैकतानं परमस्मि तत्पदम् ॥ ११६ ॥

ममेव भूयादनुभूतिरेषा मुमुक्षुवर्गस्य सदेति विद्वान् ।*
पद्यैः पैर्द्वादशाभिर्बभाषे चिदात्मतत्त्वं विधुतप्रपञ्चम् ॥ ११७ ॥

निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११८ ॥

यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि ।
प्रवर्तन्त आश्रित्य निष्कम्पमेकं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११९ ॥

मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु ।
चिदाभासको धीषु जीवोऽपि तद्वत् स नित्योपलब्धिस्वरूपोऽहमात्मा ॥

यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥

मनश्चक्षुरादेर्विमुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२२ ॥

य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथाऽनेकचक्षुःप्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेका धियो यस्तथैकप्रबोधः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२४ ॥

विवस्वत्प्रभातं यथा रूपमक्षं प्रगृह्णाति नाभातमेवं विवस्वान् ।
यदाभात आभासयत्यक्षमेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२५ ॥

यथा सूर्य एकोऽप्स्वनेकश्चलासु स्थिरास्वप्यनन्वग्विभाव्यस्वरूपः ।
चलासु प्रभिन्नासु धीष्वेवमेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२७ ॥

समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यं न स्पृशन्ति ।
वियद्वत्सदा शुद्धमच्छस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२८ ॥

उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि ।
यथा चन्द्रकाणां जले चञ्चलत्वं तथा चञ्चलत्वं तवापीह विष्णो ॥ १२९ ॥

करस्थधात्रीफलवत् चित्स्वरूपं प्रकाशितम् ।
तत्पद्यैर्हि ततोऽस्याख्या हस्तामलक इत्यभूत् ॥ १३० ॥

विनोपदेशं स्वत एव जातं परात्मबोधं द्विजवर्यसूनोः ।
व्यस्मेष्ट संप्रेक्ष्य स देशिकेन्द्रो न्यधात्स्वहस्तं कृपयोत्तमाङ्गे ॥ १३१ ॥

पुराभवाभ्यासवशेन सर्वं स वेत्ति सम्यङ् न च वक्ति किञ्चित् ।
नो चेत्कथं स्वानुभवैकगर्भपद्यानि भाषेत निरक्षरास्यः ॥ १३२ ॥

द्विजपुत्रं निवृत्तं तं विज्ञाय यतिपुङ्गवः ।
ऊचे तत्पितरं नेह वस्तुं योग्यस्तवात्मजः ॥ १३३ ॥

देहगेहादिममता विद्यते नास्य भूसुर ।
बोधेनायं तमो हित्वा परमं धाम पश्यति ॥ १३४ ॥

इत्युक्त्वा विप्रतनयं गृहीत्वा प्रस्थितो गुरुः ।
किंचित्तमनुगम्याथ स्वगेहं प्राप्तवान् द्विजः ॥ १३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञाप्य तस्मिन्निति निर्गतेऽसौ तदाप्रभृत्यत्र वसत्युदारः ।
आशैशवादात्मविलीनचेताः कथं प्रवर्तेत मृषाप्रपञ्चे * ॥ १३६ ॥

निशाम्य पप्रच्छुरमुं विनेयाः स्वामिन्विनैव श्रवणाद्युपायान् ।
अलब्ध विज्ञानमयं कथं वा भवानिदं साधु विदांकरोतु ॥ १३७ ॥

तानब्रवीत्संयमिचक्रवर्ती कश्चित्पुरा यामुनतीरवर्ती ।
बभूव सिद्धः किल साधुवृत्तः सांसारिकेभ्यः सुतरां निवृत्तः ॥ १३८ ॥

तस्यान्तिके सा जननी किलास्य द्विहायनं जातु निवेश्य बालम् ।
क्षणं प्रतीक्षस्व शिशुं द्विजेति स्नातुं सखीभिः सह निर्जगाम ॥

अत्रान्तरे दैववशात्स बालः चंक्रम्यमाणो निपपात नद्याम् ।
मृतं तमादाय शिशुं तदीयाः चक्रन्दुरुच्चैः पुरतो महर्षेः ॥ १४० ॥

आक्रोशमाकर्ण्य मुनिः स तेषां अत्यन्तखिन्नो निजयोगभूम्ना ।
प्राविक्षदङ्गं पृथुकस्य तस्य स एष हस्तामलकस्तपस्वी ॥ १४१ ॥

तस्मादयं वेद विनोपदेशं श्रुतीरनन्ताः सकलाः स्मृतीश्च ।
सर्वाणि शास्त्राणि परं च तत्वं अज्ञातमेतेन न किञ्चिदस्ति ॥ १४२ ॥

स्वशिष्योदितपद्यानां गभीरार्थवतां गुरुः ।
विस्तृतं भाष्यमातेने विचित्रा महतां कृपा ॥ १४३ ॥

भगवत्पादपादाब्जपांसवः पान्तु सन्ततम् ।
अपारासारसंसारसागरोत्तारसेतवः ॥ १४४ ॥

इति श्रीशङ्करविजयमकरन्दे विंश आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ एकविंश आस्वादः ॥

### तोटकस्य शिष्यतया स्वीकारः ।

फलयन्निलयं च तुङ्गभद्रातटिनीरोधसि वैघलः स्त्रिया द्राक् ।
कतिचिच्छरदोऽत्यवाहयद्यो यतिराट् क्वापि मठे स मेऽस्तु सद्यः ॥ १ ॥

सञ्चारतः स्वैरमथाब्धितीरे भगन्दरस्तद्गुरुदेहमाप ।
कश्चिद्विनेयोऽस्य गुरोर्निषेवां विशेषतो भक्तिवशाच्चकार ॥ २ ॥

विनीतो मितसत्योक्तिः दयालुः सततं गुरोः ।
शुश्रूषातत्परः सोऽभूत् छायेवानुचरन् सदा ॥ ३ ॥

गुरौ तिष्ठति वै तिष्ठन् गच्छन् गच्छति सन्ततम् ।
स्वपन् स्वपति कुर्वाणः प्रबुद्धे तु प्रजागरम् ॥ ४ ॥

---

सङ्कलने मूलम्—जगद्गुरुरत्नमालिकास्तोत्रतः १, गुरुवंशकाव्यतः २, ९८-१०१, ११४, गोविन्दनाथीयतः ३-७, ४७, व्यासाचलीयतः ८-१०, १५, १६, ४८-५८, ६०-७४, ७६-९२, माधवीयतः ११-१४, ४८, ५९-९७, ११३, १२०, तोटकाष्टकतः १८-२४ श्रुतिसारसमुद्धरणतः २७-४६, श्रीभाष्यस्वामिकृत सुरेश्वरप्रशस्तितः १०२, शारदाभुजङ्गतः १०४-१११, चिद्विलासीयतः ११२, सुरेश्वराचार्यकृतवार्तिकतः ११५, पद्मपादकृतपञ्चपादिकातः ११६-११७, नैष्कर्म्यसिद्धितः ११८, सिद्धान्तबिन्दुतः ११९, भगवत्पादसप्ततितः १२०.

(२) अस्य प्रतर्दन इति अभिधान्तरम् (सुधन्वलेखे)। गिरिः आनन्दगिरिरित्यपि । वायोः नन्दीश्वरस्य बृहस्पतेश्चांशजोऽयमिति माधवीये सदानन्दीये च। काश्यां विश्वनाथाध्वरिपुत्रः कलानाथाख्योऽयं समाजगामेति मण्डनात्पूर्वमेवास्य शिष्यता इति च चिद्विलासीये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगुरोर्वस्त्रकौपीननिर्मलीकरणे रतः ।
दन्तकाष्ठप्रदाता च स्नानकाले यथोचितम् ॥ ५ ॥

अर्घ्यपाद्योपनेता च देवपूजारते गुरौ ।
त्राणे सति यत्किञ्चित् तच्छृण्वन्नधिकादरः ॥ ६ ॥

गुरोः श्रीमत्पदाम्भोजसंवाहनविचक्षणः ।
अनुक्तोऽपि हितं कुर्यात् अहितं न कदाचन ॥ ७ ॥

तच्छोणिताक्तवसनं प्रतिघस्रमेष कासारतीरगशिलातलपृष्ठभागे ।
नेनेक्ति भक्तिवशगो न जुगुप्सतेऽसौ यावन्मलं तदपगच्छति तावदद्धा ॥

किञ्चित्समाधाय पुरोक्तमंशुकं निर्णेक्तुकामः सरसीतटं प्रगे ।
प्रयाति संक्षाल्य विशुद्धबुद्धये जिघ्रत्यभीक्ष्णं पुनरेव धावति ॥ ९ ॥

एवं यतात्मा वसनं दिने दिने प्रक्षाल्य संवेष्ट्य ददाति भूयसे ।
शोकोऽपि किञ्चिन्मनसीति वर्तते नाशक्नुवं किञ्चिदपीह वेदितुम् ॥

तस्मिंस्तदा किल विनेयवरे स्वशाटीप्रक्षालनाय गतवत्यपवर्तनीं ताम् ।*
व्याख्यानकर्मणि तदागममीक्षमाणो भक्तेषु वत्सलतया विललम्ब एषः ॥

शान्तिपाठमथ कर्तुमसंख्येषूद्यतेषु स विनेयवरेषु ।
स्थीयतां गिरिरपि क्षणमात्रादेष्यतीति समुदीरयति स्म ॥ १२ ॥

तां निशाम्य निगमान्तगुरूक्तिं मन्दधीरनधिकार्यपि शास्त्रे ।
किं प्रतीक्ष्यत इति स्म ह भित्तिः गर्वलेशसहितैः समदर्शि* ॥ १३ ॥

गर्वदोषमपहर्तुमखर्वं स्वाश्रवेषु करुणातिशयाच्च ।
व्यादिदेश स चतुर्दश विद्याः सद्य एव मनसा गिरिनाम्ने ॥ १४ ॥

प्रक्षाल्यमानं वसनं यथाऽऽत्मनः शिरः समाहन्ति शिलाञ्च कर्कशम् ।
भक्त्या परं क्षालयतो महात्मनः पद्यात्मना सा परिणाममेयुषी ॥१५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमद्गुरोः पादसरोजमूलात् तदाश्रयात् तत्करुणावसेकात् ।
भक्तिर्लता तोटकवृत्तवृन्दहृद्यानि पद्यानि फलान्यवाप ॥ १६ ॥

कुतोऽप्यन्तर्विस्फुरन्त्या चिच्छक्त्या प्रेरितो बलात् ।
गायन्माद्यन्निवाधावत् गुरोश्चरणसन्निधिम् ॥ १७ ॥

"विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं भव शङ्करदेशिक मे शरणम् ॥ १८ ॥

करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम् ।
रचयाखिलदर्शनतत्त्वविदं भव शङ्करदेशिक मे शरणम् ॥ १९ ॥

भवता जनता सुहिता भविता निजबोधविचारणचारुमते ।
कलयेश्वरजीवविवेकविदं भव शङ्करदेशिक मे शरणम् ॥ २० ॥

भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता ।
मम वारय मोहमहाजलधिं भव शङ्करदेशिक मे शरणम् ॥ २१ ॥

सुकृतेऽधिकृते बहुधा भवतो भविता समदर्शनलालसता ।
अतिदीनमिमं परिपालय मां भव शङ्करदेशिक मे शरणम् ॥ २२ ॥

जगतीमवितुं कलिताकृतयो विचरन्ति महामहसश्छलतः ।
अहिमांशुरिवात्र विभासि गुरो भव शङ्करदेशिक मे शरणम् ॥ २३ ॥

विदिता न मया विशदैककला न च किञ्चन काञ्चनमस्ति गुरो ।
द्रुतमेव विधेहि कृपां सहजां भव शङ्करदेशिक मे शरणम् ॥"

गायन्नित्थं मुक्तबन्धः कृत्तोन्मूलितवासनः ।
अभ्यधावत्स शान्तात्मा शरण्यमनघं गुरुम् ॥ २५ ॥

श्रुत्वेदमपि ते शिष्या विस्मयाद्भित्तितां गताः ।
चिरादधिगतप्रज्ञास्तत्यजुर्दुष्टभावनाम् ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितया तु जगत्।
निरविद्यत कश्चिदतो निखिलादविनाशि कृतेन न लभ्यमिति ॥ २७ ॥

प्रतिपित्सुरसावविनाशि पदं यतिधर्मरतो यतिमेव गुरुम्।
विदितात्मसतत्वमुपेत्य कविं प्रणिपत्य निवेदितवान्स्वमतम् ॥ २८ ॥

भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम्।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥ २९ ॥

विनिवर्त्य रतिं विषये विषमां परिमुच्य शरीरनिबद्धमतिम्।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममतेः ॥ ३० ॥

विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिं सततम्।
दृशिरूपमनन्तमृतं विगुणं हृदयस्थमवेहि सदाहमिति ॥ ३१ ॥

यदनभ्युदितं वदनेन सदा नयनेन च पश्यति यन्न सदा।
श्रवणेन च यन्न शृणोति सदा मनसापि च यन्मनुते न सदा ॥

वदनं नयनं च तथा श्रवणं मन एव च येन मतं सततम्।
अवगच्छ तदेव पदं परमं त्वमिति श्रुतिरीक्षितुरुक्तवती ॥ ३३ ॥

अणु नो न च तद्विपरीतगुणं न च ह्रस्वमतो न च दीर्घमपि।
प्रतिषिद्धसमस्तविशेषणकं परमक्षरमात्मतयाऽऽश्रय भोः ॥ ३४ ॥

असुबुद्धिशरीरगुणान् षडिमान् अविवेकिजनैर्दृशिधर्मतया।
प्रतिपन्नतमान्प्रविहाय शनैर्दृशिमात्रमवेहि सदाहमिति ॥ ३५ ॥

परिशुद्धविबुद्धविमुक्तदृशेरविवेकविवेकविवर्जनतः।
मम बन्धविमोक्षगुणौ भवतो न कदाचिदपीत्यवगच्छ भृशम् ॥ ३६ ॥

गगने विमले जलदादिमले सति वाऽसति वा न भिदाऽस्ति यथा।
त्वयि सर्वगते परिशुद्धदृशौ न भिदाऽस्ति तथा द्वयभेदकृता ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहुनाऽभिहितेन किमु क्रियते शृणु संग्रहमत्र वदामि ततः ।
त्वयि जागरितप्रभृति त्रितयं परिकल्पितमित्यसदेव सदा ॥ ३८ ॥

परिकल्पितमित्यसदित्युदितं मन इत्यभिशब्दितमागमतः ।
उपपत्तिभिरेव च सिद्धमतो भवतोऽन्यदशेषमभूतमिति ॥ ३९ ॥

यदबाह्यमनन्तरमेकरसं यदकार्यमकारणमद्वयकम् ।
यदशेषविशेषविहीनतरं दृशिरूपमनन्तमृतं तदसि ॥ ४० ॥

इयदेव मयोपनिषत्सु पदं परमं विदितं न ततोऽस्त्यधिकम् ।
इति पिप्पलभक्ष इवाभ्यवदत् ह्यवशिष्टमतिं विनिवारयितुम् ॥ ४१ ॥

इतरोऽपि गुरुं प्रणिपत्य जगौ भगवन्निति तारितवानसि माम् ।
अवबोधतरेण समुद्रमिमं मृतिजन्मजलं सुखदुःखझषम् ॥ ४२ ॥

अधुनाऽस्मि सुनिर्वृत आत्मरतिः कृतकृत्य उपेक्षक एकमनाः ।
प्रहसन्विषयान्मृगतोयसमान् विचरामि महीं भवता सहितः ॥ ४३ ॥

तव दास्यमहं भृशमामरणात्प्रतिपद्य शरीरधृतिं भगवन् ।
करवाणि मया शकनीयमिदं तव कर्तुमतोऽन्यदशक्यमिति ॥ ४४ ॥

येषां धीसूर्यदीप्त्या प्रतिहतमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसन्तानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताः शिष्यसंघाः
सद्यो मुक्ताः स्थितास्तान्यतिवरमहितान्यावदायुर्नमामि ॥ ४५ ॥

भूः पादौ यस्य खं चोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ "

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पद्यजातमुदारार्थमद्वैतप्रतिपादकम् ।
तोटकाख्यमभूत्तस्मात् तोटकाख्यो बभूव सः ॥ ४७ ॥

अद्यापि तत्प्रकरणं प्रथितं पृथिव्यां तत्संज्ञया लघु महार्थमनल्पनीति ।
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं वेदान्तवेद्यपरतत्त्वनिवेदनं तत् ॥ ४८ ॥

भगन्दरव्याधिप्रतीकारः ।

भगन्दरव्याधिनिपीडितं गुरुं निरीक्ष्य शिष्याः समबोधयन् शनैः ।
नोपेक्षणीयो भगवन्महामयः संपीडयन् शत्रुरिवर्द्धिमाप्नुयात् ॥ ४९ ॥

चिकित्सका व्याधिनिदानकोविदाः संपृच्छनीया भगवन्नितस्ततः ।
स्वस्थे भवत्पादसरोरुहद्वये स्वस्था वयं ते मधुपायिवृत्तयः ॥ ५० ॥

निर्बन्धतो गुरुवरः प्रददावनुज्ञां
दिग्भ्यो भिषग्वरसमानयनाय तेभ्यः ।
नत्वा गुरुं प्रतिदिशं प्रययुः प्रहृष्टाः
शिष्याः प्रवासकुशला गुरुभक्तिभाजः ॥ ५१ ॥

बहुदिनैर्बहुदेशसमागतान् सबहुमानमिदं मुनिरब्रवीत् ।
कुशलता भवतामपि वर्तते गृहकलत्रसुतादिषु संप्रति ॥ ५२ ॥

उपगुदं भिषजः परिबाधते गद उदेत्य तनुं तनुमध्यगः ।
यदिदमस्य विधेयमिदं ध्रुवं गदत रोगतमस्तिमिरारयः ॥ ५३ ॥

चिरमुपेक्षितवानहमेतकं दुरितजोऽयमिति प्रतिभाति मे ।
निगदिते मुनिनेति भिषग्वराः विदधिरे बहुधा गदसत्क्रियाः ॥ ५४ ॥

न च शशाम गदो बहुतापदो विमनसः पटवो भिषजोऽभवन् ।
न दहनं विरहय्य मुनेर्गदं शमयितुं प्रभवन्ति भिषग्जनाः ॥ ५५ ॥

अनुचितं यमिनां दहनक्रियेत्यपथमीति मनो भिषजामभूत् ।
अथ निवेद्य गते भिषजां गणे हृदयगौ विदधे मुनिरश्विनौ ॥ ५६ ॥

२५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विजतनुं प्रविधाय भिषग्वरौ मनुजलोकमुपेयतुरश्विनौ ।
मुनिवरोऽप्यवलोक्य तुतोष तौ नयनमानसहारिवपुर्धरौ ॥ ५७ ॥

दृढसुधामयदोर्युगलेन तौ गदमुदीक्ष्य समस्पृशतां शनैः ।
समभवन्मुनिरेष निरामयः स्वभवनं ययतुः सुखमश्विनौ ॥ ५८ ॥

**सुरेश्वरेण वार्तिकप्रणयनम्, पद्मपादेन पञ्चपादिकाप्रणयनं च ।**

ततः कदाचित्प्रणिपत्य भक्त्या सुरेश्वरो देशिकमात्मनिष्ठम् ।
शारीरकेऽत्यन्तगभीरभावे दत्तोपदेशं प्रणमन् जगाद ॥ ५९ ॥

मम यत्करणीयमस्ति ते त्वमिमं मामनुशाध्यसंशयम् ।
तदिदं पुरुषस्य जीवितं यदयं जीवति भक्तिमान्गुरौ ॥ ६० ॥

इतीरिते शिष्यवरेण शिष्यं प्रोचे गरीयानतिहृष्टचेताः ।
मत्कस्य भाष्यस्य विधेयमिष्टं निबन्धनं वार्तिकनामधेयम् ॥ ६१ ॥

दृष्टं सतर्कं भवदीयभाष्यं गभीरवाक्यं न ममास्ति शक्तिः ।
तथाऽपि भावत्ककटाक्षपातैर्यते यथाशक्ति निबन्धनाय ॥ ६२ ॥

अस्त्वेवमित्यार्यपदाभ्यनुज्ञां आदाय मूर्ध्ना स विनिर्जगाम ।
अथागमन् शिष्यगणास्तदीया दृष्ट्वा गुरुं तं क्रमशः प्रणेमुः ॥ ६३ ॥

कर्मैकतानमतिरेष कथं गुरो ते विश्वासपात्रमगमत्स सुरेश्वरोऽद्य ।
भाष्यस्य पद्मपद एव करोतु टीकामित्यूचिरे रहसि योगिवरं विधेयाः ॥

आसादितोऽयं महतः प्रयत्नात् स चेन्न रोचेत न वीक्ष्यतेऽन्यः ।
अहं बहूनामनभीष्टकार्यं न कारयिष्ये हि महानिबन्धम् ॥ ६५ ॥

सनन्दनो नन्दयिता जनानां निबन्धमेकं विदधातु भाष्ये ।
न वार्तिकं तत्त परप्रतिज्ञं व्यधात्प्रतिज्ञां स हि नूत्नदीक्षः ॥ ६६ ॥

आदिश्यत्थं शिष्यसंघं यतीन्द्रः प्रोवाचेत्थं नूत्नभिक्षुं रहस्तम् ।
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं नेमं शिष्याः सेहिरे दुर्विदग्धाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वातन्त्र्यात्त्वं ग्रन्थमेकं महात्मन् कृत्वा मह्यं दर्शयाध्यात्मनिष्ठम् ।
विद्वन्यद्वत्प्रत्ययः स्यादमीषां शिष्याणां नो ग्रन्थसन्दर्शनेन ॥ ६८ ॥

इत्थं प्रोक्तः सोऽल्पकालेन भिक्षुः ग्रन्थं कृत्वा दर्शयामास तस्मै ।
ग्रन्थं दृष्ट्वा मोदमानो यतीन्द्रः तं चान्येभ्यो दर्शयामास हृद्यम् ॥

यत्राद्यापि श्रूयते मस्करीन्द्रैः निष्कामात्मा यत्र नैष्कर्म्यसिद्धिः ।
तन्नाम्नाऽयं पप्रथे ग्रन्थवर्यः तन्माहात्म्यात्सर्वलोकाद्दतोऽभूत् ॥ ७० ॥

भूयो गुरुस्तमवदन्मम याजुषीया शाखा तदन्तगतभाष्यनिबन्ध इष्टः ।*
तद्वार्तिकं मम कृते भवता प्रणेयं सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥

तद्वत् त्वदीया किल काण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ॥ ७२ ॥

इत्थं स उक्तो भगवत्पदेन सुरेश्वरोऽसौ विदुषां वरिष्ठः ।
चकार भाष्यद्वयवार्तिके द्वे ह्याज्ञा गुरूणामविचारणीया ॥ ७३ ॥

सनन्दनश्चाथ गुरोरनुज्ञया भाष्यस्य टीकां व्यधितेरितः पराम् ।
यत्पूर्वभागः किल पञ्चपादिका तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ७४ ॥

अथाब्जपात्कर्तुमनाः स तीर्थयात्रामयाचिष्ट गुरोरनुज्ञाम् ।
स तीर्थसेवां मनसः प्रसादिनीं मत्वा गुरुश्चाप्यददादनुज्ञाम् ॥ ७५ ॥

आट क्षितिं बहुविधां प्रयतान्तरात्मा तीर्थेषु तीर्थकवरो व्रजितो न्यमांक्षीत् ।
श्रीकालहस्तिपपदं पुनराव्रजत्स काञ्चीपुरं पुरवरं त्वथ पुण्डरीकम् ॥

रामसेतुगमनाय सन्दधे मानसं मुनिरनुत्तमः पुनः ।
वर्त्मनि प्रयतमानसो व्रजन् सन्ददर्श सरितं कवेरजाम् ॥ ७७ ॥

कवेरकन्यासलिलाभिषिक्तः श्रीरङ्गनाथस्य पदारविन्दे ।
आनर्च नम्रो विनयी ततोऽगात् श्रीजम्बुकेशं जगदेकनाथम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवीं दृष्ट्वा मार्गमध्याभियातं गेहं भिक्षुर्मातुलस्याजगाम ।
मोदं प्रापन्मातुलः शास्त्रवेदी भिक्षां चक्रे मातुलस्यैव गेहे ॥ ७९ ॥

पप्रच्छैनं मातुलो भुक्तवन्तं किंस्विच्छन्नं पुस्तकं साधु हस्ते ।
टीका विद्वन्भाष्यगेति ब्रुवाणस्तं देहीति प्रोचुषेऽदत्त तां च ॥ ८० ॥

प्रबन्धनिर्माणविचित्रनैपुणीं दृष्ट्वा प्रमोदं स विवेद किञ्चित् ।
मतान्तराणां किल युक्तिजालैः निरुत्तरं बन्धनमाल्लोके ॥ ८१ ॥

गुरोर्मतं स्वाभिमतं विशेषात् निराकृतं तत्र समत्सरोऽभूत् ।
साधुर्निबन्धोऽयमिति ब्रुवाणः तं साभ्यसूयं स कृताभिनन्दनः ॥

गच्छामि सेतुं त्वयि पुस्तभारं निक्षिप्य जीवो मम वर्ततेऽत्र ।
यथेतरेषां पशुगोहिरण्ये प्रीतिस्तथा नः खलु पुस्तकेषु ॥ ८३ ॥

स पद्मपादीं च गृहे प्रयास्यन् शिष्टां निचिक्षेप तमेवमुक्त्वा ।
प्रतिष्ठमानस्य बभूव कष्टं निमित्तमेष्यत्फलसूचनाय ॥ ८४ ॥

अस्पन्दतास्य नयनं किल वाममीषत्
पुस्फोर बाहुरपि वामगतस्तथोरुः ।
चुक्षाव नाऽस्य पुरतः क्वचिदस्खलीच्च
सर्वं ययौ न गणयन्गुरुरस्मदीयः ॥ ८५ ॥

गतेऽत्र मेने किल मातुलोऽस्य ग्रन्थे स्थितेऽस्मिन् गुरुपक्षहानिः ।
दग्धेऽत्र जायेत महापवादो नोक्त्या निराकर्तुमपि प्रभुत्वम् ॥ ८६ ॥

पक्षस्य नाशाद् गृहनाश एव नो वरं गृहेणैव दहामि पुस्तकान् ।
एवं निरूप्य न्यदधाद्धुताशनं चुक्रोश चाग्निर्दहतीति मे गृहान् ॥

सेतुं दृष्ट्वा पुण्यतीर्थं स योगी पश्यन्देशान् मातुलीयं जगाम ।
गेहं दग्धं तस्य पुस्तेन सार्धं श्रुत्वाऽनल्पं खेदमापेदिवान् सः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वस्य मां निहितवानसि पुस्तभारं
तच्चादहद् हुतवहः परितः प्रमादात् ।
तावान्न मे सदनदाहकृतोऽनुतापो
यावांस्तु पुस्तकविनाशकृतो मम स्यात् ॥ ८९ ॥

इत्थं ब्रुवन्तं तमथाभ्यभाणीत् पुस्तं गतं बुद्धिरवस्थिता मे ।
उक्त्वा समारब्ध पुनश्च टीकां कर्तुं स धीरो यतिबृन्दवन्द्यः ॥ ९० ॥

दृष्ट्वा बुद्धिं मातुलस्तस्य भूयो भीतः प्रास्यद्भोजने तन्मतिघ्नम् ।
किञ्चिद्द्रव्यं यद्वशान्नोऽक्षमिष्ट टीकां कर्तुं पूर्ववत्पद्मपादः* ॥ ९१ ॥

इत्थं स तीर्थनिकरं परिषेव्य दीनो द्रष्टुं ययौ स्वगुरुमेव पुनस्स तस्मै ।
देशाय यत्र वसति स्म स देशिकेन्द्रः तस्मै नमो व्यधित वृत्तमथोऽभ्यधत्त ॥

अतिदीनमनाः शनैरवादीत् करुणं गद्गदवाक् स पद्मपादः ।
अधुना धिषणा यथापुरं नो विधुनाना विशयं प्रसादमेति ॥ ९३ ॥

प्रयतेऽहं पुनरेव यदा तां प्रविधातुं बहुधा कृतयत्नः ।
न यथापूर्वमुपक्रमते ताः पटुयुक्तीः भगवन्मम बुद्धिः ॥ ९४ ॥

इति वादिनमेनमार्यपादो वचनैः सान्त्वयति स्म वल्गुबन्धैः ।
विषमो बत कर्मणां विपाको विषमोहोपमदुर्निवार एषः ॥ ९५ ॥

पूर्वं भक्त्या यत्त्वया मत्समीपे प्रेम्णा याऽसौ वाचिता पञ्चपादी ।
सा मे चित्तान्नापयात्यद्य शोको याताच्छीघ्रं तां लिखेत्याख्यदार्यः ॥

प्रसभं स विलिख्य पञ्चपादीं परमानन्दभरेण पद्मपादः ।
उदतिष्ठदतिष्ठदभ्यरोदीत् पुनरुद्गायति तु स्म नृत्यति स्म ॥ ९७ ॥

ततः सुब्रह्मण्याद्यगरनिलयेषु प्रविचरन्
ततः स्वैरं हर्षादपि जनपदान् तौलवमुखान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पवित्रीकुर्वाणः परशिव इवाशेषविनुतो
मतिश्रीसाम्राज्ये व्यजयत महान् शङ्करगुरुः ॥ ९८ ॥

**शृङ्गगिरौ वासः शारदाप्रतिष्ठा शिष्याध्यापनं च ।**

गोकर्णयात्रां स विधाय योगी सह्याद्रिमासाद्य सवेदपादम् ।
वराहदंष्ट्रोद्भवतुङ्गभद्रामूले व्यधादाह्निकमादरेण ॥ ९९ ॥

विभण्डकस्याश्रममाप्य तुङ्गभद्रातटेऽपश्यदयं विचित्रम् ।
प्रसार्य भोगं भुवि रक्ष्यमाणं तच्छायया भोगिवरेण भेकम् ॥ १०० ॥

निर्वैरसत्वं कलयन्स्थलं तत् चित्ते चकारात्मनिवासयोग्यम् ।
श्रीतुङ्गभद्रातटरम्यभागे वाण्यालयारम्भकृतोद्यमोऽभूत् ॥ १०१ ॥

श्रीमच्छङ्करदेशिको मुनिवरः श्रीब्रह्मविद्यात्मिकां
श्रीचक्रोपरि भावयन् भगवतीं श्रीशारदामम्बिकाम् ।
तां संस्थाप्य च मन्दिरेऽतिमहिते शृङ्गाचलस्थेऽर्चयन्
स्वान्तेवासिवरं सुरेशमपि तत्पूजार्थमाजिज्ञपत् ॥ १०२ ॥

सविधे निवसन्नेव शरदः सौख्यवीवहत् ।
शारदाराधनानन्दतुन्दिलोऽस्तौत्स मातरम् ॥ १०३ ॥

सुवक्षोजकुम्भां सुधापूर्णकुम्भां प्रसादावलम्बां प्रपुण्यावलम्बाम् ।
सदास्येन्दुबिम्बां सदानोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम् ॥

कटाक्षे दयार्द्रां करेज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम् ।
पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम् ॥

कलामाङ्कफालां लसद्गानलोलां स्वभक्तैकपालां यशःश्रीकपोलाम् ।
करे त्वक्षमालां कनत्प्रत्नलोलां भजे शारदाम्बामजस्रं मदम्बाम् ॥

सुसीमन्तवेणीं दृशा निर्जितैणीं रमत्कीरवाणीं नमद्वज्रपाणीम् ।
सुधामन्थरास्यां मुदाचिन्त्यवेणीं भजे शारदाम्बामजस्रं मदम्बाम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुशान्तां सुदेहां दृगन्ते कचान्तां लसत्सल्लताङ्गीमनन्तामचिन्त्याम् ।
स्मृतां तापसैः सर्गपूर्वस्थितां तां भजे शारदाम्बामजस्रं मदम्बाम् ॥

कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे मराले मदेभे महोक्षेऽधिरूढाम् ।
महत्यां नवम्यां सदा सामरूपां भजे शारदाम्बामजस्रं मदम्बाम् ॥

ज्वलत्कान्तिभङ्गीं जगन्मोहनाङ्गीं भजन्मानसांभोजसुभ्रान्तभृङ्गीम् ।
निजस्तोत्रसङ्गीतनृत्यप्रभङ्गीं भजे शारदाम्बामजस्रं मदम्बाम् ॥ ११० ॥

भवाम्भोजनेत्राजसंपूज्यमानां लसन्मन्दहासप्रभावक्त्रचिह्नाम् ।
चलच्चञ्चलाचारुताटङ्ककर्णां भजे शारदाम्बामजस्रं मदम्बाम् ॥ १११ ॥

वाग्देव्याः सविधे श्रीमद्गोपुराट्टालशोभितम् ।
श्रीमठं तत्र निर्माय विद्यापीठमचीक्लृपत् ॥ ११२ ॥

अध्यापयामास स भाष्यमुख्यानाकर्णनप्राप्यमहापुमर्थान् ।
ग्रन्थान्निजांस्तत्र मनीषिमुख्यान् आदिष्टविद्याग्रहणे समर्थान् ॥ ११३ ॥

शिष्यैश्चतुर्भिः सह तत्र विद्याभ्याससङ्गशीलः स चिरं न्यवात्सीत् ।
विलोक्य यस्यास्य सभां जनौघो जगाद पञ्चास्यसभां भुवीति ॥

आशैलादुदयात्तथास्तगिरितो भास्वद्यशोराशिभिः
व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आराद् ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्करः
तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्यात्सदा ॥ ११५ ॥

नमाम्यभागिभाविवारसादं निरस्तमूलिमनुमानविग्रहम् ।
अनुग्रसुन्मुदितकालकालं ऽचन विनाविनाककमूर्धशङ्करम् ॥ ११६ ॥

यद्वक्त्रमानससरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दरसं पिबन्ति ।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गाः तान् भाष्यवित्तकगुरून् प्रणमामि मूर्ध्ना ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीत् गुरुगुरुः पूज्याय तस्मै नमः ॥ ११८ ॥

न स्तौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध ।
विनापि तैः संग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरञ्च ॥ ११९ ॥

कामं यस्तु समूलघातमवधीत् स्वर्गापवर्गापहं
रोषं यः खलु चूर्णपेषमपिषान्निश्शेषशोषावहम् ।
लोभादीनपि यः परान् कुलसमुच्छेदं समुच्चिच्छिदे
स्वस्यान्तेवसतां सतां स भगवत्पादः कथं वर्ण्यते ॥ १२० ॥

इति श्रीशङ्करविजयमकरन्दे एकविंश आस्वादः समाप्तः ॥

## ॥ द्वाविंश आस्वादः ॥

### भगवत्पादानामुपदेशः

भगवत्पादसंभूतामात्मांभोनिधिगामिनीम् ।
भाष्यभागीरथीं भूयो भजामो भवशान्तये ॥ १ ॥

उपदिष्टं स्वशिष्येभ्यः आचार्यैस्तत्र तत्र यत् ।
संकल्यते शास्त्रतत्त्वं तेषामेवात्र सूक्तिभिः ॥ २ ॥

---

सङ्कलने मूलम् — श्रीभाष्यस्वामिनां १ स्वात्मनिरूपणतः ३, सर्ववेदान्तसिद्धान्तसारसंग्रहतः ४-६, १२-१६, २०-२४ २७-३५ ३७-४९, ५२-९२, ९४-१००. सनत्सुजातीयभाष्यतः ७-९. विवेकचूडामणितः १०-११, १८, ३६, ५०-५१, ९३, १०१. अपरोक्षानुभूतितः १७, १९, प्रबोधसुधाकरतः २५-२६.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आस्ते दैशिकचरणं निरवधिरास्ते तदीक्षणे करुणा ।
आस्ते किमपि तदुक्तं किमतः परमस्ति जन्मसाफल्यम् ॥ ३ ॥

"अखण्डानन्दसंबोधो वन्दनाद्यस्य जायते ।
गोविन्दं तमहं वन्दे चिदानन्दतनुं गुरुम् ॥ ४ ॥

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ ५ ॥

यदालम्बो दरं हन्ति सतां प्रत्यूहसंभवम् ।
तदालम्बे दयालम्बं लम्बोदरपदाम्बुजम् ॥ ६ ॥

नमः पुंसे पुराणाय पूर्णानन्दाय विष्णवे ।
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ॥ ७ ॥

नम आचार्येभ्यो ब्रह्मविद्यासंप्रायकर्तृभ्यः ॥ ८ ॥

## वेदान्तमर्यादा ।

स्वतः चित्सदानन्दाद्वितीयब्रह्मरूपोऽपि आत्मा, स्वाश्रयया स्वविषयया अविद्यया स्वानुभवगम्यया साभासया स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मभावात्प्रच्युतः, अनात्मनि देहादौ आत्मभावमापन्नः, अप्राप्ताशेषपुरुषार्थः, प्राप्ताशेषानर्थः, अविद्याकर्मपरिकल्पितैरेव साधनैः इष्टप्राप्तिं अनिष्टपरिहृतिं चाकांक्षन्, लौकिकवैदिकसाधनैः अनुष्ठितैरपि परमपुरुषार्थं मोक्षाख्यमलभमानः, मकरादिभिरिव रागद्वेषादिभिरितस्ततः आकृष्यमाणः सुरनरतिर्यगादिप्रभेदभिन्नासु नानायोनिषु परिवर्तमानो मुह्यमानः, संसरन्, कथंचित् पुण्यवशात् वेदादितेन ईश्वरार्थकर्मानुष्ठानेनापगतरागादिमलः अनित्यतादिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागः, वेदान्तेभ्यः प्रतीयमानं ब्रह्मात्मभावं बुभुत्सुः, वेदोदितशमदमादिसाधनसंपन्नः, ब्रह्म-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदमाचार्यमुपेत्य, आचार्यानुसारेण वेदान्तश्रवणादिना अहं ब्रह्मास्मीति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्यः ब्रह्मरूपेणावतिष्ठत इतीयं वेदान्तानां मर्यादा ॥ ९ ॥

अनुबन्धचतुष्टयम्

विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥ १० ॥

मेधावी पुरुषो विद्वान् उहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥ ११ ॥

विषयः शुद्धचैतन्यं जीवब्रह्मैक्यलक्षणम् ।
यत्रैव दृश्यते सर्ववेदान्तानां समन्वयः ॥ १२ ॥

एतदैक्यप्रमेयस्य प्रमाणस्यापि च श्रुतेः ।
संबन्धः कथ्यते सद्भिर्बोध्यबोधकलक्षणः ॥ १३ ॥

ब्रह्मात्मैकत्वविज्ञानं सन्तः प्राहुः प्रयोजनम् ।
येन निश्शेषसंसारबन्धात् सद्यः प्रमुच्यते ॥ १४ ॥

प्रयोजनं तत्प्रवृत्तेः कारणं फललक्षणम् ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥ १५ ॥

साधनचतुष्टयम् ।

चत्वारि साधनान्यत्र वदन्ति परमर्षयः ।
मुक्तिर्येषां तु सद्भावे नाभावे सिध्यति ध्रुवम् ॥ १६ ॥

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ।
साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ १७ ॥

आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इहामुत्रफलभोगविरागस्तदनन्तरम् ।
शमादिषट्कसंपत्तिः मुमुक्षुत्वमिति स्फुटम् ॥ १८ ॥

नित्यानित्यवस्तुविवेकः ।

नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् ।
एवं यो निश्चयः सम्यक् विवेको वस्तुनः स वै । १९ ॥

मृदादि कारणं नित्यं त्रिषु कालेषु दर्शनात् ।
घटाद्यनित्यं तत्कार्यं यतस्तन्नाश इष्यते ॥ २० ॥

तथैवैतज्जगत्सर्वमनित्यं ब्रह्मकार्यतः ।
तत्कारणं परं ब्रह्म भवेन्नित्यं मृदादिवत् ॥ २१ ॥

सर्गं वक्त्यस्य तस्माद्वा एतस्मादित्यपि श्रुतिः ।
सकाशाद्ब्रह्मणस्तस्मादनित्यत्वे न संशयः ॥ २२ ॥

अनित्यत्वं च नित्यत्वं एवं यच्छ्रुतियुक्तिभिः ।
विवेचनं नित्यानित्यविवेक इति कथ्यते ॥ २३ ॥

वैराग्यम्

ऐहिकामुष्मिकार्थेषु ह्यनित्यत्वेन निश्चयात् ।
नैःस्पृह्यं तुच्छबुद्ध्या यत्तद्वैराग्यमितीर्यते ॥ २४ ॥

नित्यानित्यपदार्थविवेकात् पुरुषस्य जायते सद्यः ।
स्रक्चन्दनवनितादौ सर्वत्रानित्यवस्तुनि विरक्तिः ॥ २५ ॥

सा चाहंममताभ्यां प्रच्छन्ना सर्वदेहेषु ।
तत्राहन्ता देहे ममता भार्यादिविषयेषु ॥ २६ ॥

देहः किमात्मकोऽयं कः संबन्धोऽस्य वा विषयैः ।
एवं विचार्यमाणेऽहन्ताममते निवर्तेते ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवेक्ष्य विषये दोषं बुद्धियुक्तो विचक्षणः ।
कामपाशेन यो मुक्तः स मुक्तेः पथि गोचरः ॥ २८ ॥

कामस्य विजयोपायं सूक्ष्मं वक्ष्याम्यहं सताम् ।
संकल्पस्य परित्याग उपायः सुलभो मतः ॥ २९ ॥

श्रुते दृष्टेऽपि वा भोग्ये यस्मिन्कस्मिंश्च वस्तुनि ।
समीचीनत्वधीत्यागात् कामो नोदेति कर्हिचित् ॥ ३० ॥

कामस्य बीजं सङ्कल्पः सङ्कल्पादेव जायते ।
बीजे नष्टेऽङ्कुर इव तस्मिन्नष्टे विनश्यति ॥ ३१ ॥

भोग्ये नरः कामजयेच्छुरेतां सुखत्वबुद्धिं विषये निहन्यात् ।
यावत्सुखत्वभ्रमधीः पदार्थे तावन्न जेतुं प्रभवेद्धि कामम् ॥

सङ्कल्पानुदये हेतुर्यथाभूतार्थदर्शनम् ।
अनर्थचिन्तनं चाभ्यां नावकाशोऽस्य विद्यते ॥ ३३ ॥

रत्ने यदि शिलाबुद्धिर्जायते वा भयं ततः ।
समीचीनत्वधीर्नैति नोपादेयत्वधीरपि ॥ ३४ ॥

यथार्थदर्शनं वस्तुन्यनर्थस्यापि चिन्तनम् ।
सङ्कल्पस्यापि कामस्य तद्वधोपाय इष्यते ॥ ३५ ॥

शमादिषट्कम् ।

शमो दमस्तितिक्षोपरतिः श्रद्धा ततः परम् ।
समाधानमिति प्रोक्तं षडेवैते शमादयः ॥ ३६ ॥

विरज्य विषयव्रातात् दोषदृष्ट्या मुहुर्मुहुः ।
स्वलक्ष्ये नियतावस्था मनसः शम इष्यते ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृश्यविकारं परित्यज्य वस्तुमात्रतया स्थितिः ।
मनसः सोत्तमा शान्तिर्ब्रह्मनिर्वाणलक्षणा ॥ ३८ ॥

प्रत्यक्प्रत्ययसन्तानप्रवाहकरणं धियः ।
यदेषा मध्यमा शान्तिः शुद्धसत्त्वैकलक्षणा ॥ ३९ ॥

विषयव्यापृतिं त्यक्त्वा श्रवणैकमनस्थितिः ।
मनसश्चेतरा शान्तिर्मिश्रसत्त्वैकलक्षणा ॥ ४० ॥

कामः क्रोधश्च लोभश्च मदो मोहश्च मत्सरः ।
न जिताः षडिमे येन तस्य शान्तिर्न सिध्यति ॥ ४१ ॥

येन नाराधितो देवो यस्य नो गुर्वनुग्रहः ।
न वश्यं हृदयं यस्य तस्य शान्तिर्न सिध्यति ॥ ४२ ॥

ब्रह्मचर्यमहिंसा च दया भूतेष्ववक्रता ।
विषयेष्वतिवैतृष्ण्यं शौचं दम्भविवर्जनम् ॥ ४३ ॥

सत्यं निर्ममता स्थैर्यमभिमानविसर्जनम् ।
ईश्वरध्यानपरता ब्रह्मविद्भिः सह स्थितिः ॥ ४४ ॥

ज्ञानशास्त्रैकपरता समता सुखदुःखयोः ।
मानानासक्तिरेकान्तशीलता च मुमुक्षुता ।
यस्यैतद्विद्यते सर्वं तस्य चित्तं प्रसीदति ॥ ४५ ॥

ब्रह्मचर्यादिभिर्धर्मैः बुद्धेर्दोषनिवृत्तये ।
दण्डनं दम इत्याहुः दमशब्दार्थकोविदाः ॥ ४६ ॥

तत्तद्वृत्तिनिरोधेन बाह्येन्द्रियविनिग्रहः ।
योगिनो दम इत्याहुर्मनसः शान्तिसाधनम् ॥ ४७ ॥

इन्द्रियेष्विन्द्रियार्थेषु प्रवृत्तेषु यदृच्छया ।
अनुधावति तान्येव मनो वायुमिवानलः ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रियेषु निरुद्धेषु त्यक्त्वा वेगं मनः स्वयम् ।
सत्त्वभावमुपादत्ते प्रसादस्तेन जायते ॥ ४९ ॥

आध्यात्मिकादि यद्दुःखं प्राप्तं प्रारब्धवेगतः ।
अचिन्तया तत्सहनं तितिक्षेति निगद्यते ॥ ५० ॥

सहनं सर्वदुःखानां अप्रतीकारपूर्वकम् ।
चिन्ताविलापरहितं सा तितिक्षा निगद्यते ।
बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा ॥ ५१ ॥

साधनत्वेन दृष्टानां सर्वेषामपि कारणम् ।
विधिना यः परित्यागः स संन्यासः सतां मतः ॥ ५२ ॥

उपरमयति कर्माणीत्युपरतिशब्देन कथ्यते न्यासः ।
न्यासेन हि सर्वेषां श्रुत्या प्रोक्तो विकर्मणां त्यागः ॥

कर्मणा साध्यमानस्यानित्यत्वं श्रूयते यतः ।
कर्मणानेन किं नित्यफलेप्सोः परमार्थिनः ॥ ५४ ॥

उत्पाद्यमाप्यं संस्कार्यं विकार्यं परिगण्यते ।
चतुर्विधं कर्मसाध्यं फलं नान्यदितः परम् ॥ ५५ ॥

नैतदन्यतरं ब्रह्म कदा भवितुमर्हति ।
स्वतः सिद्धं सर्वदाप्तं शुद्धं निर्मलमक्रियम् ॥ ५६ ॥

न चास्य कश्चिज्जनितेत्यागमेन निषिध्यते ।
कारणं ब्रह्मणस्तस्माद्ब्रह्म नोत्पाद्यमिष्यते ॥ ५७ ॥

आप्त्राप्ययोस्तु भेदश्चेदाप्त्रा चाप्यमवाप्यते ।
आप्तृस्वरूपमेवैतद्ब्रह्म नाप्यं कदाचन ॥ ५८ ॥

मलिनस्यैव संस्कारो दर्पणादेरिहेष्यते ।
व्योमवन्नित्यशुद्धस्य ब्रह्मणो नैव संस्क्रिया ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केन दुष्टेन युज्येत वस्तु निर्मलमक्रियम् ।
यद्योगादागतं दोषं संस्कारो विनिवर्तयेत् ॥ ६० ॥

निर्गुणस्य गुणाधानमपि नैवोपपद्यते ।
केवलो निर्गुणश्चेति नैर्गुण्यं श्रूयते यतः ॥ ६१ ॥

सावयवस्य क्षीरादेः वस्तुनः परिणामिनः ।
येन केन विकारित्वं स्यान्नो निष्कर्मवस्तुनः ॥ ६२ ॥

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
इत्येव वस्तुनस्तत्त्वं श्रुतियुक्त्यव्यवस्थितम् ॥ ६३ ॥

देहादिः क्षीयते लोको यथैवं कर्मणा चितः ।
तथैवामुष्मिको लोकः सञ्चितः पुण्यकर्मणा ॥ ६४ ॥

कृतकत्वमनित्यत्वे हेतुर्जागर्ति सर्वदा ।
जगद्धेतोस्तु नित्यत्वं सर्वेषामपि संमतम् ॥ ६५ ॥

जगद्धेतुत्वमस्यैव वावदीति श्रुतिर्मुहुः ।
ऐतदात्म्यं इदं सर्वं तत्सत्यमिति च श्रुतिः । ६६ ॥

न कर्मणा न प्रजया धनेनेति स्वयं श्रुतिः ।
कर्मणो मोक्षहेतुत्वं साक्षादेव निषेधति ॥ ६७ ॥

ज्ञानादेव तु कैवल्यं इति श्रुत्या निगद्यते ।
ज्ञानस्य मुक्तिहेतुत्वमन्यव्यावृत्तिपूर्वकम् ॥ ६८ ॥

विवेकिनो विरक्तस्य ब्रह्मनित्यत्ववेदिनः ।
तद्भावेच्छोरनित्यार्थे तत्सामग्र्ये कुतो रतिः ॥ ६९ ॥

तस्मादनित्ये स्वर्गादौ साधनत्वेन चोदितम् ।
नित्यं नैमित्तिकं चापि सर्वं कर्म ससाधनम् ।
मुमुक्षुणा परित्याज्यं ब्रह्मभावमभीप्सुना ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपर्युपर्यहङ्कारो वर्धते कर्मणा भृशम् ।
अहंकारस्य विच्छित्तिः श्रवणेन प्रतिक्षणम् ॥ ७१ ॥

प्रवर्तकं कर्मशास्त्रं ज्ञानशास्त्रं निवर्तकम् ।
ऊर्ध्वं नयति विज्ञानमधः प्रापयति क्रिया ॥ ७२ ॥

कथमन्योन्यसापेक्षा कथं वाऽपि समुच्चयः ।
यथाऽग्नेस्तृणकूटस्य तेजसस्तिमिरस्य च ।
सहयोगो न घटते तथैव ज्ञानकर्मणोः ॥ ७३ ॥

कर्त्रा कर्तुमकर्तुं वाऽप्यन्यथा कर्म शक्यते ।
न तथा वस्तुनो ज्ञानं कर्तृतन्त्रं कदाचन ॥ ७४ ॥

यथा वस्तु तथा ज्ञानं प्रमाणेन विजायते ।
नापेक्षते च यत्किञ्चित् कर्म वा युक्तिकौशलम् ॥ ७५ ॥

वस्तु तावत्परं ब्रह्म नित्यं सत्यं ध्रुवं विभु ।
श्रुतिप्रमाणे तज्ज्ञानं स्यादेव निरपेक्षकम् ॥ ७६ ॥

रूपज्ञानं यथा सम्यग्दृष्टौ सत्यां भवेत्तथा ।
श्रुतिप्रमाणे सत्येव ज्ञानं भवति वास्तवम् ॥ ७७ ॥

प्रवृत्तिश्च निवृत्तिश्च द्वे एते श्रुतिगोचरे ।
प्रवृत्त्या बध्यते जन्तुर्निवृत्त्या तु विमुच्यते ॥ ७८ ॥

यत्र स्वबन्धोऽभिमतो मूढस्यापि क्वचित्ततः ।
निवृत्तिः कर्मसंन्यासः कर्तव्यो मोक्षकांक्षिभिः ॥ ७९ ॥

उपरतिशब्दार्थो ह्युपरमणं पूर्वदृष्टवृत्तिभ्यः ।
सोऽयं मुख्यो गौणश्चेति च वृत्त्या द्विरूपतां धत्ते ॥ ८० ॥

दृश्यदृश्यपरित्यागो मुख्यार्थ इति कथ्यते ।
गौणार्थः कर्मसन्न्यासः श्रुतेरङ्गतया मतः ॥ ८१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुंसः प्रधानसिद्ध्यर्थं अंगद्वयाश्रयणं मतम् ।
कर्तव्यमङ्गहीनं चेत्प्रधानं नैव सिध्यति ॥ ८२ ॥

सन्न्यस्येन्मुमुक्षुर्विरक्तः सन् इहामुत्रार्थतः सुखात् ।
अविरक्तस्य सन्न्यासो निष्फलोऽयाज्ययागवत् ॥ ८३ ॥

गुरुवेदान्तवाक्येषु बुद्धिर्या निश्चयात्मिका ।
सत्यमित्येव सा श्रद्धा निदानं मुक्तिसिद्धये ॥ ८४ ॥

अस्तीत्येवोपलब्धव्यं वस्तुसद्भावनिश्चयात् ।
सद्भावनिश्चयश्चास्य श्रद्धया शास्त्रसिद्धया ॥ ८५ ॥

यथार्थवादिता पुंसां श्रद्धाजननकारणम् ।
वेदस्येश्वरवाक्यत्वात् यथार्थत्वे न संशयः ॥ ८६ ॥

मुक्तस्येश्वररूपत्वात् गुरोर्वागपि तादृशी ।
तस्मात्तद्वाक्ययोः श्रद्धा सतां सिध्यति धीमताम् ॥ ८७ ॥

श्रुत्युक्तार्थावगाहाय विदुषा ज्ञेयवस्तुनि ।
चित्तस्य सम्यगाधानं समाधानमितीर्यते ॥ ८८ ॥

चित्तं च दृष्टिं करणं तथाऽन्यदेकत्र बध्नाति हि लक्ष्यभेत्ता ।
किञ्चित्प्रमादे सति लक्ष्यभेत्तुर्बाणप्रयोगो विफलो यथा ना ॥

अत्यन्ततीव्रवैराग्यं फललिप्सा महत्तरा ।
तदेतदुभयं विद्यात् समाधानस्य कारणम् ॥ ९० ॥

बहिरङ्गं श्रुतिः प्राह ब्रह्मचर्यादि मुक्तये ।
शमादिषट्कमेवैतत् अन्तरङ्गं विदुर्बुधाः ॥ ९१ ॥

अन्तरङ्गं हि बलवद् बहिरङ्गाद्यतस्ततः ।
शमादिषट्कं जिज्ञासोरवश्यं भाव्यमान्तरम् । ९२ ॥


-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुमुक्षा ।

अहङ्कारादिदेहान्तान् बन्धानज्ञानकल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥ ९३ ॥

तापैस्त्रिभिर्नित्यमनेकरूपैः सन्तप्यमानः क्षुभितान्तरात्मा ।
परिग्रहं सर्वमनर्थबुद्ध्या जहाति सा तीव्रतरा मुमुक्षा ॥ ९६ ॥

तापत्रयं तीव्रमवेक्ष्य वस्तु दृष्ट्वा कलत्रं तनयान् विहातुम् ।
मध्ये द्वयोर्लोडनमात्मनो यत्सैषा मता माध्यमिकी मुमुक्षा ॥

मोक्षस्य कालोऽस्ति किमद्य मे त्वरा भुक्त्वैव भोगान् कृतसर्वकार्यः ।
मुक्त्यै यतिष्येऽहमथेति बुद्धिरेषैव मन्दा कथिता मुमुक्षा ॥

मार्गे प्रयातुर्मणिलाभवन्मे लभेत मोक्षो यदि तर्हि धन्यः ।
इत्याशया मूढधियां मतिर्या सैषाऽतिमन्दाऽभिमता मुमुक्षा ॥

जन्मानेकसहस्रेषु तपसाऽऽराधितेश्वरः ।
तेन निश्शेषनिर्धूतहृदयस्थितकल्मषः ॥ ९८ ॥

शास्त्रविद्गुणदोषज्ञो भोग्यमात्रे विनिस्पृहः ।
नित्यानित्यपदार्थज्ञो मुक्तिकामो दृढव्रतः ॥ ९९ ॥

निष्टप्तमग्निना पात्रमुद्वास्य त्वरया यथा ।
जहाति गेहं तद्वच्च तीव्रमोक्षेच्छया द्विजः ।
स एव सद्यस्तरति संसृतिं गुर्वनुग्रहात् ॥ १०० ॥

सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।
गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ॥ १०१ ॥

इति श्रीशङ्करविजयमकरन्दे द्वाविंश आस्वादः संपूर्णः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ त्रयोविंश आस्वादः ॥

### भगवत्पादानामुपदेशः (२)

### आत्मज्ञानम् ।

यस्मिन् ज्ञाते भवेत्सर्वं विज्ञातं परमात्मनि ।
तं वन्दे नित्यविज्ञानमानन्दमजमव्ययम् ॥ १ ॥

यदज्ञानादभूद्द्वैतं ज्ञाते यस्मिन्निवर्तते ।
रज्जुसर्पवदत्यन्तं तं वन्दे पुरुषोत्तमम् ॥ २ ॥

यस्योपदेशदीधित्या चिदात्मा नः प्रकाशते ।
नमः सद्गुरवे तस्मै स्वाविद्याध्वान्तभानवे ॥ ३ ॥

इह हि सर्वस्य जन्तोः सुखं मे भूयात्, दुःखं मे मा भूयात्, इति स्वरसत एव सुखोपादित्सा-दुःखजिहासे भवतः। तत्र यः कश्चित्पुण्यातिशयशाली अवश्यंभाविदुःखाविनाभूतत्वात् अनित्यत्वाच्च विषयजं सुखं दुःखमेवेति ज्ञात्वा यत्नेन ससाधनात् संसारात् त्यक्ता-सक्तिरत्यन्तं विरज्यते। विरक्तश्च संसारहानौ यतते। संसारस्य च आत्मस्वरूपापरिज्ञानकृतत्वात्, आत्मज्ञानात् निवृत्तिरिति तं प्रति आत्मज्ञानमाचार्य उपदिशति ॥ ४ ॥

दृढगृहीता हि विद्या आत्मनः श्रेयसे सन्तत्यै च भवति। विद्यासन्ततिश्च प्राण्यनुग्रहाय भवति नौरिव नदीं तितीर्षोः। शिष्यस्य ज्ञानाग्रहणं च लिङ्गैः बुद्ध्वा, अग्रहणे हेतून् अधर्म-लौकिकप्रमाद-नित्यानित्यविवेकविषयासञ्जात – दृढपूर्वश्रुतत्व – लोकचिन्तावेक्षण –

---

सङ्कलने मूलम् – हस्तामलकीयभाष्यतः १-४, उपदेशसाहस्र्याः गद्यप्रबन्धतः ५-१९, विवेकचूडामणितः २०-२१, अपरोक्षानुभूतितः २२-३६ ५८, सर्ववेदान्तसिद्धान्तसारसंग्रहतः ३७-५७.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जात्याद्यभिमानादीन् तत्प्रतिपक्षैः श्रुतिस्मृतिविहितैः अपनयेत्, अक्रोधादिभिरहिंसादिभिश्च यमैः, ज्ञानाविरुद्धैश्च नियमैः। अमानित्वादिगुणं च ज्ञानोपायं सम्यक् ग्राहयेत् ॥ ५ ॥

आचार्यस्तूहापोहग्रहणधारणशमदमदयानुग्रहादिसंपन्नः केवलपरानुग्रहप्रयोजनः विद्योपयोगार्थां पूर्वमुपदिशेत्—'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' (छान्दो. ६-२-१) 'यत्र नान्यत्पश्यति (नान्यत् शृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यति अन्यत् शृणोति अन्यद्विजानाति, तदल्पं, यो वै भूमा तदमृतं, अथ यदल्पं तन्मर्त्यं' छा. ७-२४-१) 'आत्मैवेदं सर्वं' (छा. ७-२५-२) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत १-१-१) सर्वं खल्विदं ब्रह्म (छा. ३-१४-१) इत्याद्या आत्मैक्यप्रतिपादनपराः श्रुतीः। ६ ॥

उपदिश्य च ग्राहयेद्ब्रह्मणो लक्षणं—'य आत्माऽपहतपाप्मा (विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, छा. ८-७-१) यत् साक्षादपरोक्षाद्ब्रह्म (य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति, एष त आत्मा सर्वान्तरः, कतमो याज्ञवल्क्य सर्वान्तरः, यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः, योऽपानेनापानिति स त आत्मा सर्वान्तरः, यो व्यानेन व्यानिति स त आत्मा सर्वान्तरः, य उदानेनोदानिति स त आत्मा सर्वान्तरः, एष ते आत्मा सर्वान्तरः बृह. ३-४-१) 'योऽशनायापिपासे (शोकं मोहं जरां मृत्युमत्येति बृह. ३-५-१) 'नेति नेति' (न ह्येतस्मादिति नेत्यन्यत्परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्- बृह.

(६) भगवत्पादोक्तिषु पूरणीय उपनिषदाद्यंशः कुण्डलितः सस्थानसङ्केतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२-३-६) 'अस्थूलमनणु (अह्रस्वं अदीर्घं अलोहितं अस्नेहं अच्छायं अतमः अवायु अनाकाशं असंगं अरसं अगन्धं अचक्षुष्कं अश्रोत्रं अवाक् अमनः अतेजस्कं अप्राणं अमुखं अमात्रं अनन्तरं अबाह्यं न तदश्नाति किञ्चन, न तदश्नाति कश्चन बृह. ३-८-८) 'स एष नेति' (नेत्यात्मा अगृह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते, असङ्गो न हि सज्यते, असितो न व्यथते न रिष्यति—बृह. ३-९-२६) 'अदृष्टं द्रष्टृ' (अश्रुतं श्रोतृ, अमतं मन्तृ, अविज्ञातं विज्ञातृ, नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति- बृह. ३-८-११) 'विज्ञानमानन्दं' (ब्रह्म रातिः दातुः परायणं तिष्ठमानस्य तद्विदः-बृह. ३-९-२७) सत्यं ज्ञानमनन्तं' (ब्रह्म. तै २-१) 'अदृश्येऽनात्म्ये' (अनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। तै. २-७) 'स वा एष महानज आत्मा' (योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते, सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः एषां लोकानामसंभेदाय। बृ. ४-४-२२) 'अप्राणो ह्यमनाः' (शुभ्रो ह्यक्षरात्परतः परः। मुण्ड. २-१-२) 'स बाह्याभ्यन्तरो ह्यजः' (मुण्ड. २-१-२) 'विज्ञानघन एव' (बृह. २-४-१२) अनन्तरमबाह्यं (अयमात्मा ब्रह्म सर्वानुभूः बृह. २-५-१९) 'अन्यदेव तद्विदितादथो अविदितादधि' (केन १-३) आकाशो वै नाम- (नामरूपयोः निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा। छान्दो ८-१४-१) इत्यादिश्रुतिभिः ॥ ७ ॥

स्मृतिभिश्च 'न जायते म्रियते वा (कदाचित् नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हन्यमाने शरीरे । गी. २-२०) 'नादत्ते कस्यचित् पापं' (न चैव सुकृतं विभुः । गी. ५-१५) 'यथाऽऽकाशस्थितो नित्यं' (वायुः सर्वत्रगो महान् । तथा सर्वाणि भूतानि मत्स्थानि – गी. ९-६) 'क्षेत्रज्ञं चापि मां विद्धि' (सर्वक्षेत्रेषु भारत - गी. १३-२) 'न सत्तन्नासदुच्यते' (गी. १३ - १२) 'अनादित्वान्निर्गुणत्वात्' (परमात्मायमव्ययः । शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते । गी. १३-३१) 'समं सर्वेषु भूतेषु' (तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति । गी. १३-२७) 'उत्तमः पुरुषस्त्वन्यः' (परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । गी. १५-१७) इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिः तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥ ८ ॥

एवं श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणं शिष्यं संसारसागरादुत्तितीर्षुं पृच्छेत् कस्त्वमसि सोम्येति । स यदि ब्रूयात् ब्राह्मणपुत्रः अदोऽन्वयः ब्रह्मचार्यासं, गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राट् संसारसागरात् जन्ममृत्युमहाग्राहात् उत्तितीर्षुरिति । आचार्यो ब्रूयात् – इहैव तव सौम्य मृतस्य शरीरं वयोभिरद्यते मृद्भावं वाऽऽपद्यते, तत्र कथं संसारसागरादुद्धर्तुमिच्छसीति । न हि नद्या अवरे कूले भस्मीभूते नद्याः पारं तरिष्यसीति ॥ ९ ॥

स यदि ब्रूयात् – अन्योऽहं शरीरात् । शरीरं तु जायते म्रियते वयोभिरद्यते मृद्भावमापद्यते शस्त्राग्न्यादिभिश्च विनाश्यते, व्याध्यादिभिश्च प्रयुज्यते । तस्मिन् अहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः पुनः पुनः शरीरविनाशे धर्माधर्मवशात् शरीरान्तरं यास्यामि, पूर्वनीडविनाशे पक्षीव नीडान्तरम् । एवमेवाहमनादौ संसारे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवमनुष्यतिर्यङ्निरयस्थानेषु स्वकर्मवशात् उपात्तमुपात्तं शरीरं त्यजन् नवं नवं चान्यदुपाददानः, जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः क्रमेणेदं शरीरमासाद्य संसारचक्रभ्रमणात् अस्मात् निर्विण्णो भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमनाय। तस्मान्नित्य एवाहं शरीरादन्यः। शरीराणि आगच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति ॥ १० ॥

आचार्यो ब्रूयात्—साध्ववादीः, सम्यक् पश्यसि। कथं मृषाऽवादीः, ब्राह्मणपुत्रोऽदोऽन्वयः ब्रह्मचार्यासं, गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राडिति। स यदि ब्रूयात् कथमहं मृषाऽवादिषमिति। तं प्रति ब्रूयादाचार्यः—यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं, जात्यन्वयसंस्कारवर्जितस्यात्मनः प्रत्यभ्यज्ञासीः ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति। स यदि पृच्छेत्—कथं भिन्नजात्यन्वयसंस्कारं शरीरम्। कथं वा अहं जात्यन्वयसंस्कारवर्जित इति ॥ ११ ॥

आचार्यो ब्रूयात्—शृणु सोम्य यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं त्वं च जात्यन्वयसंस्कारवर्जितः। स्मर्तुमर्हसि सोम्य, परमात्मानं सर्वात्मानं यथोक्तलक्षणं श्रावितोऽसि। 'सदेव सोम्येदं' इत्यादिभिः श्रुतिभिः स्मृतिभिश्च। योऽसावाकाशो नामरूपाभ्यामर्थान्तरभूतोऽशरीरः अस्थूलादिलक्षणः अपहतपाप्मत्वादिलक्षणश्च सर्वैः संसारधर्मैरनागन्धितः, यत्साक्षादपरोक्षात् ब्रह्म, य आत्मा सर्वान्तरः, अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, नित्यविज्ञानस्वरूपः अनन्तरोऽबाह्यः, विज्ञानघन एव, परिपूर्ण आकाशवत् अनन्तशक्तिः, आत्मा सर्वस्य, अशनायादिवर्जितः, आविर्भावतिरोभाववर्जितश्च, स्वात्मविलक्षणयोः नामरूपयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगद्बीजभूतयोः स्वात्मस्थयोः तत्त्वान्यत्वाभ्यामनिर्वचनीययोः स्वयं-वेद्ययोः सद्भावमात्रेण अचिन्त्यशक्तित्वात् व्याकर्ता अव्याकृतयोः ॥

ते नामरूपे अव्याकृते सती व्याक्रियमाणे तस्मादेतस्मादात्मनः आकाशनामाकृती संवृत्ते। तच्चाकाशाख्यं भूतमनेन प्रकारेण परमात्मनः संभूतं प्रसन्नादिव सलिलात् मलमिव फेनम्। न सलिलं, न च सलिलादत्यन्तभिन्नं फेनं सलिलव्यतिरेकेणादर्शनात्। सलिलं तु स्वच्छं, अन्यत्फेनान्मलरूपात्। एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानीयाभ्यां, शुद्धः प्रसन्नः तद्विलक्षणः। ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ॥ १३ ॥

ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभाव-मापद्येते। ततोऽप्यग्निभावं, अग्नेरब्भावं, ततः पृथिवीभावं इत्येवं क्रमेण पूर्वपूर्वानुप्रवेशेन पञ्चमहाभूतानि पृथिव्यन्तानि उत्पन्नानि। ततः पञ्चमहाभूतगुणविशिष्टा पृथिवी। पृथिव्याश्च पञ्चात्मिक्यो व्रीहियवाद्या ओषधयो जायन्ते। ताभ्यो भक्षिताभ्यो लोहितं च शुक्रं च स्त्रीपुंसशरीरसंबन्धि जायते। तदुभयमृतुकाले अविद्या-प्रयुक्तकामखजनिर्मथनोद्भूतं मन्त्रसंस्कृतं गर्भाशये निषिच्यते। तत्स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे दशमे वा मासि जायते ॥ १४ ॥

तज्जातं लब्धनामाकृतिकं जातकर्मादिभिः मन्त्रसंस्कृतं पुनः उपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति। तदेव शरीरं पत्नीयोग संस्कारयोगेन गृहस्थसंज्ञं भवति। तदेव वनस्थसंस्कारेण तापस-संज्ञं भवति। तदेव क्रियानिवृत्तिनिमित्तेन संस्कारेण परिव्राट्संज्ञं भवति। इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम्। मनश्च इन्द्रियाणि च नामरूपात्मकान्येव 'अन्नमयं हि सोम्य मनः' इत्यादि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिभ्यः। योऽसौ नामरूपयोर्व्याकर्ता नामरूपधर्मविलक्षणः स एव नामरूपे व्याकुर्वन् सृष्ट्वेदं शरीरं स्वयं संस्कारधर्मवर्जितो नामरूपे इह प्रविष्टः। तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वं इति सिद्धम् ॥ १५ ॥

स यदि ब्रूयात् —अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसारी, अन्योऽसौ मद्विलक्षणः असंसारी देवः, तमहं बल्युपहारनमस्कारादिभिः वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षुरस्मि। कथमहं स एवेति। आचार्यो ब्रूयात्—नैवं सोम्य प्रतिपत्तुमर्हसि, प्रतिषिद्धत्वात् भेदप्रतिपत्तेः। कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह— 'अन्योऽसावन्योऽहमस्मीति न स वेद (बृह १-४-१०) ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद (बृह २-४-६) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृह ४-४-१९) इत्येवमाद्याः एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति। अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः ॥ १६ ॥

संसारिणो हि कर्माणि विधीयन्ते तत्साधनानि च। न परमात्मनोऽभेददर्शिनः। भेददर्शनमात्रेण च ततोऽन्यत्वम्। तर्हि किमिदं दृश्यते श्रूयते वा साध्यं साधनं साधकश्चेति। अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा, साधनं साध्यं साधकश्चेति। परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेः अनेकवत् आभासते, तिमिरदृष्ट्या अनेकचन्द्रवत्। अविद्यावतः उपात्तशरीरादिभेदस्य इष्टानिष्टयोगिनमात्मानं मन्यमानस्य, साधनैरेव इष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः, इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः, शनैः तद्विषयमज्ञानं निवर्तयितुं शास्त्रं, न साध्यसाधनादिभेदं विधत्ते, अनिष्टरूपः संसारो हि सः इति। तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयाद्येकत्वोपपत्तिप्रदर्शनेन। अविद्यायामुन्मूलितायां प्रज्ञा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिष्ठा परमार्थदर्शिनो भवति। कश्चित्पप्रच्छ—भगवन् कथमहं संसारात् मोक्षिष्ये। शरीरेन्द्रियविषयवेदनावान् जागरिते दुःखमनुभवामि, तथा स्वप्नेऽनुभवामि च, पुनः पुनः, सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य। किमयमेव मम स्वभावः, किं वा अन्यस्वभावस्य सतो नैमित्तिक इति। यदि स्वभावः, न मे मोक्षाशा, स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिकः, निमित्तपरिहारे स्यान्मोक्षोपपत्तिः॥

तं गुरुरुवाच। न तवायं स्वभावः। किन्तु नैमित्तिकः। अविद्या निमित्तम्। विद्या तस्य निवर्तिका। अविद्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरणलक्षणात्। स्वप्नजाग्रद्दुःखं नानुभविष्यसीति॥ १८॥

शिष्य उवाच—का सा अविद्या? किंविषया वा? विद्या च का अविद्यानिवर्तिका? यया स्वभावं प्रतिपद्येयेति। गुरुरुवाच—त्वं परमात्मानं सन्तं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे। अकर्तारं सन्तं कर्तेति। अभोक्तारं सन्तं भोक्तेति। विद्यमानं चाविद्यमानमिति। एषा अविद्या यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः। तस्या अविद्याया विद्या निवर्तिका। इत्येवं त्वमभयं प्राप्तोऽसि, नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि, संसारदुःखान्मुक्तोऽसीति॥ १९॥

आत्मानात्मविवेकः।

वेदान्तार्थविचारेण जायते ज्ञानमुत्तमम्।
तेनात्यन्तिकसंसारदुःखनाशो भवत्यलम्॥ २०॥

यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचनम्।
तदुच्यते मया सम्यक् श्रुत्वाऽऽत्मन्यवधारय॥ २१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोऽहं कथमिदं जातं को वा कर्ताऽस्य विद्यते ।
उपादानं किमस्तीह विचारः सोऽयमीदृशः ॥ २२ ॥

नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ।
एतद्विलक्षणः कश्चित् विचारः सोऽयमीदृशः ॥ २३ ॥

अहमेकोऽपि सूक्ष्मश्च ज्ञाता साक्षी सदव्ययः ।
तदहं नात्र सन्देहो विचारः सोऽयमीदृशः ॥ २४ ॥

आत्मा विनिष्कलो ह्येको देहो बहुभिरावृतः ।
आत्मा ज्ञानमयः पुण्यो देहो मांसमयोऽशुचिः ॥ २५ ॥

आत्मा प्रकाशकः स्वच्छो देहस्तामस उच्यते ।
आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः ॥ २६ ॥

तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ।
देहोऽहमित्ययं मूढो मत्वा तिष्ठत्यहो जनः ॥ २७ ॥

ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः ।
निर्विकारो निराकारो निरवद्योऽहमव्ययः ॥ २८ ॥

निरामयो निराभासो निर्विकल्पोऽहमाततः ।
निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः ॥ २९ ॥

निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः ।
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ ३० ॥

अहंशब्देन विख्यातः एक एव स्थितः परः ।
स्थूलत्वानैकतां प्राप्तः कथं स्याद्देहकः पुमान् ॥ ३१ ॥

अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः ।
ममायमिति निर्देशात् कथं स्याद्देहकः पुमान् ॥ ३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहं विकारहीनस्तु देहो नित्यविकारवान् ।
इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥ ३३ ॥

प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः ।
नित्यश्च तत्फलं भुङ्क्ते देहपातादनन्तरम् ॥ ३४ ॥

लिङ्गं चानेकसंयुक्तं चलं दृश्यं विकारि च ।
अव्यापकमसद्रूपं तत्कथं स्यात्पुमानयम् ॥ ३५ ॥

एवं देहद्वयादन्य आत्मा पूरुष ईश्वरः ।
सर्वात्मा सर्वरूपश्च सर्वातीतोऽहमव्ययः ॥ ३६ ॥

विद्वन्मृत्युभयं जहीहि भवतो नास्त्येव मृत्युः क्वचित्
नित्यस्य द्वयवर्जितस्य परमानन्दात्मनो ब्रह्मणः ।
भ्रान्त्या किञ्चिदवेक्ष्य भीतमनसा मिथ्या त्वया कथ्यते
मां त्राहीति हि सुप्तवत्प्रलपनं शून्यात्मकं वै मृषा ॥ ३७ ॥

शिष्यः — प्रत्यक्षेणानुभूतोऽर्थः कथं मिथ्यात्वमर्हति ।
चक्षुषो विषयं कुम्भं कथं मिथ्या करोम्यहम् ॥ ३८ ॥

मर्त्यस्य मम जन्मादिदुःखभाजोऽल्पजीविनः ।
ब्रह्मत्वमपि नित्यत्वं परमानन्दता कथम् ॥ ३९ ॥

क आत्मा कस्त्वनात्मा च किन्नु लक्षणमेतयोः ।
आत्मन्यनात्मधर्माणामारोपः क्रियते कथम् ॥ ४० ॥

किमज्ञानं तदुत्पन्नभयत्यागोऽपि वा कथम् ।
किन्नु ज्ञानं तदुत्पन्नसुखप्राप्तिश्च वा कथम् ॥ ४१ ॥

श्रीगुरुः — दिवान्धदृष्टेस्तु दिवान्धकारः प्रत्यक्षसिद्धोऽपि स किं यथार्थः ।
तद्वद्भ्रमेणावगतः पदार्थो भ्रान्तस्य सत्यः सुमतेर्मृषैव ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटोऽयमित्यत्र घटाभिधानः प्रत्यक्षतः कश्चिदुदेति दृष्टेः ।
विचार्यमाणे स तु नास्ति तत्र मृदस्ति तद्भावविलक्षणा सा ॥

प्रादेशमात्रः परिदृश्यतेऽर्कः शास्त्रेण सन्दर्शितलक्षयोजनः ।
मानान्तरेण क्वचिदेति बाधां प्रत्यक्षमप्यत्र हि न व्यवस्था ॥

तस्मात्त्वयीदं भ्रमतः प्रतीतं मृषैव नो सत्यमवेहि साक्षात् ।
ब्रह्म त्वमेवासि सुखस्वरूपं त्वत्तो न भिन्नं विचिनुष्व बुद्धौ ॥

स्वमात्मानं परं मत्वा परमात्मानमन्यथा ।
विमृग्यते पुनस्त्वात्मा बहिः कोशेषु पण्डितैः ॥ ४६ ॥

विस्मृत्य वस्तुनस्तत्त्वं अध्यारोप्य च वस्तुनि ।
अवस्तुतां च तद्धर्मान् मुधा शोचति नान्यथा ॥ ४७ ॥

आत्मानात्मविवेकं ते वक्ष्यामि शृणु सादरम् ।
इत्युक्त्वाभिमुखीकृत्य शिष्यं करुणया गुरुः ॥ ४८ ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयन् ।
सम्यक्प्राबोधयत्तत्त्वं शास्त्रदृष्टेन वर्त्मना ॥ ४९ ॥

वस्तुन्यवस्त्वारोपो यः सोऽध्यारोप इतीर्यते ।
असर्पभूते रज्ज्वादौ सर्पत्वारोपणं यथा ॥ ५० ॥

वस्तु तावत्परं ब्रह्म सत्यज्ञानादिलक्षणम् ।
इदमारोपितं यत्र भाति खे नीलतादिवत् ॥ ५१ ॥

तत्कारणं यदज्ञानं सकार्यं सद्विलक्षणम् ।
अवस्त्वित्युच्यते सद्भिः यस्य बाधा प्रदृश्यते ॥ ५२ ॥

अवस्तु तत् प्रमाणैर्यद् बाध्यते शुक्तिरौप्यवत् ।
न बाध्यते यत् तत् वस्तु त्रिषु कालेषु शुक्तिवत् ॥ ५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुक्तेर्बाधा न खल्वस्ति रजतस्य यथा तथा ।
अवस्तुसंज्ञितं यत्तत् जगदध्यासकारणम् ॥ ५४ ॥

सदसद्भ्यां अनिर्वाच्यं अज्ञानं त्रिगुणात्मकम् ।
वस्तुतत्त्वावबोधैकबाध्यं तद्भावलक्षणम् ॥ ५५ ॥

मिथ्यासम्बन्धतस्तत्र ब्रह्मण्याश्रित्य तिष्ठति ।
मणौ शक्तिर्यथा तद्वत् नैतदाश्रयदूषकम् ॥ ५६ ॥

सद्भावे लिङ्गमेतस्य कार्यमेतच्चराचरम् ।
मानं श्रुतिः स्मृतिश्चाज्ञोऽहमित्यनुभवोऽपि च ॥ ५७ ॥

श्रीहरिं परमानन्दमुपदेष्टारमीश्वरम् ।
व्यापकं सर्वलोकानां कारणं तं नमाम्यहम् ॥ ५८ ॥

इति श्रीशङ्करविजयमकरन्दे त्रयोविंश आस्वादः समाप्तः ॥

---

## ॥ चतुर्विंश आस्वादः ॥

### भगवत्पादानामुपदेशः (३)

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥ २ ॥

---

सङ्कलने मूलम् – तैत्तिरीयोपनिषद्भाष्यतः १, वाक्यवृत्तितः २-३, सर्ववेदान्तसिद्धान्तसारसंग्रहतः ४-४७, ५४-७४, ७६-११४, विवेकचूडामणितः ४८-५३, पञ्चीकरणतः ७५ स्वात्मनिरूपणतः ११५.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्य प्रसादादहमेव विष्णुः मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ ३॥

## अविद्या ।

अज्ञानं प्रकृतिः शक्तिः अविद्येति निगद्यते ।
तदेतत्सन्न भवति नासद्वा शुक्तिरौप्यवत् ॥ ४ ॥

सतो भिन्नमभिन्नं वा न दीपस्य प्रभा यथा ।
न सावयवमन्यद्वा बीजस्याङ्कुरवत् क्वचित् । ५ ॥

अत एतदनिर्वाच्यं इत्येव कवयो विदुः ।

## अध्यारोपेण आत्मानात्मविवेकः ।

समष्टिव्यष्टिरूपेण द्विधाऽज्ञानं निगद्यते । ६ ॥

नानात्वेन प्रतीतानां अज्ञानानामभेदतः ।
एकत्वेन समष्टिः स्यात् भूरुहाणां वनं यथा ॥ ७ ॥

इयं समष्टिरुत्कृष्टा सत्वांशोत्कर्षतः पुरा ।
मायेति कथ्यते तज्ज्ञैः शुद्धसत्वैकलक्षणा ॥ ८ ॥

मायोपहितचैतन्यं साभासं सत्वबृंहितम् ।
सर्वज्ञत्वादिगुणकं सृष्टिस्थित्यन्तकारणम् ॥ ९ ॥

अव्याकृतं तदव्यक्तं ईश इत्यपि गीयते ।
सर्वशक्तिगुणोपेतः सर्वज्ञानावभासकः ।
स्वतन्त्रः सत्यसङ्कल्पः सत्यकामः स ईश्वरः ॥ १० ॥

## आनन्दमयकोशः ।

तस्यैतस्य महाविष्णोः महाशक्तेर्महीयसः ।
सर्वज्ञत्वेश्वरत्वादिकारणत्वान्मनीषिणः ।
कारणं वपुरित्याहुः समष्टिं सत्वबृंहितम् ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनन्दप्रचुरत्वेन छादकत्वेन कोशवत् ।
सैषाऽऽनन्दमयः कोश इतीशस्य निगद्यते ॥ १२ ॥

सर्वोपरमहेतुत्वात् सुषुप्तिस्थानमिष्यते ।
प्राकृतः प्रलयो यत्र श्राव्यते श्रुतिभिर्मुहुः ॥ १३ ॥

अज्ञानं व्यष्ट्यभिप्रायाद् अनेकत्वेन भिद्यते ।
अज्ञानवृत्तयो नाना तत्तद्गुणविलक्षणाः ॥ १४ ॥

वनस्य व्यष्ट्यभिप्रायाद् भूरुहा इत्यनेकता ।
यथा तथैवाज्ञानस्य व्यष्टितः स्यादनेकता ॥ १५ ॥

व्यष्टिर्मलिनसत्त्वैषा रजसा तमसा युता ।
ततो निकृष्टा भवति योपाधिः प्रत्यगात्मनः ॥ १६ ॥

चैतन्यं व्यष्ट्यवच्छिन्नं प्रत्यगात्मेति गीयते ।
साभासं व्यष्ट्युपहितं सत्तादात्म्येन तद्गुणैः ॥ १७ ॥

अभिभूतः स एवात्मा जीव इत्यभिधीयते ।
किञ्चिज्ज्ञत्वानीश्वरत्वसंसारित्वादिधर्मवान् ॥ १८ ॥

अस्य व्यष्टिरहङ्कारकारणत्वेन कारणम् ।
वपुस्तत्राभिमान्यात्मा प्राज्ञ इत्युच्यते बुधैः ॥ १९ ॥

प्राज्ञत्वमस्यैकाज्ञानभासकत्वेन सम्मतम् ।
व्यष्टेर्निकृष्टत्वेनास्य नानेकाज्ञानभासकम् ॥ २० ॥

स्वरूपाच्छादकत्वेनाप्यानन्दप्रचुरत्वतः ।
कारणं वपुरानन्दमयः कोश इतीर्यते ।
अस्यावस्था सुषुप्तिः स्याद्यत्रानन्दः प्रकृष्यते ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समष्टेरपि च व्यष्टेः उभयं वनवृक्षवत् ।
अभेद एव नो भेदो जात्येकत्वेन वस्तुतः ॥ २२ ॥

अभेद एव ज्ञातव्यः तथेशप्राज्ञयोरपि ।
अज्ञानतदवच्छिन्नाभासयोरुभयोरपि ॥ २३ ॥

आधारं शुद्धचैतन्यं यत् तत् तुर्यमितीर्यते ।
एतदेवाविविक्तं सदुपाधिभ्यां च तद्गुणैः ।
महावाक्यस्य वाच्यार्थो विविक्तं लक्ष्य इष्यते ॥ २४ ॥

विज्ञानमयः कोशः ।

अनन्तशक्तिसंपन्नो मायोपाधिक ईश्वरः ।
ईक्षामात्रेण सृजति विश्वमेतच्चराचरम् ॥ २५ ॥

स्वप्राधान्येन जगतो निमित्तमपि कारणम् ।
उपादानं तथोपाधिप्राधान्येन भवत्ययम् ॥ २६ ॥

यथा लूता निमित्तं च स्वप्रधानतया भवेत् ।
स्वशरीरप्रधानत्वेनोपादानं तथेश्वरः ॥ २७ ॥

तमःप्रधानप्रकृतिविशिष्टात्परमात्मनः ।
अभूत्सकाशादाकाशं आकाशाद्वायुरुच्यते ॥ २८ ॥

वायोरग्निस्तथैवाग्नेः आपोऽद्भ्यः पृथिवी क्रमात् ।
शक्तेस्तमःप्रधानत्वं तत्कार्ये जाड्यदर्शनात् ॥ २९ ॥

आरभन्ते कार्यगुणान् ये कारणगुणा हि ते ।
एतानि सूक्ष्मभूतानि भूतमात्रा अपि क्रमात् ॥ ३० ॥

एतेभ्यः सूक्ष्मभूतेभ्यः सूक्ष्मदेहा भवन्त्यपि ।
स्थूलान्यपि च भूतानि चान्योन्यांशविमेलनात् ॥ ३१ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपञ्चीकृतभूतेभ्यो जातं सप्तदशाङ्गकम् ।
संसारकारणं लिङ्गमात्मनो भोगसाधनम् ॥ ३२ ॥

श्रोत्रादिपञ्चकं चैव वागादीनां च पञ्चकम् ।
प्राणादिपञ्चकं बुद्धिमनसी लिङ्गमुच्यते ॥ ३३ ॥

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च जातानि ।
आकाशादीनां सत्वांशेभ्यो धीन्द्रियाण्यनुक्रमतः ॥ ३४ ॥

आकाशादिगताः पञ्च सात्विकांशाः परस्परम् ।
मिलित्वैवान्तःकरणं अभवत्सर्वकारणम् ॥ ३५ ॥

प्रकाशकत्वादेतेषां सात्विकांशत्वमिष्यते ।
प्रकाशकत्वं सत्वस्य स्वच्छत्वेन यतस्ततः ॥ ३६ ॥

तदन्तःकरणं वृत्तिभेदेन स्याच्चतुर्विधम् ।
मनो बुद्धिरहङ्कारः चित्तं चेति तदुच्यते ॥ ३७ ॥

सङ्कल्पान्मन इत्याहुः बुद्धिरर्थस्य निश्चयात् ।
अभिमानादहङ्कारः चित्तमर्थस्य चिन्तनात् ॥ ३८ ॥

मनस्यपि च बुद्धौ च चित्ताहङ्कारयोः क्रमात् ।
अन्तर्भावोऽत्र बोद्धव्यो लिङ्गलक्षणसिद्धये ॥ ३९ ॥

चिन्तनं च मनोधर्मः सङ्कल्पादिर्यथा तथा ।
अन्तर्भावो मनस्येव सम्यक् चित्तस्य सिध्यति ॥ ४० ॥

देहादावहमित्येव भावो दृढतरो धियः ।
दृश्यतेऽहङ्कृतेस्तस्मात् अन्तर्भावोऽत्र युज्यते ॥ ४१ ॥

तस्मादेव तु बुद्धेः कर्तृत्वं तदितरस्य करणत्वम् ।
सिध्यत्यात्मन उभयं विद्यात्संसारकारणं मोहात् ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञानमयकोशः स्याद् बुद्धिर्ज्ञानेन्द्रियैः सह ।
विज्ञानप्रचुरत्वेनाप्याच्छादकतयाऽऽत्मनः ॥ ४३ ॥

अयं महान् अहङ्कारवृत्तिमान् कर्तृलक्षणः ।
सर्वसंसारनिर्वोढा विज्ञानमयशब्दभाक् ॥ ४४ ॥

अहं ममेत्येव सदाभिमानं देहेन्द्रियादौ कुरुते गृहादौ ।
जीवाभिमानः पुरुषोऽयमेव कर्ता च भोक्ता च सुखी च दुःखी ॥

मनोमयः कोशः ।

मनो मनोमयः कोशो भवेद् ज्ञानेन्द्रियैः सह ।
प्राचुर्यं मनसो यत्र दृश्यतेऽसौ मनोमयः ॥ ४६ ॥

चिन्ताविषादहर्षाद्याः कामाद्या अस्य वृत्तयः ।
मनुते मनसैवैष फलं कामयते बहिः ।
यतते कुरुते भुङ्क्ते तन्मनः सर्वकारणम् ॥ ४७ ॥

न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः ।
तस्मिन्विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन् सकलं विजृम्भते । ४८ ॥

स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्वम् ।
तथैव जाग्रत्यपि नो विशेषः तत्सर्वमेतन्मनसो विजृम्भणम् ॥ ४९ ॥

सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित्सकलप्रसिद्धेः ।
अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुताऽस्ति ॥ ५० ॥

देहादिसर्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं पशुवद्गुणेन ।
वैरस्यमत्र विषवत्सुविधाय पश्चादेनं विमोचयति तन्मन एव बन्धात् ॥

तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने ।
बन्धस्य हेतुर्मलिनं रजोगुणैः मोक्षस्य हेतुर्विरजस्तमस्कम् ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य सन्न्यस्य च सर्वकर्म ।
सच्छ्रद्धया यः श्रवणादिनिष्ठो रजस्स्वभावं स धुनोति बुद्धेः ॥ ५३ ॥

प्राणमयः कोशः ।

पञ्चानामेव भूतानां रजोंशेभ्योऽभवन् क्रमात् ।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्यनु ॥ ५४ ॥

समस्तेभ्यो रजोंशेभ्यो व्योमादीनां क्रियात्मकाः ।
प्राणादयः समुत्पन्नाः पञ्चाप्यान्तरवायवः ॥ ५५ ॥

प्राणः प्राग्गमनेन स्यादपानोऽवाग्गमनेन च ।
व्यानस्तु विष्वग्गमनात् उत्क्रान्त्योदान इष्यते ॥ ५६ ॥

अशितान्नरसादीनां समीकरणधर्मतः ।
समान इत्यभिप्रेतो वायुर्यस्तेषु पञ्चमः ॥ ५७ ॥

क्रियैव दृश्यते प्रायः प्राणकर्मेन्द्रियेष्वलम् ।
ततस्तेषां रजोंशेभ्यो जनिरङ्गीकृता बुधैः ॥ ५८ ॥

राजसीं तु क्रियाशक्तिं तमःशक्तिं जडात्मिकाम् ।
प्रकाशरूपिणीं सत्त्वशक्तिं प्राहुर्महर्षयः ॥ ५९ ॥

एते प्राणादयः पञ्च पञ्चकर्मेन्द्रियैः सह ।
भवेत्प्राणमयः कोशः स्थूलो येनैव चेष्टते ॥ ६० ॥

यद्यन्निष्पाद्यते कर्म पुण्यं वा पापमेव वा ।
रागादिभिश्च वपुषा तत्प्राणमयकर्तृकम् ॥ ६१ ॥

प्राणकर्मेन्द्रियैर्देहः प्रेर्यमाणः प्रवर्तते ।
नानाक्रियासु सर्वत्र विहिताविहितादिषु ॥ ६२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोशत्रयं मिलित्वैतद्वपुः स्यात्सूक्ष्ममात्मनः ।
अतिसूक्ष्मतया लीनस्यात्मनो गमकत्वतः ।
लिङ्गमित्युच्यते स्थूलापेक्षया सूक्ष्ममिष्यते ॥ ६३ ॥

सर्वं लिङ्गवपुर्जातमेकधीविषयत्वतः ।
समष्टिः स्यात्तरुगणः सामान्येन वनं यथा ॥ ६४ ॥

एतत्समष्ट्युपहितं चैतन्यं सफलं जगुः ।
हिरण्यगर्भः सूत्रात्मा प्राण इत्यपि पण्डिताः ॥ ६५ ॥

हिरण्मये बुद्धिगर्भे प्रचकास्ति हिरण्यवत् ।
हिरण्यगर्भ इत्यस्य व्यपदेशस्ततो मतः ॥ ६६ ॥

समस्तलिङ्गदेहेषु सूत्रवन्मणिपङ्क्तिषु ।
व्याप्य स्थितत्वात्सूत्रात्मा प्राणनात्प्राण उच्यते ॥ ६७ ॥

नैकधीविषयत्वेन लिङ्गं व्यष्टिर्भवत्यथ ।
यदेतद्व्यष्ट्युपहितं चिदाभाससमन्वितम् ॥ ६८ ॥

चैतन्यं तैजस इति निगदन्ति मनीषिणः ।
तेजोमयान्तःकरणोपाधित्वेनैष तैजसः ॥ ६९ ॥

स्थूलात्सूक्ष्मतया व्यष्टिरस्य सूक्ष्मवपुर्मतम् ।
अस्य जागरसंस्कारमयत्वाद्वपुरुच्यते ॥ ७० ॥

स्वप्ने जागरकालीनवासनापरिकल्पितान् ।
तैजसो विषयान् भुङ्क्ते सूक्ष्मार्थान् सूक्ष्मवृत्तिभिः ॥ ७१ ॥

समष्टेरपि च व्यष्टेः सामान्येनैव पूर्ववत् ।
अभेद एव ज्ञातव्यो जात्येकत्वे कुतो भिदा ॥ ७२ ॥

द्वयोरुपाध्योरेकत्वे तयोरप्यभिमानिनोः ।
सूत्रात्मनस्तैजसस्याप्यभेदः पूर्ववन्मतः ॥ ७३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्नमयः कोशः ।

तान्येव सूक्ष्मभूतानि व्योमादीनि परस्परम् ।
पञ्चीकृतानि स्थूलानि भवन्ति शृणु तत्क्रमम् ॥ ७४ ॥

पञ्चानां भूतानां एकैकं द्विधा विभज्य स्वार्धभागं विहाय अर्धभागं चतुर्धा विभज्येतरेषु योजिते पञ्चीकरणम् ॥ ७५ ॥

शब्दैकगुणमाकाशं शब्दस्पर्शगुणोऽनिलः ।
तेजः शब्दस्पर्शरूपैः गुणवत्कारणक्रमात् ॥ ७६ ॥

आपश्चतुर्गुणाः शब्दस्पर्शरूपरसैः क्रमात् ।
एतैश्चतुर्भिर्गन्धेन सह पञ्चगुणा मही ॥ ७७ ॥

आकाशांशतया श्रोत्रं शब्दं गृह्णाति तद्गुणम् ।
त्वङ्मारुतांशकतया स्पर्शं गृह्णाति तद्गुणम् ॥ ७८ ॥

तेजोंशकतया चक्षुः रूपं गृह्णाति तद्गुणम् ।
अबंशकतया जिह्वा रसं गृह्णाति तद्गुणम् ॥ ७९ ॥

भूम्यंशकतया घ्राणं गन्धं गृह्णाति तद्गुणम् ।
करोति खांशकतया वाक् शब्दोच्चारणक्रियाम् ॥ ८० ॥

वाय्वंशकतया पादौ गमनादिक्रियापरौ ।
तेजोंशकतया पाणी वह्न्याद्यर्चनतत्परौ ॥ ८१ ॥

जलांशकतयोपस्थो रेतोमूत्रविसर्गकृत् ।
भूम्यंशकतया पायुः कठिनं मलमुत्सृजेत् ॥ ८२ ॥

श्रोत्रस्य दैवतं दिक् स्यात् त्वचो वायुर्दृशो रविः ।
जिह्वाया वरुणो दैवं घ्राणस्य त्वश्विनावुभौ ॥ ८३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचोऽग्निर्हस्तयोरिन्द्रः पादयोस्तु त्रिविक्रमः ।
पायोर्मृत्युरुपस्थस्य त्वधिदैवं प्रजापतिः ॥ ८४ ॥

मनसो दैवतं चन्द्रो बुद्धेर्दैवं बृहस्पतिः ।
रुद्रस्त्वहंकृतेर्दैवं क्षेत्रज्ञश्चित्तदैवतम् ॥ ८५ ॥

दिगाद्या देवताः सर्वाः खादिसत्त्वांशसंभवाः ।
संमिता इन्द्रियस्थानेष्विन्द्रियाणां समन्ततः ।
निगृह्णन्त्यनुगृह्णन्ति प्राणिकर्मानुरूपतः ॥ ८६ ॥

शरीरकरणग्रामप्राणाहमधिदेवताः ।
पञ्चैते हेतवः प्रोक्ता निष्पत्तौ सर्वकर्मणाम् ॥ ८७ ॥

कर्मानुरूपेण गुणोदयो भवेत् गुणानुरूपेण मनःप्रवृत्तिः ।
मनोऽनुवृत्तैरुभयात्मकेन्द्रियैः निर्वर्त्यते पुण्यमपुण्यमत्र ॥ ८८ ॥

करोति विज्ञानमयोऽभिमानं कर्ताहमेवेति तदात्मना स्थितः ।
आत्मा तु साक्षी न करोति किञ्चित् न कारयत्येव तटस्थवत्सदा ॥

द्रष्टा श्रोता वक्ता कर्ता भोक्ता भवत्यहङ्कारः ।
स्वयमेतद्विकृतीनां साक्षी निर्लेप एवात्मा ॥ ९० ॥

पञ्चीकृतेभ्यः खादिभ्यो भूतेभ्यस्त्वीक्षयेशितुः ।
समुत्पन्नमिदं स्थूलं ब्रह्माण्डं सचराचरम् ॥ ९१ ॥

जरायुजाण्डजस्वेदजोद्भिज्जाताश्चतुर्विधाः ।
स्वस्वकर्मानुसारेण जातास्तिष्ठन्ति जन्तवः ॥ ९२ ॥

इदं स्थूलवपुर्जातं भौतिकं च चतुर्विधम् ।
सामान्येन समष्टिः स्यादेकधीविषयत्वतः ॥ ९३ ॥

एतत्समष्ट्यवच्छिन्नं चैतन्यं फलसंयुतम् ।
प्राहुर्वैश्वानर इति विराडिति च वैदिकाः ॥ ९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैश्वानरो विश्वनरेष्वात्मत्वेनाभिमानतः ।
विराट् स्याद्विविधत्वेन स्वयमेव विराजनात् ॥ ९५ ॥

चतुर्विधं भूतजातं तत्तज्जातिविशेषतः ।
नैकधीविषयत्वेन पूर्ववद्व्यष्टिरिष्यते ॥ ९६ ॥

साभासं व्यष्ट्युपहितं तत्तादात्म्यमुपागतम् ।
चैतन्यं विश्व इत्याहुः वेदान्तनयकोविदाः ॥ ९७ ॥

विश्वस्मिन् स्थूलदेहेऽत्र स्वाभिमानेन तिष्ठति ।
यतस्ततो विश्व इति नाम्ना सार्थो भवत्ययम् ॥ ९८ ॥

व्यष्टिरेवास्य विश्वस्य भवति स्थूलविग्रहः ।
उच्यतेऽन्नविकारित्वात् कोशोऽन्नमय इत्ययम् ॥ ९९ ॥

देहोऽयं पितृभुक्तान्नविकाराद् शुक्रशोणितात् ।
जातः प्रवर्धतेऽन्नेन तदभावे विनश्यति ॥ १०० ॥

तस्मादन्नविकारित्वेनायमन्नमयो मतः ।
आच्छादकत्वादेतस्याप्यसेः कोशवदात्मनः ॥ १०१ ॥

आत्मनः स्थूलभोगानामेतदायतनं विदुः ।
शब्दादिविषयान् भुङ्क्ते स्थूलान् स्थूलात्मनि स्थितः ।
बहिरात्मा ततः स्थूलभोगायतनमुच्यते ॥ १०२ ॥

इन्द्रियैरुपनीतानां शब्दादीनामयं स्वयम् ।
देहेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः ॥ १०३ ॥

यत्रोपभुङ्क्ते विषयान् स्थूलानेव महामतिः ।
अहं ममेति सैषाऽस्यावस्था जाग्रदितीर्यते ॥ १०४ ॥

एतत्समष्टिव्यष्ट्योश्चोभयोरप्यभिमानिनोः ।
तद्विश्ववैश्वानरयोरभेदः पूर्ववन्मतः ॥ १०५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थूलसूक्ष्मकारणाख्याः प्रपञ्चा ये निरूपिताः ।
ते सर्वेऽपि मिलित्वैकः प्रपञ्चोऽपि महान् भवेत् ॥ १०६ ॥

महाप्रपञ्चावच्छिन्नं विश्वप्राज्ञादिलक्षणम् ।
विराडादीशपर्यन्तं चैतन्यं चैकमेव तत् ॥ १०७ ॥

यदनाद्यन्तमव्यक्तं चैतन्यमजमक्षरम् ।
महाप्रपञ्चेन सहाविविक्तं सदयोऽग्निवत् ॥ १०८ ॥

तत्सर्वं खल्विदं ब्रह्मेत्यस्य वाक्यस्य पण्डितैः ।
वाच्यार्थं इति निर्णीतं विविक्तं लक्ष्य इत्यपि ॥ १०९ ॥

स्थूलाद्यज्ञानपर्यन्तं कार्यकारणलक्षणम् ।
दृश्यं सर्वमनात्मेति विजानीहि विचक्षण ॥ ११० ॥

अन्तःकरणतद्वृत्तिद्रष्टृ नित्यमविक्रियम् ।
चैतन्यं यत् तदात्मेति बुद्ध्या बुध्यस्व सूक्ष्मया ॥ १११ ॥

एष प्रत्यक् स्वप्रकाशो निरंशोऽसङ्गः शुद्धः सर्वदैकस्वभावः ।
नित्याखण्डानन्दरूपो निरीहः साक्षी चेता केवलो निर्गुणश्च ॥ ११२ ॥

नैव प्रत्यग् जायते वर्धते नो किञ्चिन्नापक्षीयते नैति नाशम् ।
आत्मा नित्यः शाश्वतोऽयं पुराणो नासौ हन्यो हन्यमाने शरीरे ॥

जन्मास्तित्वविवृद्धयः परिणतिश्चापक्षतिर्नाशनं
दृश्यस्यैव भवन्ति षड् विकृतयो नानाविधा व्याधयः ।
स्थूलत्वादि च नीलताद्यपि मितिर्वर्णाश्रमादिप्रथा
दृश्यन्ते वपुषो न चात्मन इमे तद्विक्रियासाक्षिणः ॥ ११४ ॥

देशिकवरं दयालुं वन्देऽहं निहतनिखिलसन्देहम् ।
यच्चरणद्वयमद्वयमनुभवमुपदिशति तत्पदस्यार्थम् ॥ ११५ ॥

इति शङ्करविजयमकरन्दे चतुर्विंश आस्वादः समाप्तः ॥

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ पञ्चविंश आस्वादः ॥

### भगवत्पादानामुपदेशः (४)

जातं मय्येव सर्वं पुनरपि मयि तत्संस्थितं चैव विश्वं
सर्वं मय्येव याति प्रविलयमिति तद्ब्रह्म चैवाहमस्मि।
यस्य स्मृत्या च यज्ञाद्यखिलशुभविधौ सुप्रयातीह कार्यं
न्यूनं संपूर्णतां वै तमहमतिमुदैवाच्युतं सन्नतोऽस्मि ॥ १ ॥

### अविद्यया विक्षेपः आवरणं च।

अत्यन्तनिर्मलः सूक्ष्मः आत्मायमतिभास्वरः।
बुद्धिस्तथैव सत्त्वात्मा साभासा भास्वराऽमला ॥ २ ॥

सान्निध्यादात्मवद्भाति सूर्यवत्स्फटिको यथा।
आत्माभासा ततो बुद्धिः बुद्ध्याभासं ततो मनः ॥ ३ ॥

अक्षाणि मन आभासानि अक्षाभासमिदं वपुः।
अत एवात्मताबुद्धिः देहाक्षादावनात्मनि ॥ ४ ॥

अनादिरेषाऽविद्या तत्संस्कारोऽपि च तादृशः।
आत्मोपाधेरविद्याया अस्ति शक्तिद्वयं महत्।
विक्षेप आवृतिश्चेति याभ्यां संसार आत्मनः ॥ ५ ॥

आवृतिस्तमसः शक्तिस्तद्ध्यावरणकारणम्।
मूलाविद्येति सा प्रोक्ता यया संमोहितं जगत् ॥ ६ ॥

---

सङ्कलने मूलम्—शतश्लोकीतः, १, ८८, सर्ववेदान्तसिद्धान्तसार-संग्रहतः २-२६, ३१-८७, ८९-११०, आत्मबोधतः २७-३०, अपरोक्षानुभूतितः १११-१२१, स्वात्मनिरूपणतः १२२-१३४, सदाचारानुसन्धानतः १३५.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्षेपनाम्नी रजसस्तु शक्तिः प्रवृत्तिहेतुः पुरुषस्य नित्यम् ।
स्थूलादिलिङ्गान्तमशेषमेतद् यया सदात्मन्यसदेव सूयते ॥ ७ ॥

निद्रा यथा पुरुषमप्रमत्तं समावृणोतीयमपि प्रतीचम् ।
तथाऽऽवृणोत्यावृतिशक्तिरन्तः विक्षेपशक्तिं परिजृम्भयन्ती ॥ ८ ॥

शक्त्या महत्यावरणाभिधानया समावृते सत्यमलस्वरूपे ।
पुमाननात्मन्यहमेष एवेत्यात्मत्वबुद्धिं विदधाति मोहात् ॥ ९ ॥

यथा प्रसुप्तिप्रतिभासदेहे स्वात्मत्वधीरेष तथा ह्यनात्मनि ।
जन्माप्ययक्षुत्तृड्भ्रमादीन् आरोपयत्यात्मनि तस्य धर्मान् ॥ १० ॥

अध्यासो नाम खल्वेष वस्तुनो योऽन्यथा ग्रहः ।
स्वाभाविकभ्रान्तिमूलं संसृतेरादिकारणम् ॥ ११ ॥

उपाधियोगसाम्येऽपि जीववत्परमात्मनः ।
उपाधिभेदान्नो बन्धः तत्कार्यमपि किञ्चन ॥ १२ ॥

अस्योपाधिः शुद्धसत्त्वप्रधाना माया यत्र त्वस्य नास्त्यल्पभावः ।
सत्त्वस्यैवोत्कृष्टता तेन बन्धो नो विक्षेपस्तत्कृतो लेशमात्रः ॥ १३ ॥

सर्वज्ञोऽप्रतिबद्धबोधविभवस्तेनैव देवः स्वयं
मायां स्वामवलम्ब्य निश्चलतया स्वच्छन्दवृत्तिः प्रभुः ।
सृष्टिस्थित्यदनप्रवेशयमनव्यापारमात्रेच्छया
कुर्वन् क्रीडति तद्रजस्तम उभे संस्तभ्य शक्त्या स्वया ॥ १४ ॥

तस्मादावृतिविक्षेपौ किञ्चित्कर्तुं न शक्नुतः ।
स्वयमेव स्वतन्त्रोऽसौ तत्प्रवृत्तिनिरोधयोः ॥ १५ ॥

तमेव साधुकर्मेति श्रुतिर्वक्ति महेशितुः ।
निग्रहेऽनुग्रहे शक्तिः आवृतिक्षेपयोर्यतः ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रजसस्तमसश्चैव प्राबल्यं सत्वहानतः ।
जीवोपाधौ तथा जीवे तत्कार्यं बलवत्तरम् ॥ १७ ॥

तेन बन्धोऽस्य जीवस्य संसारोऽपि च तत्कृतः ।
संप्राप्तः सर्वदा यत्र दुःखं भूयः स ईक्षते ॥ १८ ॥

एतस्य संसृतेर्हेतुरध्यासोऽर्थविपर्ययः ।
अध्यासमूलमज्ञानं आहुरावृतिलक्षणम् ॥ १९ ॥

ज्ञानं अज्ञाननिवर्तकम् ।

अज्ञानस्य निवृत्तिस्तु ज्ञानेनैव न कर्मणा ।
अविरोधितया कर्म नैवाज्ञानस्य बाधकम् ॥ २० ॥

अज्ञानकार्यं तत्कर्म यतोऽज्ञानेन वर्धते ।
यद्येन वर्धते तेन नाशस्तस्य न सिद्ध्यति ॥ २१ ॥

येन यस्य सहावस्था निरोधाय न कल्पते ।
नाशकत्वं तदुभयोः को नु कल्पयितुं क्षमः । २२ ॥

यस्य प्रध्वंसजनको यत्संयोगोऽस्ति तत्क्षणे ।
तयोरेव विरोधित्वं युक्तं भिन्नस्वभावयोः ॥ २३ ॥

तमःप्रकाशयोर्यद्वत्परस्परविरोधिता ।
अज्ञानज्ञानयोस्तद्वत् उभयोरेव दृश्यते ॥ २४ ॥

न ज्ञानेन विनाऽज्ञाननाशः केनापि सिध्यति ।
तस्मादज्ञानविच्छित्त्यै ज्ञानं संपादयेत्सुधीः ॥ २५ ॥

आत्मानात्मविवेकेन ज्ञानं सिध्यति नान्यथा ।
अनात्मन्यात्मताबुद्धिग्रन्थिर्येन विदीर्यते ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवच्छिन्न इवाज्ञानात् तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ २७ ॥

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ २८ ॥

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येत् जलं कतकरेणुवत् ॥ २९ ॥

संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः ।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत् ॥ ३० ॥

अपवादेन आत्मानात्मविवेकः ।

आत्मानात्मविवेकार्थं विवादोऽयं निरूप्यते ।
अत्यन्तपामरः कश्चित् पुत्र आत्मेति मन्यते ॥ ३१ ॥

'पुत्रे तु पुष्टे पुष्टोऽहं नष्टे नष्टोऽहमित्यतः ।
अनुभूतिबलाच्चापि युक्तितोऽपि श्रुतेरपि ।
आत्मा वै पुत्रनामासि इत्येवं वदति श्रुतिः'॥ ३२ ॥

'प्रीतिमात्रात्कथं पुत्र आत्मा भवितुमर्हति ।
पुत्राद्विशिष्टा देहेऽस्मिन्प्राणिनां प्रीतिरिष्यते ॥ ३३ ॥

प्रदीप्ते भवने पुत्रं त्यक्त्वा जन्तुः पलायते ।
श्रुत्या तु मुख्यया वृत्त्या पुत्र आत्मेति नोच्यते ॥ ३४ ॥

अहंपदप्रत्ययार्थो देह एव न चेतरः ।
प्रत्यक्षः सर्वजन्तूनां देहोऽहमिति निश्चयः ।
एष पुरुषोऽन्नरसमय इत्यपि च श्रुतिः' ॥ ३५ ॥

'देह आत्मा कथं तु स्यात् परतन्त्रो ह्यचेतनः ।
इन्द्रियाणि भवन्त्यात्मा येषामस्त्यर्थवेदनम् । ३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रियाणां चेतनत्वं देहे प्राणाः प्रजापतिम् ।
एतमेत्येत्यूचुरिति श्रुत्यैव प्रतिपाद्यते' ॥ ३७ ॥

'इन्द्रियाणि कथं न्वात्मा करणानि कुठारवत् ।
श्रुत्याऽधिदेवता ह्येवमिन्द्रियेषूपचर्यते । ३८ ॥

अचेतनस्य दीपादेरर्थाभासकता यथा ।
तथैव चक्षुरादीनां जडानामपि सिध्यति । ३९ ॥

इन्द्रियाणां चेष्टयिता प्राणो यः पञ्चवृत्तिकः ।
सर्वावस्थास्ववस्थावान सोऽयमात्मत्वमर्हति ॥ ४० ॥

श्रुत्यान्योऽन्तर आत्मा प्राणमय इतीर्यते यस्मात् ।
तस्मात्प्राणस्यात्मत्वं युक्तं नो करणसंज्ञानां क्वापि । ४१ ॥

'भवत्यात्मा कथं प्राणो वायुरेवैष आन्तरः ।
बहिर्यात्यन्तरायाति भस्त्रिकावायुवन्मुहुः ॥ ४२ ॥

न हितं वाऽहितं वा स्वमन्यद्वा वेद किञ्चन ।
प्राणस्य भानं मनसि स्थिते सुप्ते न दृश्यते । ४३ ॥

मनस्तु सर्वं जानाति सर्ववेदनकारणम् ।
यत्तस्मान्मन एवात्मा प्राणस्तु न कदाचन ॥ ४४ ॥

सङ्कल्पवानहं चिन्तावानहं च विकल्पवान् ।
इत्याद्यनुभवादन्योऽन्तर आत्मा मनोमयः ।
इत्यादिश्रुतिसद्भावात् युक्ता मनस आत्मता ॥ ४५ ॥

"कथं मनस आत्मत्वं करणस्य दृगादिवत् ।
कर्तृप्रयोज्यं करणं न स्वयं तु प्रवर्तते ॥ ४६ ॥

मनःप्रयोक्ता यः कर्ता तस्यैवात्मत्वमर्हति ।
अहं कर्ताऽस्म्यहं भोक्ता सुखीत्यनुभवादपि ।
बुद्धिरात्मा भवत्येव बुद्धिधर्मोऽह्यहंकृतिः ॥ ४७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्योऽन्तर आत्मा विज्ञानमय इत्यब्रवीच्च निगमः।
मनसोऽपि च भिन्नं विज्ञानमयं कर्तृरूपमात्मानम् ॥ ४८ ॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च।
इत्यस्य कर्तृता श्रुत्या मुख्यतः प्रतिपाद्यते ॥ ४९ ॥

'बुद्धेरज्ञानकार्यत्वात् विनाशित्वात् प्रतिक्षणम्।
बुद्ध्यादीनां च सर्वेषामज्ञाने लयदर्शनात् ॥ ५० ॥

अज्ञोऽहमित्यनुभवात् आस्त्रीबालादिगोचरात्।
भवत्यज्ञानमेवात्मा न तु बुद्धिः कदाचन ॥ ५१ ॥

विज्ञानमयादन्यं त्वानन्दमयं परं तथात्मानम्।
अन्योऽन्तर आत्माऽऽनन्दमय इति वदति वेदोऽपि ॥

दुःखप्रत्ययशून्यत्वात् आनन्दमयता मता।
अज्ञाने सकलं सुप्तौ बुद्ध्यादि प्रविलीयते ॥ ५३ ॥

दुःखिनोऽपि सुषुप्त्यादौ आनन्दमयता ततः।
सुप्तौ किञ्चिन्न जानामीत्यनुभूतिश्च दृश्यते।
यत एवमतो युक्ता ह्यज्ञानस्यात्मता ध्रुवम् ॥' ५४ ॥

'कथमज्ञानमेवात्मा ज्ञानं चाप्युपलभ्यते।
ज्ञानाभावे कथं विद्युः अज्ञोऽहमिति चाज्ञताम् ॥ ५५ ॥

अस्वाप्सं सुखमेवाहं न जानाम्यत्र किञ्चन।
इत्यज्ञानमपि ज्ञानं प्रबुद्धेषु प्रदृश्यते ॥ ५६ ॥

प्रज्ञानघन एवानन्दमय इत्यपि श्रुतिः।
प्राब्रवीदुभयात्मत्वं आत्मनः स्वयमेव हि ॥ ५७ ॥

आत्माऽतश्चिज्जडतनुः खद्योत इव संमतः।
न केवलाज्ञानमयो घटकुड्यादिवत् जडः ॥ ५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानाज्ञानमयस्त्वात्मा कथं भवितुमर्हति ।
परस्परविरुद्धत्वात् तेजस्तिमिरवत्तयोः ॥ ५९ ॥

सामानाधिकरण्यं वा संयोगो वा समाश्रयः ।
तमःप्रकाशवद् ज्ञानाज्ञानयोर्न हि सिद्धयति ॥ ६० ॥

अज्ञानमपि विज्ञानं बुद्धिर्वाऽपि च तद्गुणाः ।
सुषुप्तौ नोपलभ्यन्ते यत्किञ्चिदपि वाऽपरम् ॥ ६१ ॥

मात्रादिलक्षणं किन्तु शून्यमेवोपलभ्यते ।
सुषुप्तौ नान्यदस्त्येव नाहमप्यासमित्यनु ॥ ६२ ॥

सुप्तोत्थितजनैः सर्वैः शून्यमेवानुस्मर्यते ।
यच्चतः शून्यमेवात्मा न ज्ञानाज्ञानलक्षणः ॥ ६३ ॥

वेदेनाप्यसदेवेदमग्र आसीदिति स्फुटम् ।
निरुच्यते यतस्तस्मात् शून्यस्यैवात्मता मता ॥ ६४ ॥

असन्नेव घटः पूर्वं जायमानः प्रदृश्यते ।
न हि कुम्भः पुरैवान्तः स्थित्वोदेति बहिर्मुखः ॥ ६५ ॥

यच्चस्मादसतः सर्वं सदिदं समजायत ।
ततः सर्वात्मना शून्यस्यैवात्मत्वं समर्हति' ॥ ६६ ॥

इत्येवं पण्डितंमन्यैः परस्परविरोधिभिः ।
तत्तन्मतानुरूपाल्पश्रुतियुक्त्यनुभूतिभिः ॥ ६७ ॥

निर्णीतमतजातानि खण्डितान्येव पण्डितैः ।
श्रुतिभिश्चाप्यनुभवैः बाधकैः प्रतिवादिनाम् । ६८ ॥

यतस्तस्मात्तु पुत्रादेः शून्यान्तस्य विशेषतः ।
प्रसाधितमनात्मत्वं श्रुतियुक्त्यनुभूतिभिः ॥ ६९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'बुद्ध्यादि सकलं सुप्तौ अनुलीनं स्वकारणे ।
अव्यक्ते वटवद्वीजे तिष्ठत्यविकृतात्मना ।
तिष्ठत्येव स्वरूपेण न तु शून्यायते जगत् ॥ ७० ॥

क्वचिदङ्कुररूपेण क्वचिद्बीजात्मना वटः ।
कार्यकारणरूपेण यथा तिष्ठत्यदस्तथा ॥ ७१ ॥

अव्याकृतात्मनाऽवस्थां जगतो वदति श्रुतिः ।
सुषुप्त्यादिषु तद्वेदं तर्ह्यव्याकृतमित्यपि ॥ ७२ ॥

इममर्थमविज्ञाय निर्णीतं श्रुतियुक्तिभिः ।
जगतो दर्शनं शून्यं इति प्राहुरतद्विदः ॥ ७३ ॥

नासतः सत उत्पत्तिः श्रूयते न च दृश्यते ।
उदेति नरशृङ्गात् किं खपुष्पात् किं भविष्यति ॥ ७४ ॥

कथमसतः सज्जायेतेति श्रुत्या निषिध्यते, तस्मात् ।
असतः सज्जननं नो घटते मिथ्यैव शून्यशब्दार्थः । ७५ ॥

नैवानुरूपकं लिङ्गं वक्ता वा नास्ति कश्चन ।
सुषुप्तिस्थितशून्यस्य बोद्धा को न्वात्मनः परः ॥ ७६ ॥

स्वेनानुभूतं स्वयमेव वक्ति स्वसुप्तिकाले स्थितशून्यभावम् ।
तत्र स्वसत्तामनवेक्ष्य मूढः स्वस्यापि शून्यत्वमयं ब्रवीति ॥ ७७ ॥

अवेद्यमानः स्वयमन्यलोकैः सौषुप्तिकं धर्ममवैति साक्षात् ।
बुद्ध्याद्यभावस्य च योऽत्र बोद्धा स एष आत्मा खलु निर्विकारः ॥

सर्वस्य दाहको वह्निः वह्नेर्नान्योऽस्ति दाहकः ।
यथा तथाऽऽत्मनो ज्ञातुर्ज्ञाता कोऽपि न दृश्यते ॥ ७९ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यभिज्ञायमानत्वं लिङ्गमत्रानुमापकम् ।
स्मर्यमाणस्य सद्भावे सुखमस्वाप्समित्यहम् ॥ ८० ॥

यत्रात्मनोऽकामयितृत्वबुद्धिः स्वप्नानपेक्षाऽपि च तत्सुषुप्तम् ।
इत्यात्मसद्भाव उदीर्यतेऽत्र श्रुत्याऽपि तस्मात् श्रुतिरत्र मानम् ॥

अकामयितृता स्वप्नादर्शनं घटते कथम् ।
अविद्यमानस्य ततः आत्मास्तित्वं प्रतीयते ॥ ८२ ॥

आत्मा सच्चिदानन्दलक्षणः ।

एतैः प्रमाणैरस्तीति ज्ञातः साक्षितया बुधैः ।
आत्माऽयं केवलः शुद्धः सच्चिदानन्दलक्षणः ॥ ८३ ॥

कालत्रयेऽप्यबाध्यत्वं सत्त्वं नित्यस्वरूपतः ।
शुद्धचैतन्यरूपत्वं चित्त्वं ज्ञानस्वरूपतः ।
अखण्डसुखरूपत्वात् आनन्दत्वमितीर्यते ॥ ८४ ॥

आयातासु गतासु शैशवमुखावस्थासु जाग्रन्मुखा-
स्वन्यास्वप्यखिलासु वृत्तिषु धियो दृष्टास्वदृष्टास्वपि ।
गङ्गाभङ्गपरंपरासु जलवत् सत्ताऽनुवृत्ताऽऽत्मनः
तिष्ठत्येव सदा स्थिराऽहमहमित्येकात्मना साक्षिणः ॥ ८५ ॥

सुखहेतुषु सर्वेषां प्रीतिः सावधिरीक्ष्यते ।
कदापि नावधिः प्रीतेः स्वात्मनि प्राणिनां क्वचित् ॥ ८६ ॥

एष एव प्रियतमः पुत्रादपि धनादपि ।
अन्यस्मादपि सर्वस्मादात्माऽयं परमान्तरः ॥ ८७ ॥

यत्प्रीत्या प्रीतिपात्रं तनुयुवतितनूजार्थमुख्यं स तस्मात्
प्रेयानात्माऽथ शोकास्पदमितरदतः प्रेय एतत्कथं स्यात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आर्याद्यं जीवितार्थी वितरति च वपुः स्वात्मनः श्रेय इच्छन्
तस्मादात्मानमेव प्रियमधिकमुपासीत विद्वान्न चान्यत् ॥ ८८ ॥

आनन्दरूपमात्मानं अज्ञात्वैव पृथग्जनः ।
बहिः सुखाय यतते न तु कश्चिद्विदन् बुधः । ८९ ॥

इष्टस्य वस्तुनो ध्यानदर्शनाद्युपभुक्तिषु ।
प्रतीयते य आनन्दः सर्वेषामिह देहिनाम् ॥ ९० ॥

स वस्तुधर्मो नो यस्मान्मनस्येवोपलभ्यते ।
अन्यत्र त्वन्यधर्माणामुपलम्भो न दृश्यते ॥ ९१ ॥

नाप्येष धर्मो मनसोऽसत्यर्थे तददर्शनात् ।
सत्यर्थेऽपि च नोदेति ह्यानन्दस्तूक्तलक्षणः ॥ ९२ ॥

तस्मान्न मानसो धर्मो निर्गुणत्वान्न चात्मनः ।
किन्तु पुण्यस्य सान्निध्यादिष्टस्यापि च वस्तुनः ॥ ९३ ॥

सत्वप्रधाने चित्तेऽस्मिंस्त्वात्मैव प्रतिबिम्बति ।
आनन्दलक्षणः स्वच्छे पयसीव सुधाकरः ॥ ९४ ॥

सोऽयमाभास आनन्दः चित्ते यः प्रतिबिम्बितः ।
पुण्योत्कर्षापकर्षाभ्यां भवत्युच्चावचः स्वयम् ।
सार्वभौमादिब्रह्मान्तं श्रुत्या यः प्रतिपादितः ॥ ९५ ॥

सुखमुच्चावचत्वेन क्षयिष्णुत्वभयेन च ।
भवेच्च दुःखं जन्तूनां ब्रह्मादिपदभाजिनाम् ॥ ९६ ॥

यो बिम्बभूत आनन्दः स आत्मानन्दलक्षणः ।
शाश्वतो निर्द्वयः पूर्णः नित्य एकोऽपि निर्भयः ॥ ९७ ॥

अविद्याकार्यकरणसंघातेषु पुरोदितः ।
आत्मा जाग्रत्यपि स्वप्ने न भवत्येष गोचरः ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थूलस्यापि च सूक्ष्मस्य दुःखरूपस्य कर्मणः ।
लये सुषुप्तौ स्फुरति प्रत्यगानन्दलक्षणः ॥ ९९ ॥

स्वयापि प्रत्यभिज्ञातं सुखमात्रत्वमात्मनः ।
सुषुप्तादुत्थितवता सुखमस्वाप्समित्यनु ॥ १०० ॥

धन्यैर्महात्मभिर्धीरैः ब्रह्मविद्भिः सदुत्तमैः ।
अपरोक्षतयैवात्मा समाधावनुभूयते ॥ १०१ ॥

सत्त्वं चित्त्वं तथाऽऽनन्दः स्वरूपं परमात्मनः ।
निर्गुणस्य गुणायोगात् गुणास्तु न भवन्ति ते ।
विशेषणं तु व्यावृत्त्यै भवेद् द्रव्यान्तरे सति ॥ १०२ ॥

अत एव सजातीयविजातीयादिलक्षणः ।
भेदो न विद्यते वस्तुन्यद्वितीये परात्मनि ॥ १०३ ॥

प्रपञ्चस्यापवादेन विजातीयकृता भिदा ।
नेष्यते तत्प्रकारं ते वक्ष्यामि शृणु सादरम् ॥ १०४ ॥

ब्रह्मणो विवर्तो जगत् ।

अहेर्गुणविवर्तस्य गुणमात्रत्ववत् सतः ।
विवर्तस्यास्य जगतः सन्मात्रत्वेन दर्शनम् ।
अपवाद इति प्राहुः अद्वैतब्रह्मदर्शिनः ॥ १०५ ॥

व्युत्क्रमेण तदुत्पत्तेर्द्रष्टव्यं सूक्ष्मबुद्धिभिः ।
प्रतीतस्यास्य जगतः सन्मात्रत्वं सुयुक्तिभिः ॥ १०६ ॥

चतुर्विधं स्थूलशरीरजातं तद्भोज्यमन्नादि तदाश्रयादि ।
ब्रह्माण्डमेतत् सकलं स्थविष्ठं ईक्षेत पञ्चीकृतभूतमात्रम् ॥

तत्रापि पञ्चीकृतभूतजातं शब्दादिभिः स्वस्वगुणैश्च सार्धम् ।
वपूंषि सूक्ष्माणि च सर्वमेतत् भवत्यपञ्चीकृतभूतमात्रम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदप्यपञ्चीकृतभूतजातं रजस्तमस्सत्त्वगुणैश्च सार्धम् ।
अव्यक्तमात्रं भवति स्वरूपतः साभासमव्यक्तमिदं स्वयं च ॥

आधारभूतं यदखण्डमाद्यं शुद्धं परं ब्रह्म सदैकरूपम् ।
सन्मात्रमेवास्ति अथ नो विकल्पः सतः परं केवलमेव वस्तु ॥

जीवो ब्रह्म, जगत मिथ्या ।

चैतन्यस्यैकरूपत्वात भेदो युक्तो न कर्हिचित् ।
जीवत्वं च मृषा ज्ञेयं रज्ज्वां सर्पग्रहो यथा ॥ १११ ॥

उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ।
तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥ ११२ ॥

ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।
कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ११३ ॥

अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधकः ॥ ११४ ॥

स्वप्नो जागरणेऽलीकः स्वप्नेऽपि न हि जागरः ।
द्वयमेव लये नास्ति लयोऽपि ह्युभयोर्न च ॥ ११५ ॥

त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥ ११६ ॥

यथा मृदि घटो नाम कनके कुण्डलाभिधा ।
शुक्तौ हि रजतख्यातिः जीवशब्दस्तथा परे ॥ ११७ ॥

यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।
पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ११८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ।
वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभाति भासुरम् ॥ ११९ ॥

सदैवात्मा विशुद्धोऽपि ह्यशुद्धो भाति वै सदा ।
यथैव द्विविधा रज्जुः ज्ञानिनोऽज्ञानिनोऽनिशम् ॥ १२० ॥

यथैव मृन्मयः कुम्भः तद्वद्देहोऽपि चिन्मयः ।
आत्मानात्मविभागोऽयं मुधैव क्रियते बुधैः ॥ १२१ ॥

अद्वैतं सत्यं वेदान्तवेद्यम् ।

नापेक्षते यदन्यद्यदपेक्षन्तेऽखिलानि मानानि ।
वाक्यं तन्निगमानां मानं ब्रह्माद्यतीन्द्रियावगतौ ॥ १२२ ॥

अंशद्वयवति निगमे साधयति द्वैतमेव कोऽप्यंशः ।
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंशः ॥ १२३ ॥

अद्वैतमेव सत्यं तस्मिन्द्वैतं न सत्यमध्यस्तम् ।
रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ।।१२४।।

आरोपितं यदि स्यादद्वैतं वस्त्ववस्तुनि द्वैते ।
तदयुक्तमेव यस्मात्सत्येऽध्यासो भवत्यसत्यानाम् ॥ १२५ ॥

यद्यारोपणमुभयोः तद्व्यतिरिक्तस्य कस्यचिदभावात् ।
आरोपणं न शून्ये तस्मादद्वैतसत्यता ग्राह्या ॥ १२६ ॥

प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ।
द्वैतं न प्रतिपाद्यं तस्य स्वत एव लोकसिद्धत्वात् ॥ १२७ ॥

निगमगिरा प्रतिपाद्यं वस्तु यदानन्दरूपमद्वैतम् ।
स्वाभाविकं स्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ १२८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वाभाविकं यदि स्यात् जीवत्वं तस्य विशदविद्यास्तेः ।
सकृदपि न तद्विनाशं गच्छेदुष्णप्रकाशवद्वह्नेः ॥ १२९ ॥

यद्वद्यो रसविद्धं काञ्चनतां याति तद्वदेवासौ ।
जीवः साधनशक्त्या परतां यातीति केचिदिच्छन्ति ॥ १३० ॥

तदिदं भवति न युक्तं गतवति तस्मिंश्चिरेण रसवीर्ये ।
प्रतिपद्यते प्रणाशं हैमो वर्णोऽप्ययःसमारूढः ॥ १३१ ॥

जीवत्वमपि तथेदं बहुविधसुखदुःखलक्षणोपेतम् ।
गतमिव साधनशक्त्या प्रतिभात्येव प्रयाति न विनाशम् ॥

यदि वा परेण साम्यं जीवश्चेद्व्रजति साधनबलेन ।
कालेन तदपि कियता नश्यत्येवेति निश्चितं सकलैः ॥ १३३ ॥

तस्मात्परं स्वकीयं देहं मोहात्मकं च संसारम् ।
स्वज्ञानेन ग्रसित्वा पूर्णः स्वयमेव शिष्यते नान्यत् ॥ १३४ ॥

सच्चिदानन्दकन्दाय जगदङ्कुरहेतवे ।
सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥ १३५ ॥

इति श्रीशङ्करविजयमकरन्दे पञ्चविंश आस्वादः समाप्तः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ षड्विंश आस्वादः ॥

### भगवत्पादानामुपदेशः (५)

### वेदपूर्वोत्तरकाण्डप्रतिपाद्यांशभेदः परस्परं अंगांगित्वाभावश्च

कारुण्यसारसान्द्राः कांक्षितवरदानकल्पकविशेषाः ।
श्रीगुरुचरणकटाक्षाः शिशिराः शमयन्ति चित्तसन्तापम् ॥ १ ॥

सत्यं ज्ञानमनन्तं प्रकृतं परमात्मरूपमद्वैतम् ।
अवबोधयन्ति निखिलाः श्रुतयः स्मृतिभिः समं समस्ताभिः ॥

अद्वैतबोधकानां निखिलानां निगमवाक्यजालानाम् ।
वाक्यान्तराणि सकलान्यभिधीयन्तेऽस्य शेषभूतानि ॥ ३ ॥

यस्मिन्मिहिरवदुदिते तिमिरवदपयान्ति कर्तृतादीनि ।
ज्ञानं विरहितभेदं कथमिव तद्भवति तत्त्वमस्यादेः ॥ ४ ॥

कर्मप्रकरणनिष्ठं ज्ञानं कर्माङ्गमिष्यते प्राज्ञैः ।
भिन्नप्रकरणभाजः कर्माङ्गत्वं कथं भवेज्ज्ञप्तेः ॥ ५ ॥

---

सङ्कलने मूलम् — स्वात्मनिरूपणतः १-११, ४७-५१, सर्ववेदान्तसिद्धान्तसारसङ्ग्रहतः १२-४६, विवेकचूडामणितः ५२-५६, ६६-१०३, १२८-१३०, १३८-१५२, १५६, दुर्वासनाप्रतीकारदशकतः ५७-६५, प्रबोधसुधाकरतः १०४-१२७, स्वात्मप्रकाशिकातः १३१, स्वरूपानुसन्धानतः १३२, मायापञ्चकतः १३३-१३४, प्रौढानुभूतितः १३५, ब्रह्मज्ञानावलीमालातः १३६, निर्वाणमञ्जरीतः १३७, उपदेशसाहस्रीपद्यप्रबन्धतः १५३, विष्णुसहस्रनामभाष्यतः १५४-१५५.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधिकारिविषयभेदौ कर्मज्ञानात्मकावुभौ काण्डौ ।
एवं सति कथमनयोरङ्गाङ्गित्वं परस्परं घटते ॥ ६ ॥

ज्ञानं कर्मणि न स्यात् ज्ञाने कर्मेदमपि तथा न स्यात् ।
तत्कथमनयोरुभयोः तपनतमोवत् समुच्चयो घटते ॥ ७ ॥

तस्मान्मोहनिवृत्तौ ज्ञानं न सहायमन्यदर्थयते ।
यद्वद्घनतरतिमिरप्रकरपरिध्वंसने सहस्रांशुः । ८ ॥

सत्यं जगदिति भानं संसृतये स्यादपक्वचित्तानाम् ।
तस्मादसत्यमेतत् निखिलं प्रतिपादयन्ति निगमान्ताः ॥ ९ ॥

परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः ।
ब्रह्मैवेदं सर्वं जगदिति भूयः प्रबोधयन्त्येते ॥ १० ॥

दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ।
जगति तथा परमात्मा परमात्मन्यपि जगत् तिरोधत्ते ॥

तत्त्वमस्यादिवाक्यार्थः ।

अत एव मुहुः श्रुत्याऽप्येकत्वं प्रतिपाद्यते ।
ब्रह्मात्मनोस्तत्त्वमसीत्यद्वयत्वोपपत्तये ॥ १२ ॥

प्रत्यक्षादिविरोधेन वाच्ययोर्नोपपद्यते ।
तत्त्वंपदार्थयोरैक्यं लक्ष्ययोरेव सिध्यति ॥ १३ ॥

सर्वेशत्वस्वतन्त्रत्वसर्वज्ञत्वादिभिर्गुणैः ।
सर्वोत्तमः सत्यकामः सत्यसङ्कल्प ईश्वरः ॥ १४ ॥

तत्पदार्थस्त्वमर्थस्तु किञ्चिज्ज्ञो दुःखजीवनः ।
संसार्ययं तद्गतिको जीवः प्राकृतलक्षणः ॥ १५ ॥

कथमेकत्वमनयोर्घटते विपरीतयोः ।
प्रत्यक्षेण विरोधोऽयं उभयोरुपलभ्यते ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षादिविरोधः स्यादित्यैक्ये परित्यक्ते ।
श्रुतिवचनविरोधो भवति महान् स्मृतिवचनविरोधश्च ॥

अखण्डैकरसत्वेन वाक्यार्थः श्रुतिसम्मतः ।
स्थूलसूक्ष्मप्रपञ्चस्य सन्मात्रत्वं पुनः पुनः ॥ १८ ॥

दर्शयित्वा सुषुप्तौ सद्ब्रह्माभिन्नत्वमात्मनः ।
उपपाद्य सदेकत्वं प्रदर्शयितुमिच्छया ॥ १९ ॥

ऐतदात्म्यमिदं सर्वमित्युक्त्वैव सदात्मनोः ।
ब्रवीति श्रुतिरेकत्वं ब्रह्मणोऽद्वैतसिद्धये ॥ २० ॥

विरुद्धांशपरित्यागात् प्रत्यक्षादिर्न बाधते ।
अविरुद्धांशग्रहणात् न श्रुत्यापि विरुध्यते ॥ २१ ॥

लक्षणा ह्युपगन्तव्या ततो वाक्यार्थसिद्धये ।
भागं विरुद्धं सन्त्यज्याविरोधो लक्ष्यते यया ।
सा भागलक्षणेत्याहुः लक्षणज्ञा विचक्षणाः ॥ २२ ॥

परोक्षत्वापरोक्षत्वादिविशिष्टचितोर्द्वयोः ।
एकत्वरूपवाक्यार्थविरुद्धांशमुपस्थितम् ॥ २३ ॥

परोक्षत्वापरोक्षत्वसर्वज्ञत्वादिलक्षणम् ।
बुद्ध्यादिस्थूलपर्यन्तं आविद्यकमनात्मकम् ॥ २४ ॥

परित्यज्याविरुद्धांशं शुद्धचैतन्यलक्षणम् ।
लक्षयत्यनया सम्यक् भागलक्षणया ततः ॥ २५ ॥

शरीरतद्योगतदीयधर्माद्यारोपणं भ्रान्तिवशात् त्वयीदम् ।
न वस्तुतः किञ्चिदतस्त्वजस्त्वं मृत्योर्भयं क्वास्ति तवासि पूर्णः ॥

नित्यानन्दाखण्डैकरसं निष्कलमक्रियमस्तविकारम् ।
प्रत्यगभिन्नं परमव्यक्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अखण्डाकारवृत्तिः, तत्साधनं च ।

ब्रह्मैवाहमहं ब्रह्म निर्गुणं निर्विकल्पकम् ।
इत्येवाखण्डया वृत्त्या तिष्ठ ब्रह्मणि निष्क्रिये ॥ २८ ॥

अखण्डाकारवृत्तिः सा चिदाभाससमन्विता ।
आत्माभिन्नं परं ब्रह्म विषयीकृत्य केवलम् ।
बाधते तद्गताज्ञानं यदावरणलक्षणम् ॥ २९ ॥

प्रज्ञामान्द्यं भवेद्येषां तेषां न श्रुतिमात्रतः ।
स्यादखण्डाकारवृत्तिः विना तु मननादिना ॥ ३० ॥

सर्ववेदान्तवाक्यानां षड्भिर्लिङ्गैः सदद्वये ।
परे ब्रह्मणि तात्पर्यनिश्चयं श्रवणं विदुः ॥ ३१ ॥

श्रुतस्यैवाद्वितीयस्य वस्तुनः प्रत्यगात्मनः ।
वेदान्तवाक्यानुगुणयुक्तिभिस्त्वनुचिन्तनम् ।
मननं तच्छ्रुतार्थस्य साक्षात्करणकारणम् ॥ ३२ ॥

विजातीयशरीरादिप्रत्ययत्यागपूर्वकम् ।
सजातीयात्मवृत्तीनां प्रवाहकरणं यथा ।
तैलधारावदच्छिन्नवृत्त्या तद् ध्यानमिष्यते ॥ ३३ ॥

तावत्कालं प्रयत्नेन कर्तव्यं श्रवणं सदा ।
प्रमाणसंशयो यावत् स्वबुद्धेर्न निवर्तते ॥ ३४ ॥

प्रमेयसंशयो यावत् तावत्तु श्रुतियुक्तिभिः ।
आत्मयाथार्थ्यनिश्चित्यै कर्तव्यं मननं मुहुः ॥ ३५ ॥

विपरीतात्मधीर्यावत् न विनश्यति चेतसि ।
तावन्निरन्तरं ध्यानं कर्तव्यं मोक्षमिच्छता ॥ ३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सविकल्पो निर्विकल्प इति द्वेधा निगद्यते ।
समाधिः, सविकल्पस्य लक्षणं वच्मि तत् शृणु ।। ३७ ।।

ज्ञात्राद्यविलयेनैव ज्ञेये ब्रह्मणि केवले ।
तदाकाराकारितया चित्तवृत्तेरवस्थितिः ।
सद्भिः स एव विज्ञेयः समाधिः सविकल्पकः ।। ३८ ।।

मृद एवावभानेऽपि मृण्मयद्विपभानवत् ।
सन्मात्रवस्तुभानेऽपि त्रिपुटी भाति सन्मयी ।
समाधिरत एवायं सविकल्प इतीर्यते ।। ३९ ।।

ज्ञात्रादिभावमुत्सृज्य ज्ञेयमात्रस्थितिर्दृढा ।
मनसो निर्विकल्पः स्यात् समाधिर्योगसंज्ञितः ।। ४० ।।

जले निक्षिप्तलवणं जलमात्रतया स्थितम् ।
पृथङ् न भाति किं त्वंभ एकमेवावभासते ।
यथा तथैव सा वृत्तिः ब्रह्ममात्रतया स्थिता ।। ४१ ।।

पृथङ् न भाति ब्रह्मैवाद्वितीयमवभासते ।
ज्ञात्रादिकल्पनाभावात् मतोऽयं निर्विकल्पकः ।। ४२ ।।

वृत्तेः सद्भावबाधाभ्यामुभयोर्भेद इष्यते ।
समाधिसुप्त्योर्ज्ञानं चाज्ञानं सुप्त्यां तु नेष्यते ।। ४३ ।।

सविकल्पो निर्विकल्पः समाधी द्वाविमौ हृदि ।
मुमुक्षोर्यत्नतः कार्यौ विपरीतनिवृत्तये । ४४ ।।

सविकल्पसमाधिं यो दीर्घकालं निरन्तरम् ।
सत्कारपूर्वकं कुर्यात् निर्विकल्पोऽस्य सिध्यति ।। ४५ ।।

न प्रमादोऽत्र कर्तव्यो विदुषा मोक्षमिच्छता ।
प्रमादे जृम्भते माया सूर्यापाये तमो यथा ।। ४६ ।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समाधौ क्रियमाणे तु विघ्ना आयान्ति वै बलात् ।
अनुसन्धानराहित्यं आलस्यं भोगलालसा ॥ ४७ ॥

लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता ।
एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥ ४८ ॥

भावितं तीव्रवेगेन वस्तु यन्निश्चयात्मना ।
पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ ४९ ॥

अदृश्यं भावरूपं च सर्वमेतच्चिदात्मकम् ।
सावधानतया नित्यं स्वात्मानं भावयेद्बुधः ॥ ५० ॥

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।
विद्वान्नित्यसुखे तिष्ठेत् धिया चिद्रसपूर्णया ॥ ५१ ॥

वासनाक्षयोपायाः ।

ज्ञाते वस्तुन्यपि बलवती वासनाऽनादिरेषा
कर्ता भोक्ताऽप्यहमिति दृढा याऽस्य संसारहेतुः ।
प्रत्यग्दृष्ट्याऽऽत्मनि निवसता साऽपनेया प्रयत्नात्
मुक्तिं प्राहुस्तदिह मुनयो वासनातानवं तत् ॥ ५२ ॥

अहं ममेति यो भावो देहाक्षादावनात्मनि ।
अध्यासोऽयं निरस्तव्यो विदुषा स्वात्मनिष्ठया ॥ ५३ ॥

लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ ५४ ॥

संसारकारागृहमोक्षमिच्छोः अयोमयं पादनिबद्धशृङ्खलम् ।
वदन्ति तज्ज्ञाः पटुवासनात्रयं यस्माद्विमुक्तः समुपैति मुक्तिम् ॥

जलादिसंपर्कवशात्प्रभूतदुर्गन्धधूतागरुदिव्यवासना ।
संघर्षणेनैव विभाति सम्यक् विधूयमाने सति बाह्यगन्धे ॥ ५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातर्वैदिककर्मतस्तदनु सद्वेदान्तसंचिन्तया
पश्चाद्भारतमोक्षधर्ममननाद् वासिष्ठरामायणात् ।
सायं भागवतार्थदिव्यकथया रात्रौ निदिध्यासनात्
कालो गच्छति नः शरीरमरणं प्रारब्धकण्ठार्पितम् ॥ ५७ ॥

अज्ञानं त्यज हे मनोऽपि च सदा ब्रह्मात्मसंभावनात्
संकल्पान्सकलानपि त्यज जगन्मिथ्यात्वसंभावनात् ।
कामान्साधनसाध्यदुःखनिवहध्यानादजस्रं त्यज
क्रोधं तु क्षमया सदा जहि बलात् लोभं तु सन्तोषतः ॥

जिह्वोपस्थसुखभ्रमं त्यज मनः पर्यन्तदुःखेक्षणात्
पारुष्यं मृदुभाषणात् त्यज वृथालापश्रमं मौनतः ।
दुःसंगं त्यज साधुसंगमबलात् गर्वन्तु भङ्गेक्षणात्
निन्दादुःखमनिन्द्यदेवमुनिदुर्निन्दाकथासंस्मृतेः ॥ ५९ ॥

निद्रां सात्त्विकवस्तुसेवकतया स्वप्नं सदा जागरात्
रोगान् जीर्णमिताशनाज्जहि सदा दैन्यं महाधैर्यतः ।
अर्थानर्थपरिग्रहं त्यज वृथा संसर्गसन्त्यागतः
स्त्रीवाञ्छां त्यज दोषदर्शनबलात् दुःखं सुखात्मेक्षणात् ॥ ६० ॥

दारासक्तिमनादरात् सुतधनासक्तिं त्वनित्यत्वतः
स्नेहं मोहविसर्जनात् करुणया नैष्ठुर्यमन्तस्त्यज ।
औदासीन्यसमाश्रयात् त्यज सुहृन्मित्रादिदुर्वासनाः
सर्वानर्थकरान् दशेन्द्रियरिपूनेकान्तवासाज्जहि ॥ ६१ ॥

आलस्यं त्वरया श्रमं शमधिया तन्द्रां समुत्थानतः
भेदभ्रान्तिमभेददर्शनबलात् मिथ्यात्मतां सत्यतः ।
नर्मोक्तिं निजनर्मकर्मकथया द्रोहं स्वसाम्येक्षणात्
आक्रोशं कुशलोक्तितस्त्यज मनः [illegible] भयम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतार्थस्मरणं वृथाश्रमाधिया प्राप्तं तु हानेक्षणात्
भाव्यर्थव्यसनं सदा त्यज मनः प्रारब्धचोद्येक्षणात् ।
शिष्टाशिष्टजनक्रियास्त्यज वृथा कष्टानुसन्धानतः
स्नेहद्वेषकथास्सदा त्यज जनं मस्मान्ततासंस्मृतेः ॥ ६३ ॥

अध्यात्मानुभवान्मनस्त्यज महत्पापं स्वभावेक्षणात्
वैषम्यं समभावतः परकथाविक्षोभमक्षामतः ।
धिक्कारादिभवं तु दुःखमानर्थं तद्योग्यताभावनात्
तज्ज्ञातान्यशुचः क्षमस्व कृपया कर्मक्षयात्ताडनम् ॥ ६४ ॥

धैर्यैरावतशान्तिधेनुदमसन्मन्दारवृन्दं सदा
मैत्र्याद्यप्सरसं विवेकतुरगं सन्तोषचिन्तामणिम् ।
आत्मज्ञानमहामृतं समरसं नैराश्यचन्द्रोदयं
वेदान्तार्णवमाश्रयन्ननुदिनं सेवस्व मुक्तिश्रियम् ॥ ६५ ॥

बन्धविमुक्तिसाधनानि ।

निगृह्य शत्रोरहमोऽवकाशः क्वचिन्न देयो विषयानुचिन्तया ।
स एव सञ्जीवनहेतुरस्य प्रक्षीणजम्बीरतरोरिवाम्बु ॥ ६६ ॥

वासनावृद्धितः कार्यं कार्यवृद्ध्या च वासना ।
वर्धते सर्वथा पुंसः संसारो न निवर्तते ॥ ६७ ॥

क्रियानाशे भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ।
वासनाप्रक्षयो मोक्षः स जीवन्मुक्तिरिष्यते ॥ ६८ ॥

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन ।
प्रमादो मृत्युरित्याह भगवान् ब्रह्मणः सुतः ॥ ६९ ॥

विषयाभिमुखं दृष्ट्वा विद्वांसमपि विस्मृतिः ।
विक्षेपयति धीदोषैः योषा जारमिव प्रियम् ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्तर्बहिः स्वं स्थिरजङ्गमेषु ज्ञानात्मनाऽऽधारतया विलोक्य ।
त्यक्ताखिलोपाधिरखण्डरूपः पूर्णात्मना यः स्थित एव मुक्तः ॥ ७१ ॥

सर्वात्मना बन्धविमुक्तिहेतुः सर्वात्मभावान्न परोऽस्ति कश्चित् ।
दृश्याग्रहे सत्युपपद्यतेऽसौ सर्वात्मभावोऽस्य सदात्मनिष्ठया ॥ ७२ ॥

आरूढशक्तेरहमो विनाशः कर्तुं न शक्यः सहसापि पण्डितैः ।
ये निर्विकल्पाख्यसमाधिनिश्चलाः तानन्तराऽनन्तभवा हि वासनाः ॥

सम्यग्विवेकः स्फुटबोधजन्यो विभज्य दृग्दृश्यपदार्थतत्त्वम् ।
छिनत्ति मायाकृतमोहबन्धं यस्माद्विमुक्तस्य पुनर्न संसृतिः ॥ ७४ ॥

आवरणस्य निवृत्तिर्भवति च सम्यक्पदार्थदर्शनतः ।
मिथ्याज्ञानविनाशः तद्वद्विक्षेपजनितदुःखनिवृत्तिः ॥ ७५ ॥

एतत्त्रितयं दृष्टं सम्यग्रज्जुस्वरूपविज्ञानात् ।
तस्माद्वस्तुसतत्त्वं ज्ञातव्यं बन्धमुक्तये विदुषा ॥ ७६ ॥

सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया ।
कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते ॥ ७७ ॥

निरन्तराभ्यासवशात्तदित्थं पक्कं मनो ब्रह्मणि लीयते यदा ।
तदा समाधिः स विकल्पवर्जितः स्वतोऽद्वयानन्दरसानुभावकः ॥७८॥

योगस्य प्रथमं द्वारं वाङ्निरोधोऽपरिग्रहः ।
निराशा च निरीहा च नित्यमेकान्तशीलता ॥ ७९ ॥

वाचं नियच्छात्मनि तं नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि ।
तं चापि पूर्णात्मनि निर्विकल्पे विलाप्य शान्तिं परमां भजस्व ॥

संसिद्धस्य फलं त्वेतत् जीवन्मुक्तस्य योगिनः ।
बहिरन्तस्सदानन्दरसास्वादनमात्मनि ॥ ८१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैराग्यस्य फलं बोधः बोधस्योपरतिः फलम् ।
स्वानन्दानुभवाच्छान्तिः एषैवोपरतेः फलम् ॥ ८२ ॥

निवृत्तिः परमा तृप्तिः आनन्दोऽनुपमः स्वतः ।
दृष्टदुःखेष्वनुद्वेगः विद्यायाः प्रस्तुतं फलम् ॥ ८३ ॥

वासनानुदयो भोग्ये वैराग्यस्य तदाऽवधिः ।
अहंभावोदयाभावो बोधस्य परमावधिः ।
लीनवृत्तेरनुत्पत्तिः मर्यादोपरतेस्तु सा ॥ ८४ ॥

ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी ।
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ८५ ॥

ब्रह्मविदः संसारनाशक्रमः ।

विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः ।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥ ८६ ॥

प्राचीनवासनावेगादसौ संसरतीति चेत् ।
न, सदेकत्वविज्ञानान्मन्दीभवति वासना ॥ ८७ ॥

निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते ।
ब्रवीति श्रुतिरेतस्य प्रारब्धं फलदर्शनात् ॥ ८८ ॥

अहं ब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम् ।
संचितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥ ८९ ॥

स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा ।
न श्लिष्यते यतिः किञ्चित्कदाचित् भाविकर्मभिः ॥ ९० ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानोदयात्पुरारब्धं कर्म ज्ञानान्न नश्यति ।
अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ ९१ ॥

प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः
सम्यग्ज्ञानहुताशनेन विलयः प्राक् संचिताागामिनाम् ।
ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये सर्वदा संस्थिताः
तेषां तत्त्रितयं नहि क्वचिदपि, ब्रह्मैव ते निर्गुणम् ॥ ९२ ॥

उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः ।
प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसंबन्धकथेव जाग्रतः ॥ ९३ ॥

कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम् ।
नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः ॥ ९४ ॥

---

(९२) 'ज्ञानस्यैकरूपत्वेऽपि समाधिप्रकर्षेण ब्रह्मवित्, ब्रह्मविद्वरः, ब्रह्मविद्वरीयान्, ब्रह्मविद्वरिष्ठ इति सत्त्वापत्त्यसंसक्तिपदार्थाभावनातुर्यगेति भूमिकानुसारेण समुपजातब्रह्मसाक्षात्कारा व्यवह्रियन्ते । तत्र तुर्यगाख्य-भूमिकां गतस्य ब्रह्मविद्वरिष्ठस्य केवलनिर्गुणब्रह्मरूपत्वात् परकृतप्रबोधोऽपि नास्तीति त्रिविधमपि कर्म नास्ति । ब्रह्मविद्वरीयसः परकृतप्रबोधे प्रपञ्चभानं, तदा प्रारब्धं व्याप्रियेत, यथा प्रह्लादस्य महाविष्णु-पाञ्चजन्यरवश्रवणेन समाधेर्व्युत्थानम् । ब्रह्मविद्वरस्य स्थितप्रज्ञस्यापि कर्मवशात् स्वयं व्युत्थितस्य सुखदुःखादिभानं गीतासु स्पष्टं प्रतीयते "स्थितप्रज्ञस्य का भाषा" इत्यर्जुनप्रश्नस्योत्तरेण । ज्ञानपरि-पाकार्थं स्वीकृतसंन्यासाः स्वोपदेशेन जनकादीनामुत्पादितब्रह्मसाक्षात्काराः याज्ञवल्क्यादयो ब्रह्मविदः । तादृशानां विदां ज्ञानिनां ज्ञानप्रारब्धयो-र्मध्ये प्रारब्धं बलवत्तरं खलु प्रसिद्धम् । तस्य प्रारब्धकर्मणो भोगेन क्षयः नाशः ।' इत्येतच्छ्लोकव्याख्याने श्रृङ्गगिरि जगद्गुरु श्रीचन्द्र-शेखरभारतीस्वामिपादाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजो नित्य इति ब्रूते श्रुतिरेषा त्वमोघवाक् ।
तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥ ९५ ॥

प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥ ९६ ॥

शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि ।
अध्यस्तस्य कुतः सत्त्वं असत्त्वस्य कुतो जनिः ।
अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ॥ ९७ ॥

ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ।
तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् ॥ ९८ ॥

समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ।
न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥ ९९ ॥

यतः श्रुतेरभिप्रायः परमार्थैकगोचरः ।
परिपूर्णमनाद्यन्तं अप्रमेयमविक्रियम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ १०० ॥

स्वस्याविद्याबन्धसंबन्धमोक्षात् सत्यज्ञानानन्दरूपात्मलब्धौ ।
शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चान्तस्सिद्धा स्वानुभूतिः प्रमाणम् ॥

बन्धो मोक्षश्च तृप्तिश्च चिन्तारोग्यक्षुधादयः ।
स्वेनैव वेद्याः यज्ज्ञानं परेषामानुमानिकम् ॥ १०२ ॥

तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा ।
प्रज्ञयैव तरेद्विद्वान् ईश्वरानुगृहीतया ॥ १०३ ॥

सगुणोपासनायाः ज्ञानसाधनता ।

चित्ते सत्त्वोत्पत्तौ तटिदिव बोधोदयो भवति ।
तर्ह्येव स स्थिरः स्यात् यदि चित्तं शुद्धिमुपयाति ॥ १०४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुद्ध्यति हि नान्तरात्मा कृष्णपदाम्भोजभक्तिमृते ।
वसनमिव क्षारोदैः भक्त्या प्रक्षाल्यते चेतः । १०५ ॥

यद्वत्समलादर्शे सुचिरं भस्मादिना शुद्धे ।
प्रतिफलति वक्त्रमुच्चैः शुद्धे चित्ते तथा ज्ञानम् । १०६ ॥

मूर्तं चैवामूर्तं द्वे एव ब्रह्मणो रूपे ।
इत्युपनिषत्तयोर्वा द्वौ भक्तौ भगवदुपदिष्टौ । १०७ ॥

क्लेशादक्लेशाद्वा मुक्तिः स्यादेतयोर्मध्ये ।
स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुपदिष्टा ॥ १०८ ॥

स्वाश्रमधर्माचरणं कृष्णप्रतिमार्चनोत्सवो नित्यम् ।
विविधोपचारकरणैर्हरिदासैः संगमः शश्वत् ॥ १०९ ॥

ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम् ।
यदुपतिकथावियोगे व्यर्थं गतमायुरिति चिन्ता ॥ ११० ॥

एवं कुर्वति भक्तिं कृष्णकथानुग्रहोत्पन्ना ।
समुदेति सूक्ष्मभक्तिः यस्यां हरिरन्तराविशति ॥ १११ ॥

स्मृतिसत्पुराणवाक्यैः यथा श्रुतायां हरेर्मूर्तौ ।
मानसपूजाभ्यासो विजननिवासेऽपि तात्पर्यम् ॥ ११२ ॥

सत्यं समस्तजन्तुषु कृष्णस्यावस्थितेर्ज्ञानम् ।
अद्रोहो भूतगणे ततस्तु भूतानुकम्पा स्यात् ॥ ११३ ॥

ममताशून्यत्वमतो निरहङ्कारत्वमक्रोधः ।
वचने चानवकाशः कृष्णस्मरणेन शाश्वती शान्तिः ॥ ११४ ॥

केनापि गीयमाने हरिगीते वेणुनादे वा ।
आनन्दाविर्भावो युगपत्स्यात् हृष्टसात्त्विकोद्रेकः ॥ ११५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मिन्ननुभवति मनः प्रगृह्यमाणं परात्मसुखम् ।
स्थिरतां याते तस्मिन् याति मदोन्मत्तदन्तिदशाम् ॥ ११६ ॥

जन्तुषु भगवद्भावं भगवति भूतानि पश्यति क्रमशः ।
एतादृशी दशा चेत् तदैव हरिदाससर्वस्वः स्यात् ॥ ११७ ॥

भूतेष्वन्तर्यामी ज्ञानमयः सच्चिदानन्दः ।
प्रकृतेः परः परात्मा यदुकुलतिलकः स एवायम् ॥ ११८ ॥

ननु सगुणो दृश्यतनुः तथैकदेशादिवासश्च ।
स कथं परात्मा प्राकृतवद्रागरोषयुतः ॥ ११९ ॥

इतरे दृश्यपदार्थाः लक्ष्यन्तेऽनेन चक्षुषा सर्वे ।
भगवाननया दृष्ट्या न लक्ष्यते ज्ञानदृग्गम्यः ॥ १२० ॥

यद्यपि साकारोऽयं तथैकदेशी विभाति यदुनाथः ।
सर्वगतः सर्वात्मा तथाप्ययं सच्चिदानन्दः ॥ १२१ ॥

आश्रितमात्रं पुरुषं स्वाभिमुखं कर्षति श्रीशः ।
लोहमपि चुम्बकाश्मा संमुखमात्रं जडं यद्वत् ॥ १२२ ॥

अयमुत्तमोऽयमधमो जात्या रूपेण संपदा वयसा ।
श्लाघ्योऽश्लाघ्यो वेत्थं न वेत्ति भगवाननुग्रहावसरे ॥

यद्यपि सर्वत्र समस्तथापि नृहरिस्तथाऽप्येते ।
भक्ताः परमानन्दे रमन्ति सदयावलोकेन ॥ १२४ ॥

सुतरामनन्यशरणाः क्षीराद्याहारमन्तरा यद्वत् ।
केवलया स्नेहदृशा कच्छपतनयाः प्रजीवन्ति ॥ १२५ ॥

यद्यपि गगनं शून्यं तथाऽपि जलदामृतांशुरूपेण ।
चातकचकोरनाम्नोर्दृढभावात् पूरयत्याशाम् ॥ १२६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सद्भक्तिजुषां पुंसां दृग्वाङ्मनसामगोचरोऽपि हरिः ।
कृपया फलत्यकस्मात् सत्यानन्दामृतेन विपुलेन ॥ १२७ ॥

जीवन्मुक्तस्य आनन्दानुभवः ।

इति गुरुवचनाच्छ्रुतिप्रमाणात् परमवगम्य स तत्त्वमात्मयुक्त्या ।
प्रशमितकरणः समाहितात्मा क्वचिदचलाकृतिरात्मनिष्ठितोऽभूत् ॥

कञ्चित्कालं समाधाय परे ब्रह्मणि मानसम् ।
व्युत्थाय परमानन्दादिदं वचनमब्रवीत् ॥ १२९ ॥

धन्योऽहं कृतकृत्योऽहं विमुक्तोऽहं भवग्रहात् ।
नित्यानन्दस्वरूपोऽहं पूर्णोऽहं त्वदनुग्रहात् ॥ १३० ॥

चिदमृतसुखराशौ चित्तफेनं विलीनं
क्षयमधिगत एवं वृत्तिचञ्चत्तरङ्गः ।
स्तिमितसुखसमुद्रो निर्विचेष्टः सुपूर्णः
कथमिह मम दुःखं सर्वदैकोऽहमस्मि ॥ १३१ ॥

यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १३२ ॥

निरुपमनित्यनिरंशकेऽप्यखण्डे मयि चिति सर्वविकल्पनादिशून्ये ।
घटयति जगदीशजीवभेदं त्वघटितघटनापटीयसी माया ॥ १३३ ॥

सुखचिदखण्डविबोधमद्वितीयं वियदनलादिविनिर्मिते नियोज्य ।
भ्रमयति भवसागरे नितान्तं त्वघटितघटनापटीयसी माया ॥ १३४ ॥

निर्द्वैतोऽस्म्यहमस्मि निर्मलचिदाकाशोऽस्मि पूर्णोऽस्म्यहं
निर्देहोऽस्मि निरिन्द्रियोऽस्मि नितरां निष्प्राणवर्गोऽस्म्यहम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्मुक्ताशुभमानसोऽस्मि विगलद्विज्ञानकोशोऽस्म्यहं
निर्मायोऽस्मि निरन्तरोऽस्मि विपुलप्रौढप्रकाशोऽस्म्यहम् ।१३५॥

तापत्रयविनिर्मुक्तः देहत्रयविलक्षणः ।
अवस्थात्रयसाक्ष्यस्मि चाहमेवाहमव्ययः ॥ १३६ ॥

यदाकाशवत्सर्वगं शान्तरूपं परं ज्योतिराकारशून्यं वरेण्यम् ।
यदाद्यन्तशून्यं परं शङ्कराख्यं यदन्तर्विभाव्यं तदेवाहमस्मि ॥ १३७ ॥

नमस्तस्मै सदेकस्मै नमश्चिन्महसे मुहुः ।
यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ १३८ ॥

इति नतमवलोक्य शिष्यवर्यं समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
प्रमुदितहृदयः स देशिकेन्द्रः पुनरिदमाह वचः परं महात्मा ॥ १३९ ॥

अशरीरं सदा सन्तमिमं ब्रह्मविदं क्वचित् ।
प्रियाप्रिये न स्पृशतः तथैव च शुभाशुभे ॥ १४० ॥

अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति ।
इतस्ततश्चाल्यमानो यत्किञ्चित्प्राणवायुना ॥ १४१ ॥

यत्र क्वापि विशीर्णं पर्णमिव तरोर्वपुः पतनात् ।
ब्रह्मीभूतस्य यतः प्रागेव हि तच्चिदग्निना दग्धम् ॥ १४२ ॥

कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे ।
पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम् ॥ १४३ ॥

प्रज्ञानघन इत्यात्मलक्षणं सत्यसूचकम् ।
अनूद्योपाधिकस्यैव कथयन्ति विनाशनम् ॥ १४४ ॥

अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः ।
प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु ॥ १४५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ १४६ ॥

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ।
ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः ॥ १४७ ॥

मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः ।
यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ ॥ १४८ ॥

न निरोधो न चोत्पत्तिः न बद्धो न च साधकः ।
न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता ॥ १४९ ॥

सकलनिगमचूडास्वान्तसिद्धान्तगुह्यं परमिदमतिगुह्यं दर्शितं ते मयाऽद्य ।
अपगतकलिदोषः कामनिर्मुक्तबुद्धिः तदतुलमसकृत् त्वं भावयेदं मुमुक्षुः ॥

इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥ १५१ ॥

हितमिदमुपदेशमाद्रियन्तां विहितनिरस्तसमस्तचित्तदोषाः ।
भवसुखविमुखाः प्रशान्तचित्ताः श्रुतिरसिका यतयो मुमुक्षवो ये ॥

विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः ।
तथाऽमृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥ १५३ ॥

कृष्णद्वैपायनं व्यासं सर्वभूतहिते रतम् ।
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ॥ १५४ ॥

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १५५ ॥

शास्त्रं शारीरमीमांसा देवस्तु परमेश्वरः ।
आचार्याः शङ्कराचार्याः सन्तु जन्मनि जन्मनि ॥ १५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नानां जलकांक्षया मरुभुवि भ्रान्त्या परिभ्राम्यताम् ।
अत्यासन्नसुखांबुधिं सुखकरं ब्रह्माद्वयं दर्शय-
न्त्येषा शङ्करभारती विजयते निर्वाणसन्दायिनी ॥ १५७ ॥

इति श्रीशङ्करविजयमकरन्दे षड्विंश आस्वादः समाप्तः ॥

---

## ॥ सप्तविंश आस्वादः ॥

---

### आचार्याणां उपदेशः ।

अथ कान्यकुमारसन्धिसेतुस्थलिनीवेङ्कटकालहस्तियातुः ।
यमिनेतुरमुष्य काञ्चियात्रा शमदानीं शमदं क्रियाद् विचित्रा ॥ १ ॥

शिष्यान्बहुविधप्रश्नामेवायुक्तान् विबोधयन् ।
अध्यात्मतत्त्वं विविधप्रश्नोत्तरपरोऽभवत् ॥ २ ॥

---

सङ्कलने मूलम्—जगद्गुरुरत्नमालास्तोत्रतः १, प्रश्नोत्तररत्न-मालिकातः ३-१९, गुरुवंशकाव्यतः २१, गौरीदशकतः २५, भवानी-भुजङ्गतः २६-२७, सुब्रह्मण्यभुजङ्गतः २९-४२, शङ्कराभ्युदयतः ४४-४६, ५१-५३, ५७, ६६, ६७, ७६, हरिमीडेस्तोत्रतः ४७-५०, शिवभुजङ्गतः ५४-५६, मीनाक्षीपञ्चरत्नतः ५८-५९, मीनाक्षीस्तोत्रतः ६०, त्रिपुरसुन्दर्यष्टकतः ६१-६३, ब्रह्मानन्दीयतः ६४-६५, ९३-१०८, माधवीयतः ६७, ७८-७९, श्रीरामभुजङ्गतः ६८-७१ हनुमत्पञ्चरत्नतः ७२-७५, द्वादशलिङ्गस्तोत्रतः ७७, गणेश-पञ्चरत्नतः ८२-८३, गणेशभुजङ्गतः ८४-८५, गोविन्दनाथीयतः ८७-९०, श्रीरङ्गनाथाष्टकतः ९१-९२, मातृकापुष्पमालातः १०९-१११, नवरत्नमालिकातः ११२-११४, अद्वैतामृतबोधतः ११६, अपरोक्षानुभूतेः विद्यारण्यकृतदीपिकातः ११७-११८.



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवन् किमुपादेयं गुरुवचनं, हेयमपि च किमकार्यम् ।
को गुरुरधिगततत्त्वः शिष्यहितायोद्यतः सततम् ॥ ३ ॥

त्वरितं किं कर्तव्यं विदुषां संसारसन्ततिच्छेदः ।
किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासिद्धम् ॥ ४ ॥

पातुं कर्णाञ्जलिभिः किममृतमिह युज्यते सदुपदेशः ।
किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥ ५ ॥

को नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या ।
किं सत्यं भूतहितं प्रियं च किं प्राणिनामसवः ॥ ६ ॥

चिन्तामणिरिव दुर्लभमिह किं कथयामि तच्चतुर्भद्रम् ।
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम् । ७ ॥

किमहर्निशमनुचिन्त्यं भगवच्चरणं न संसारः ।
चक्षुष्मन्तोऽप्यन्धाः के स्युर्ये नास्तिका मनुजाः ॥ ८ ॥

कोहि भगवत्प्रियः स्याद् योऽन्यं नोद्वेजयेदनुद्विग्नः ।
कस्यैश्वर्यं यः किल शङ्करमाराधयेद्भक्त्या ॥ ९ ॥

कः शिष्टो यो वेदप्रमाणवान् को हतः क्रियाभ्रष्टः ।
किं भाग्यं देहवतामारोग्यं कः फली कृषिकृत् ॥ १० ॥

का च परदेवतोक्ता चिच्छक्तिः को जगद्भर्ता ।
सूर्यः, सर्वेषां को जीवनहेतुः स पर्जन्यः ॥ ११ ॥

कः शूरो यो भीतत्राता त्राता च कः स गुरुः ।
को हि जगद्गुरुरुक्तः शम्भुर्ज्ञानं कुतः शिवादेव ॥ १२ ॥

मुक्तिं लभेत कस्मात् मुकुन्दभक्तेः मुकुन्दः कः ।
यस्तारयेदविद्यां का चाविद्या यदात्मनोऽस्फूर्तिः ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं मिथ्या यद्विद्यानाश्यं तुच्छं तु शशविषाणादि ।
का चानिर्वचनीया माया किं कल्पितं द्वैतम् ॥ १४ ॥

किं पारमार्थिकं स्यात् अद्वैतं चाज्ञता कुतोऽनादिः ।
वपुषश्च पोषकं किं प्रारब्धं चान्नदायि किं चायुः ॥ १५ ॥

को मायी परमेशः क इन्द्रजालायते प्रपञ्चोऽयम् ।
कः स्वप्ननिभो जाग्रद्व्यवहारः सत्यमपि च किं ब्रह्म ॥ १६ ॥

कः ब्राह्मणैरुपास्यो गायत्र्यर्काग्निगोचरः शम्भुः ।
गायत्र्यामादित्ये चाग्नौ शम्भौ च किंतु तत्तत्त्वम् ॥ १७ ॥

प्रत्यक्षदेवता का माता पूज्यो गुरुश्च कस्तातः ।
केषाममोघवचनं ये च पुनः सत्यमौनशमशीलाः ॥ १८ ॥

फलमपि भगवद्भक्तेः किं तल्लोकस्वरूपसाक्षात्त्वम् ।
मोक्षश्च को ह्यविद्यास्तमयः कः सर्ववेदभूरथ चोम् ॥ १९ ॥

इति तेषां कण्ठस्थां प्रश्नोत्तररत्नमालिकामकरोत् ।
ते मुक्ताभरणा इव विमलाश्चाभान् सुधीसमाजेषु ॥ २० ॥

## तीर्थक्षेत्रयात्रा ।

सुरेश्वराचार्य सरस्वतीं त्वं संपूजयन्नास्स्व चिरादिहेति ।
दत्वाऽभ्यनुज्ञां विनताय तस्मै शिष्यैः समस्तैः स जगाम काञ्चीम् ॥

सुरेश्वरोऽपि तत्रैव वसन् गुरुवराज्ञया ।
शिष्यानध्यापयन्नास्त यतीन् पृथ्वीधरादिकान् ॥ २२ ॥

तत्र पृथ्वीधराचार्यं प्रतिष्ठाप्य सुरेश्वरः ।
जगाम काञ्चीं प्रयतो गुरुवर्यदिदृक्षया ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्करः प्रस्थितः कन्याकुमारीक्षेत्रमाययौ ।
तपस्यन्तीं कुमारीं तां पार्वतीं समुपास्त च ॥ २४ ॥

लीलालब्धस्थापितलुप्ताखिललोकां लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥

त्वमर्कस्त्वमिन्दुस्त्वमग्निस्त्वमापस्त्वमाकाशभूवायवस्त्वं महत्त्वम् ।
त्वदन्यो न कश्चित्प्रपञ्चोऽस्ति सर्वं त्वमानन्दसंवित्स्वरूपां भजेऽहम् ॥

गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवासि माता पिता च त्वमेव ।
त्वमेवासि विद्या त्वमेवासि बन्धुर्गतिर्मे मतिर्देवि सर्वं त्वमेव ॥ २७ ॥

इति स्तुवन् प्रणम्यैनां कुमारीं त्र्यक्षरीमयीम् ।
वराभीतिकरां देवीं जयन्तीनगरं ययौ ॥ २८ ॥

दक्षिणाब्धेस्तटे रम्ये कृतालयमुमासुतम् ।
श्रीसन्धिनगरेशानं साग्रजं प्राणमत्ततः ॥ २९ ॥

सदा बालरूपापि विघ्नाद्रिहन्त्री महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे विधत्तां श्रियं कापि कल्याणमूर्तिः ॥

न जानामि शब्दं न जानामि चार्थं न जानामि पद्यं न जानामि गद्यम् ।
चिदेका षडास्या हृदि द्योतते मे मुखान्निस्सरन्ते गिरश्चापि चित्रम् ॥

यदा सन्निधानं गता मानवा मे भवाम्भोधिपारं गतास्ते तदैव ।
इति व्यञ्जयन् सिन्धुतीरे य आस्ते तमीडे पवित्रं पराशक्तिपुत्रम् ॥

यथाऽब्धेस्तरंगा लयं यान्ति तुंगाः तथैवापदः सन्निधौ सेवतां मे ।
इतीवोर्मिपंक्तीर्नृणां दर्शयन्तं सदा भावये हृत्सरोजे गुहं तम् ॥ ३३ ॥

गिरौ मन्निवासे नरा येऽधिरूढाः तदा पर्वते राजते तेऽधिरूढाः ।
इतीव ब्रुवन् गन्धशैलाधिरूढः स देवो मुदे मे सदा षण्मुखोऽस्तु ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशालेषु कर्णान्तदीर्घेष्वजस्रं दयास्यन्दिषु द्वादशस्वीक्षणेषु।
मयीषत्कटाक्षः सकृत्पातितश्चेद् भवेच्च दयाशील का नाम हानिः॥

प्रशान्तेन्द्रिये नष्टसंज्ञे विचेष्टे कफोद्गारिवक्त्रे भयोत्कम्पिगात्रे।
प्रयाणोन्मुखे मय्यनाथे तदानीं द्रुतं मे दयालो भवाग्रे गुह त्वम्॥

कृतान्तस्य दूतेषु चण्डेषु कोपात् दह छिन्धि भिन्धीति मां तर्जयत्सु।
मयूरं समारुह्य मा भैरिति त्वं पुरः शक्तिपाणिर्ममायाहि शीघ्रम्॥

प्रणम्यासकृत्पादयोस्ते पतित्वा प्रसाद्य प्रभो प्रार्थयेऽनेकवारम्।
न वक्तुं क्षमोऽहं तदानीं कृपाब्धे न कार्यान्तकाले मनागप्युपेक्षा॥

अहं सर्वदा दुःखभारावसन्नो भवान् दीनबन्धुस्त्वदन्यं न याचे।
भवद्भक्तिरोधं सदा क्लृप्तबाधं ममाधिं द्रुतं नाशयोमासुत त्वम्॥

अपस्मारकुष्ठक्षयार्शःप्रमेहज्वरोन्मादगुल्मादिरोगा महान्तः।
पिशाचाश्च सर्वे भवत्पत्रभूतिं विलोक्य क्षणात्तारकारे द्रवन्ते॥ ४०॥

मृगाः पक्षिणो दंशका ये च दुष्टाः तथा व्याधयो बाधका ये मदङ्गे।
भवच्छक्तितीक्ष्णाग्रभिन्नाः सुदूरे विनश्यन्तु ते चूर्णितक्रौञ्चशैल॥

नमः केकिने शक्तये चापि तुभ्यं नमश्छाग तुभ्यं नमः कुक्कुटाय।
नमः सिन्धवे सिन्धुदेशाय तुभ्यं पुनः स्कन्दमूर्ते नमस्ते नमोऽस्तु॥

इत्थं गुहार्पितस्वान्तो भक्तियुक्तः प्रणम्य तम्।
निर्जगाम ततः सिन्धुतीरतीर्थाटनाय सः॥ ४३॥

अथ देशिकेन्द्रुरधिगत्य तैर्थिकैः शनकैरनन्तशयनाभिधं स्थलम्।
समवैक्षतात्र सरसीरुहेक्षणं श्रुतिचूलिकासमधिगम्यवैभवम्॥ ४४॥

मुनिकुञ्जरस्य ववृधेऽधिमानसं प्रमदाम्बुराशिलहरीभरैश्चिरम्।
मुमुदे च लोचनचकोरपालिणा पुरतः स्फुरत्युरुतमोहरे निधौ॥ ४५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ माधवं शुभतमालकाननं महनीयगन्धवनमालिकोज्ज्वलम् ।
उपलभ्य कोकिलयुवेव कन्दलन्मधुरस्वरः समजनिष्ट देशिकः ॥

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥

सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा ।
यश्चाऽव्यक्तो व्यस्तसमस्तः सदसद्यः तं संसारध्वान्तविनाशं हरिमीडे ॥

यस्मादन्यन्नास्त्यपि नैवं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् ।
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञः तं संसारध्वान्तविनाशं हरिमीडे ॥

ओतं प्रोतं यत्र च सर्वं गगनान्तं योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः ।
ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यः तं संसारध्वान्तविनाशं हरिमीडे ॥

अथ देवदेवनुतिपावनाननो यतिशेखरो यतमना इतस्ततः ।
अतिपावनानि परितस्तपोवनान्यनघा नदीरभिययौ सरांसि च ॥ ५१ ॥

जनता हि यत्र कृतमालिकाऽऽपगाजलपानजातजडिमापनुत्तये ।
रसनाञ्चले मधुरमं क्षिपत्यसौ मधुरामवापदथ तामनुत्तमाम् ॥ ५२ ॥

कृतमालिकाकृतजलावगाहनः क्रमशः क्रियाः समुचितास्समाचरन् ।
शतशः प्रणम्य शशिखण्डमण्डनं मुखरोऽजनिष्ट मुनिशेखरो मुदा ॥

स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्तम् ।
नमस्यामि शम्भो पदांभोरुहं ते भवांभोधिपोतं भवानीविभाव्यम् ॥

शिवायेति शब्दो नमःपूर्व एष स्मरन्मुक्तिकृन्मृत्युहा तत्ववाची ।
महेशान मा गान्मनस्तो वचस्तः सदा मह्यमेतत्प्रदानं प्रयच्छ ॥ ५५ ॥

महादेव शंभो गिरीश त्रिशूलिन् त्वयीदं समस्तं विभातीति यस्मात् ।
शिवादन्यथा दैवतं नाभिजाने शिवोऽहं शिवोऽहं शिवोऽहम् शिवोऽहम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधिहेमपुष्करिणि क्लृप्तमज्जनो भसितत्रिपुण्ड्रपरिदीपितालिकः ।
अभिवन्द्य मीननयनामसावभूत् कवितात्मना परिणतात्मभक्तिकः ॥ ५७ ॥

उद्यद्भानुसहस्रकोटिसदृशां केयूरहारोज्ज्वलां
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालङ्कृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्त्वस्वरूपां शिवां
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारां निधिम् ॥ ५८ ॥

श्रीविद्यां शिववामभागनिलयां ह्रींकारमन्त्रोज्ज्वलां
श्रीचक्राङ्कितबिन्दुमध्यवसतिं श्रीमत्सभानायकीम् ।
श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीं
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारां निधिम् ॥ ५९ ॥

वीणानादनिमीलितार्धनयने विस्रस्तचूलीभरे
ताम्बूलारुणपल्लवाधरयुते ताटङ्कहारान्विते ।
श्यामे चन्द्रकलावतंसकलिते कस्तूरिकाफालिके
पूर्णे पूर्णकलाभिरामवदने मां पाहि मीनाम्बिके ॥ ६० ॥

कदम्बवनचारिणीं मुनिकदम्बकादम्बिनीं
नितम्बजितभूधरां सुरनितम्बिनीसेविताम् ।
नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६१ ॥

कदम्बवनशालया कुचभरोल्लसन्मालया
कुचोपमितशैलया गुरुकृपालसद्वेलया ।
मदारुणकपोलया मधुरगीतवाचालया
कयापि घनलीलया कवचिता वयं लीलया ॥ ६२ ॥

कदम्बवनमध्यगां कनकमण्डलोपस्थितां
षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विडम्बितजपारुचिं विकचचन्द्रचूडामणिं
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६३ ॥

मीनाक्षीं पूजयित्वाऽथ मीनाक्षीशासनादथ ।
सूक्ष्मरूपयुते रत्ने सूक्ष्मरूपेण यन्त्रकम् ॥ ६४ ॥

श्रीचक्रं तु विलिख्याथ नासिकाभरणं च तत् ।
आवाह्य च परां शक्तिं तस्मिन्संपूज्य यत्नतः ।
मीनाक्ष्या अर्पयामास नासिकायां जगद्गुरुः ॥ ६५ ॥

अनुदिनमिति देवीमर्चयन् वाक्प्रसूनैः
अविरतभ्रमरोच्चैः सौरभीसौलभीकैः ।
निगमशिखरचिन्तानिर्वृतौ निर्व्यलीकैः
बहुदिनमिह वासं बहुमंस्तार्यपादः ॥ ६६ ॥

शेखरोऽथ यमिनां सहानुगैः सेतुदर्शनकुतूहलाद्व्रजन् ।
सिन्धुबन्धुतटसीम्नि राघवं दर्भपूलकृततल्पमस्तुत ॥ ६७ ॥

विशुद्धं परं सच्चिदानन्दरूपं गुणाधारमाधारहीनं वरेण्यम् ।
महान्तं विभान्तं गुहान्तं गुणान्तं सुखान्तं स्वयं धाम रामं प्रपद्ये ॥

महारत्नपीठे शुभे कल्पमूले सुखासीनमादित्यकोटिप्रकाशम् ।
सदा जानकीलक्ष्मणोपेतमेकं सदा रामचन्द्रं भजेऽहं भजेऽहम् । ६९ ॥

पुरः प्राञ्जलीनाञ्जनेयादिभक्तान् स्वचिन्मुद्रया भद्रया बोधयन्तम् ।
भजेऽहं भजेऽहं सदा रामचन्द्रं तदन्यं न मन्ये न मन्ये न मन्ये ॥

निजे मानसे मन्दिरे सन्निधेहि प्रसीद प्रसीद प्रभो रामचन्द्र ।
ससौमित्रिणा कैकयीनन्दनेन स्वशक्त्याऽनु भक्त्या च संसेव्यमान ॥

सदा राम रामेति नामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम् ॥ ७२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीताखिलविषयेच्छं जातानन्दाश्रुपुलकमत्यच्छम् ।
सीतापतिदूताद्यं वातात्मजमद्य भावये हृद्यम् ॥ ७३ ॥

दूरीकृतसीतार्तिः प्रकटीकृतरामवैभवस्फूर्तिः ।
दारितदशमुखकीर्तिः पुरतो मम भातु हनूमतो मूर्तिः ॥ ७४ ॥

वानरनिकराध्यक्षं दानवकुलकुमुदरविकरसदृक्षम् ।
दीनजनावनदीक्षं पवनतपःपाकपुञ्जमद्राक्षम् ॥ ७५ ॥

इत्थं ककुत्स्थनृपतिस्थपतेर्यशांसि संकीर्तयन्नघहराणि स संयमीन्द्रः ।
सिन्धौ निमज्ज्य सह पर्वतवर्धनीशं श्रीरामनाथमभिवन्द्य ततस्तमस्तौत् * ॥

श्रीताम्रपर्णीजलराशियोगे निबद्ध्य सेतुं निशि बिल्वपत्रैः ।
श्रीरामचन्द्रेण समर्चितं तं रामेश्वराख्यं सततं नमामि ॥ ७७ ॥

अभवत्किल तस्य तत्र शाक्तैः गिरिजार्चाकपटान्मधुप्रसक्तैः ।
निकटस्थवितीर्णभूरिमोदस्फुटरिंखत्पटुयुक्तिमान् विवादः ॥ ७८ ॥

स हि युक्तिभरैर्विधाय शाक्तान् प्रतिवाग्व्याहरणेऽपि तानशक्तान् ।
द्विजजातिबहिष्कृताननार्यानकरोल्लोकहिताय कर्मसेतुम् ॥ ७९ ॥

रामेश्वराद्विनिष्क्राम्य ततो देशिकपुङ्गवः ।
शिष्यैः परिवृतो मार्गे वक्रतुण्डपुरीमगात् ॥ ८० ॥

स्नात्वा गन्धवतीतोये गजाननमपूजयत् ।
पञ्चरत्नभुजङ्गाख्यस्तोत्राभ्यां तोषयंश्च तम् ॥ ८१ ॥

मुदा कराक्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरक्षकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम् ॥ ८२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवेतरातिभीकरं नवोदितार्कभास्वरं
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ ८३ ॥

रणत्क्षुद्रघण्टानिनादाभिरामं चलत्ताण्डवोद्दण्डवत्पद्मतालम् ।
लसत्तुन्दिलाङ्गोपरिव्यालहारं गणाधीशमीशानसूनुं तमीडे ॥ ८४ ॥

प्रकाशज्जपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्योतिरेकम् ।
प्रलम्बोदरं वक्रतुण्डैकदन्तं गणाधीशमीशानसूनुं तमीडे ॥ ८५ ॥

वक्रतुण्डं समाराध्य वक्रतुण्डपुरोत्तमे ।
निर्वृतः प्रययौ चोलान् कावेरीसलिलाप्लुतान् ॥ ८६ ॥

गच्छन्नध्वनि कावेरीं सरितं सन्ददर्श सः ।
यस्यां स्नात्वा हरौ भक्तिं मुक्तिदां यान्ति मानवाः ॥ ८७ ॥

यस्याः पावनतोयाया मध्ये स्वर्णमयं महत् ।
क्षेत्रमाभाति विख्यातं लोके श्रीरंगसंज्ञया ॥ ८८ ॥

तत्र स्नात्वा यतीन्द्रस्तं सशिष्यः कमलापतिम् ।
ददर्श भोगिशय्यायां भान्तं श्रीरंगनायकम् ॥ ८९ ॥

नत्वा तस्य पदांभोजे रमाकान्तस्य शङ्करः ।
अर्चयित्वा ततोऽस्तौत्तं पद्मपादादिभिर्युतः ॥ ९० ॥

आनन्दरूपे निजबोधरूपे ब्रह्मस्वरूपे श्रुतिमूर्तिरूपे ।
शशाङ्करूपे रमणीयरूपे श्रीरङ्गरूपे रमतां मनो मे ॥ ९१ ॥

सचित्तशायी भुजगेन्द्रशायी नन्दाङ्कशायी कमलाङ्कशायी ।
क्षीराब्धिशायी वटपत्रशायी श्रीरङ्गशायी रमतां मनोऽब्जे ॥ ९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदालयवरिष्टेऽथ जनाकर्षणसंज्ञकम् ।
यन्त्रं निधाय बिंबस्याधस्ताद् जम्बूवनं ययौ ॥ ९३ ॥

गजारण्ये जम्बुनाथमम्मयं लिङ्गमुत्तमम् ।
मुदमापाखिलाण्डेश्या युतं तत्प्रणमन्मुहुः ॥ ९४ ॥

देव्याश्च सन्निधौ योगी ध्याननिष्ठो बभूव सः ।
ध्यानस्थं भगवत्पादं प्रावदत्परमेश्वरी ॥ ९५ ॥

श्रीचक्रयुतताटङ्के नवरत्नविचित्रिते ।
कारयित्वा विधानेन मम कर्णौ विभूषय ॥ ९६ ॥

एवं देव्या वचः श्रुत्वा शङ्करो हृष्टमानसः ।
श्रीचक्रयन्त्रवद्रत्नैः स्वर्णैश्च बहुशोभितम् ॥ ९७ ॥

ताटङ्कयुगलं दीप्तं शिवशक्तिस्वरूपकम् ।
कारयित्वा विधानेन महोत्सवपुरस्सरम् ॥ ९८ ॥

सुदिनेऽथ सुलग्नाढ्ये भूषयामास चाम्बिकाम् ।
मातृभूतेश्वरं गत्वा स्नात्वा शिष्यसमन्वितः ॥ ९९ ॥

कावेर्यां पूजयामास गिरिमूर्ध्नि सुसंस्थितम् ।
पूजयामास विघ्नेशं पुष्टिलक्ष्मीसमन्वितम् ॥ १०० ॥

मातृभूतेश्वरं शम्भुं सुगन्धिकुन्तलाम्बिकाम् ।
उवास दिनमेकं तु मातृभूतस्थले सुखम् ॥ १०१ ॥

अखिलाण्डेश्वरीसद्मनिलयाः पूजका द्विजाः ।
प्रणम्य भगवत्पादं प्रार्थयामासुरेव ते ॥ १०२ ॥

---

१०१. सुगन्धिकुन्तलाम्बाया आलयं परितः शिलासु सौन्दर्य-लहरी उट्टङ्किता वर्तते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्युग्ररूपा सञ्जाता ताटङ्कादिविभूषिता ।
अखिलाण्डेश्वरी देवी दह्यन्ते सन्निधौ स्थिताः ॥ १०३ ॥

वयं तया पीड्यमानाः न शक्ताः पूजने विभो ।
उग्रत्वशमनं देव्याः कुरु देव नमोऽस्तु ते ॥ १०४ ॥

गुरोस्तु शासनादेव सुधन्वा नृपसत्तमः ।
मूर्तिं भव्यां चकारासौ गणेशानस्य शिल्पिभिः ॥ १०५ ॥

तां मूर्तिं स्थापयामास देव्या अभिमुखीं गुरुः ।
पुत्रं वीक्ष्य परा शक्तिः पुरतस्तं गणेश्वरम् ॥ १०६ ॥

शान्ता सद्यो बभूवाथ तुष्टोऽभूच्च जगद्गुरुः ।
संपूज्य देवीतनयं तदादि पुरतः स्थितम् ॥ १०७ ॥

देव्याः सपर्यां व्यदधुः श्रीविद्यार्चनतत्पराः ।
अखिलाण्डेश्वरीमस्तौत् ध्यायन्मनसि शङ्करः ॥ १०८ ॥

लूताधीशगजेन्द्रपूजितपदे लूनाहितेशान्विते
क्लींकाराङ्कितबिन्दुपीठनिलये क्लींकाररूपेडिते ।
लूतातन्तुजडीकृतेशनिलये लूनाहिवल्लीदले
लूताक्ष्मापतिमुक्तिदातृमहिले वन्देऽखिलाण्डेश्वरि ॥

जम्बूमूलनिधे जनार्दननुते जम्भारिसंभाविते
जम्बूद्वीपमनोज्ञकल्पलतिके जह्न्वात्मजाशेखरे ।
जन्मव्याधिजरापहे जलमये जाम्बूनदालङ्कृते
जम्बूनाथमनोहरे जननुते वन्देऽखिलाण्डेश्वरि ॥ ११० ॥

यज्ञे यज्ञफलप्रदे यमिनुते यज्ञेश्वराराधिते
यक्ष्मघ्ने यमसूदनप्रियतमे यज्ञेशसंपूजिते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यन्त्रस्थे यतिपूजिते यतिकृतश्रीचक्रभूषोज्ज्वले
यक्षिण्यादिसमस्तशक्तिविनुते वन्देऽखिलाण्डेश्वरि ॥

हारनूपुरकिरीटकुण्डलविभूषितावयवशोभिनीं
कारणेशवरमौलिकोटिपरिकल्प्यमानपदपीठिकाम् ।
कालकालफणिपाशबाणधनुरङ्कुशामरुणमेखलां
फालभूतिलकलोचनां मनसि भावयामि परदेवताम् ॥

कुण्डलत्रिविधकोणमण्डलविहारषड्दलसमुल्लसत्-
पुण्डरीकमुखभेदिनीं च परचण्डभानुभसमुज्ज्वलाम् ।
मण्डलेन्दुपरिवाहितामृततरङ्गिणीमरुणरूपिणीं
मण्डलान्तमणिदीपिकां मनसि भावयामि परदेवताम् ॥

कालिकातिमिरकुन्तलान्तघनभृङ्गमङ्गलविराजिनीं
चूलिकाशिखरमालिकावलयमल्लिकासुरभिसौरभाम् ।
वालिकामधुरगण्डमण्डलमनोहराननसरोरुहां
कालिकामखिलनायिकां मनसि भावयामि परदेवताम् ॥

नत्वैवमखिलाण्डेशीं तदाराधननिर्भरः ।
निनाय समयं कञ्चित् ततो मध्यार्जुनं ययौ ॥ ११५ ॥

संसारसर्पपरिदष्टविनष्टजन्तुसञ्जीवनाय परया कृपयोपपन्नः ।
ब्रह्मावबोधपरमौषधमुद्वहन् यः तं शङ्करं परतरं भिषजां भजामि ॥ ११६ ॥

यद्ययं शङ्करः साक्षाद्वेदान्ताम्भोजभास्करः ।
नोदेष्यत्तर्हि काशेत कथं व्यासादिसूक्तितम् ॥ ११७ ॥

नमस्तस्मै भगवते शङ्कराचार्यरूपिणे ।
येन वेदान्तविद्येयमुद्धृता वेदसागरात् ॥ ११८ ॥

इति श्रीशङ्करविजयमकरन्दे सप्तविंश आस्वादः समाप्तः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# ॥ अष्टाविंश आस्वादः ॥

## तीर्थक्षेत्रयात्रा ।

श्रीगुरुं भगवत्पादं शरण्यं भक्तवत्सलम् ।
शिवं शिवकरं शुद्धमप्रमेयं नमाम्यहम् ॥ १ ॥

संप्राप्तसन्तोषविनीतशिष्यैः साकं जगत्यां विजयं विधित्सुः ।
अद्वैतसिद्धान्तसरोजसूर्यो मध्यार्जुनेशावसथं ययौ सः ॥ २ ॥

तं पूजयित्वाऽनुचरैः सभायां पप्रच्छ तत्त्वं किमिहेति योगी ।
दृश्याकृतिप्रोच्चभुजोऽथ सत्यमद्वैतमेवेत्यवदत्त्रिरीशः ॥ ३ ॥

तत्क्षेत्रवासिनः सर्वान् प्रातःस्नानपरायणान् * ।
पञ्चयज्ञपरान्नित्यं देवतातिथिपूजकान् ॥ ४ ॥

उमागणपतीशार्काच्युतांघ्रयर्चापरायणान् ।
त्यक्तभेदकथानाशु वेदान्तपरिनिष्ठितान् ॥ ५ ॥

विधाय देशिकेन्द्रोऽसौ प्रसाद्य च महेश्वरम् ।
निर्जगाम ततः शिष्यैः पद्मपादादिभिर्वृतः ॥ ६ ॥

---

सङ्कलने मूलं—गुर्वष्टकतः १, १२४. गुरुवंशकाव्यतः २-३, चिद्विलासीयतः ४-६, मृत्युञ्जयमानसिकपूजास्तोत्रतः ८-१० शिवभुजङ्गतः ११-१३, ब्रह्मानन्दीयतः १४-१५, गोविन्दनाथीयतः १६-१८, ४६-५३, शङ्कराभ्युदयतः १९, विष्णुपादादिकेशान्तस्तोत्रतः २५-३५, मार्कण्डेयसंहितातः ३६, भगवत्पादाभ्युदयतः ३८-४३, ४५, एकश्लोकीतः ४४, शिवपञ्चाक्षरनक्षत्रमालास्तोत्रतः, ५४-५५, कल्याणवृष्टिस्तवतः ५७-५८, कामाक्षीविलासतः ६०-१२२.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततोऽमृतघटेशानं मृत्युञ्जयमुमापतिम् ।
अस्तौन्मृकण्डुतनयानुग्रहार्थात्तविग्रहम् ॥ ७ ॥

कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं
कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् ।
गङ्गातुङ्गतरङ्गरञ्जितजटाभारं कृपासागरं
कण्ठालंकृतशेषभूषणममुं मृत्युञ्जयं भावये ॥ ८ ॥

नमो गौरीशाय स्फटिकधवलांगाय च नमो
नमो लोकेशाय स्तुतविबुधलोकाय च नमः ।
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो
नमः फालाक्षाय स्मरमदविनाशाय च नमः ॥ ९ ॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥

स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन् महेशावलम्बे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डोः यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ ११ ॥

यदा कर्णरन्ध्रं व्रजेत्कालवाहद्विषत्कण्ठघण्टाघणात्कारनादः ।
वृषाधीशमारुह्य देवौपवाह्यं तदा वत्स मा भैरिति प्रीणय त्वम् ॥ १२ ॥

महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति ।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥

क्षेत्रे ब्रह्मश्मशानाख्ये पुण्यारण्येऽतिविश्रुते ।
अघोरदेवो भगवानुग्ररूपो व्यराजत ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न प्राभवत्पूजनाय पूजकोऽपि सुदीक्षितः ।
प्रतिष्ठाप्य पुरः काळीं शान्तं तमकरोद्गुरुः ॥ १५ ॥

ततो भिक्षुवरः पुण्यं पुण्डरीकपुरं ययौ ।
ताण्डवं कुरुते यस्मिन् महादेवो महानटः ॥ १६ ॥

यन्नृत्तमभिरामं सा पार्वती च धृतादरा ।
वीक्षते मुनिबृन्दं च दर्शनाद्भयभञ्जनम् ॥ १७ ॥

श्रीशङ्करमुखाः स्नात्वा शिवगङ्गाजले शुचौ ।
हर शम्भो महादेव देवदेव दयानिधे ।
अस्मान्भक्तिसमायुक्तान् उद्धराशु भवार्णवात् ॥ १८ ॥

इति विहितनुतिर्गिरीशचूडाशशिकिरणापसरत्तमःप्ररोहः ।
त्रिचतुरदिवसान्वसन्निहासौ मुनिपतिरुत्तरदिङ्मुखः प्रतस्थे ॥ १९ ॥

ततः श्रीशङ्कराचार्यो वेङ्कटेश्वरमीक्षितुम् ।
शिष्यैस्तैस्स समायुक्तो निर्जगाम महोदयः ॥ २० ॥

गत्वा क्रमेण मार्गस्थक्षेत्राणि प्रविलोकयन् ।
नत्वा गोविन्दराजेशं भक्ताभीष्टफलप्रदम् ॥ २१ ॥

प्रदक्षिणं परिक्रामन् शेषाचलमतन्द्रितः ।
गिरेरूर्ध्वं समारुह्य स्नात्वा पुष्करिणीजले ॥ २२ ॥

अथ श्रीवेङ्कटेशानं सप्तगिर्यधिवासिनम् ।
स्वामिपुष्करिणीतीरे सवराहं ददर्श सः ॥ २३ ॥

---

१६. स्वपरमगुरुभिः गौडपादैः पतञ्जलिमुनेरनुग्रहोऽत्र प्राप्त इति क्षेत्रेऽस्मिन्नादरातिशयः । अत्र भगवत्पादैः पञ्चाक्षरयन्त्रप्रतिष्ठा कृतेति श्रूयते । एतत्क्षेत्रसंबन्धस्य घनिष्ठतयैव, अत्रैव तेषामवतारं गोविन्दगुरुसमागमं सन्न्यासग्रहणं च वर्णयन्ति केचित् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुचिः शिष्यैः परिवृतो विधिवत्प्रणनाम तम् ।
तुष्टाव पश्यन्निभृतं रूपमापादमूर्धजम् ॥ २४ ॥

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः ।
कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखांभोरुहां सुन्दरांगीं
वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ॥

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैः
येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्यांघ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥ २६ ॥

यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानात्
आश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता ।
भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तम्भशोभां दधौ नः
पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥ २७ ॥

आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पैः
कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च ।
अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे
तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥ २८ ॥

कान्तं वक्षो नितान्तं विदधदिव गलं कालिमा कालशत्रोः
इन्दोर्बिम्बं यथाङ्को मधुप इव तरोर्मञ्जरीं राजते यः ।
श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः
श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां
शम्भो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न-
स्याऽस्येन्दोरास्रवन्ती वरवचनसुधाऽऽह्लादयेन्मानसं नः ॥

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-
प्रोत्फुल्लत्पद्ममालाविकसितमहितस्फाटिकैशानलिङ्गम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्यात्
उत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥

पीठीभूतालकान्तं कृतमकुटमहादेवलिङ्गप्रतिष्ठे
लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय ।
प्रोद्घाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्ती स्फुटाङ्गं
पट्टीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥

भ्रान्त्वा भ्रान्त्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेकाः
गन्तुं नान्तं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।
उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं
देहाम्भोधिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः । ३३ ॥

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्किर्भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ ३४ ॥

---

(३२) कृतमकुटमहादेवलिङ्गप्रतिष्ठे इति सूचनात् स्तोत्रमिदं पाण्डुरङ्गक्षेत्रे प्रस्तुतमिति रहस्यज्ञाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः
स्वार्थालाभात् परार्थेऽपगमकथनश्लाघिनो वेदवादाः ।
नित्यानन्दं स्वसंविन्निरवधिविमलस्वान्तसंक्रान्तबिम्ब-
च्छायापत्त्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥

श्रीवेङ्कटेशवृषशैलमुपेत्य योगी यन्त्रं जगत्त्रयवशीकरणोद्यतं तत् ।
चक्रे चराचरगुरुर्जगतां विभूत्यै श्रीशङ्करो निगमशेखरपारगोऽयम् ॥ ३६ ॥

अद्रौ विवादधोभागे यन्त्रं संपत्प्रदायकम् ।
षडास्यविष्णुलक्ष्मीनां धनाकर्षणसंज्ञकम् ॥ ३७ ॥

कारयित्वा शिलायां च स्थापयामास शङ्करः ।
तत्र कश्चिद्द्विजवरो वैराग्यादिगुणान्वितः ॥ ३८ ॥

श्वित्रेण सर्वाङ्गीणेन कूष्माण्डसदृशाकृतिः ।
निलीयमानः सदसि प्राक्तनं स्वमघं स्मरन् ॥ ३९ ॥

पर्यश्रुनयनः प्राह प्रणमन्गुरुपादयोः ।
मादृशामघिनां ब्रह्मन् अन्धे तमसि मज्जताम् ॥ ४० ॥

तरणिस्त्वं निसृष्टोऽसि पाहि मां करुणानिधे ।
इति शोचन्तमाश्वास्य चाक्षुष्या दीक्षया गुरुः ॥ ४१ ॥

अनुगृह्यावभाषे तं महात्मन् सौम्य माशुचः ।
न त्वं देहो न च प्राणो नेन्द्रियं न मनो न धीः ॥ ४२ ॥

स्वयंज्योतिस्त्वमात्मासि शरीराद्यवभासकः ।
कथमस्मि स्वयंज्योतिः कथमस्म्यवभासकः ।
इति पृच्छन्तमेकेन श्लोकेन प्रत्यबोधयत् ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियोदर्शने
किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥ ४४ ॥

इति प्रबोधितस्तत्वं गुरुणा करुणाब्धिना ।
देहाभिमानजं दुःखं विमुच्य मुदमाप सः ॥ ४५ ॥

---

(४४) एतस्या एकश्लोक्या व्याख्याता गोपालयोगीन्द्रशिष्यः स्वयंप्रकाशयोगीन्द्रः तत्वदीपनाख्यायां व्याख्यायां कथाशरीरमवतारिकायां लिखति—इह खलु भगवान् सर्वज्ञश्चन्द्रचूडावतारः, "अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्। षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरत्यगात्" इत्यादिगुणविशिष्टो भगवदभिधानो दुर्वादिदर्वीकरमन्त्रराजः शङ्कराचार्यः, तीर्थैरिव त्रिभुवनं पावयन् सद्वैद्यैरिव संरक्षन् चन्द्र इवाप्याययन्, कल्याणचरितैः रत्नैरिवालङ्कुर्वन्, शश्वद्विश्वं विचचार। तत्र कदाचिद्ग्रामविशेषे कूष्माण्डमिव पाण्डुराङ्गं, उलूकमिव सूर्यावलोकनाक्षमं, लज्जया जनावलोकनाक्षमं मां त्राहि त्राहीति पुनः पुनः प्रणमन्तं कञ्चन कुष्ठिनं साधनचतुष्टयसम्पन्नमवलोक्य परमकारुणिकत्वेन तावदेनं संसारसङ्कटात् मोचयन् कृतार्थीकुर्यामिति निश्चित्य, तेषामहं समुद्धर्ता मृत्युसंसारसागरात् इति प्रतिज्ञापालनार्थं तथा चकार। तदुपदेशवचनं, लोकपरिपालनार्थमेव। "अस्तमित आदित्ये, याज्ञवल्क्य, चन्द्रमस्यस्तमिते शान्तेऽग्नौ, शान्तायां वाचि, किंज्योतिरेवायं पुरुष इति आत्मैवास्य ज्योतिर्भवतीति, आत्मनैवायं ज्योतिषाऽऽस्ते, पल्ययते, कर्म कुरुते, विपल्येतीति; कतम आत्मेति, योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति बृहदारण्यकषष्ठाध्यायनिष्ठजनकयाज्ञवल्क्यसंवादरूपज्योतिर्ब्राह्मणवाक्यार्थं मनसि निधाय प्रश्नोत्तरश्लोकरूपेण निबबन्ध" इति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दक्षिणां दिशमुत्सृज्य प्रस्थितो देशिकेश्वरः ।
गत्वा बहुविधान्देशान् स्नात्वा तीर्थजलेषु सः ॥ ४६ ॥

श्रीकालहस्तिसंज्ञं तत्क्षेत्रं त्रैलोक्यविश्रुतम् ।
संप्राप गिरिजाभर्तुः महापातकनाशनम् ॥ ४७ ॥

तत्र तीर्थजले स्नात्वा संयुतश्शिष्यमण्डलैः ।
उपेत्य सन्निधिं देवमद्राक्षीद्गिरिजापतिम् ॥ ४८ ॥

नानादीपप्रभाजालनिर्धूततिमिरोदरे ।
अद्भुते भवने भान्तं प्रभामण्डलमण्डितम् ॥ ४९ ॥

पुष्पमालासुगन्धेन सुरभीकृतदिङ्मुखम् ।
प्रत्युप्तदिव्यरत्नौघहेमाभरणभूषितम् ॥ ५० ॥

व्याघ्रचर्ममनोहारिविमलांबरराजितम् ।
जटाजूटाग्रसन्नद्धमुग्धचन्द्रकलाञ्चितम् ॥ ५१ ॥

विधिविष्णुमहेन्द्राद्यैः निगूढाकृतिभिः सुरैः ।
सेव्यमानं मनुष्यैश्च भूरिपुण्यचयैः सदा ॥ ५२ ॥

दृष्ट्वा तं शङ्करो देवं भवान्या सह भक्तिमान् ।
स्तुत्वा चोपनिषद्वाक्यैः ननाम शिरसा भृशम् ॥ ५३ ॥

श्रीमदात्मने गुणैकसिन्धवे नमः शिवाय
धामलेशधूतकोकबन्धवे नमः शिवाय ।
नामशोषितानमद्भवान्धवे नमः शिवाय
पामरेतरप्रधानबन्धवे नमः शिवाय ॥ ५४ ॥

यक्षराजबन्धवे दयालवे नमः शिवाय
दक्षपाणिकाञ्चनालवे नमः शिवाय ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पक्षिराजवाहहृच्छयालये नमः शिवाय
अक्षिफाल वेदपूतवालये नमः शिवाय ॥ ५५ ॥

देवं प्रणम्य गिरिशं कालहस्तीशमादरात् ।
ज्ञानप्रसूनामस्तौत्स शम्भुप्रणयिनीं शिवाम् ॥ ५६ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ॥ ५७ ॥

लग्नं सदा भवतु मातरिदं तवार्धं तेजः परं बहलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं मध्ये त्रिकोणनिलयं परमामृतार्द्रम् ॥

कञ्चित्कालमुषित्वाऽत्र शम्भुपूजापरायणः ।
काञ्चीं मोक्षपुरीं प्राप शक्तित्रयसुरक्षिताम् ॥ ५९ ॥

गङ्गाया दक्षिणे भागे योजनानां शतद्वये ।
पूर्वसिन्धुर्महापुण्यः काञ्चीक्षेत्राश्रयः किल ॥ ६० ॥

नैरृत्यां तस्य जलधेः सपादऋतुयोजने ।
दक्षिणाख्या सरिच्छ्रेष्ठा पिनाकिन्यत्र वर्तते ॥ ६१ ॥

पुरा हरप्रसादेन भृगुर्दैत्यगुरुर्महान् ।
पिनाकं सन्दधौ हस्ते भूगतं हरकार्मुकम् ॥ ६२ ॥

तदुद्धरणमात्रेण तावद्भूमिः सरिद्बभौ ।
सा नदी सर्वपापघ्नी शिवकार्मुकसन्निभा ॥ ६३ ॥

तस्य मारुतदिग्भागे सप्तयोजनमात्रतः ।
शिलाह्रदो महापुण्यश्चामृतत्वप्रदायकः ॥ ६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरा वातात्मजो वीरः सुधासञ्जीवनौषधिम् ।
प्रक्षाल्य तज्जले शुद्धां ददौ तां लक्ष्मणाय च ॥ ६५ ॥

ऐशान्यां तस्य तीर्थस्य वसुयोजनमात्रतः ।
स्वामिपुष्करिणी पुण्या साक्षात्सा विरजा नदी ॥ ६६ ॥

हरिणा सा समानीता परिणेतुं तु पद्मजाम् ।
एतच्चतुर्दिङ्मध्यस्थं काञ्चीक्षेत्रं पुरोत्तमम् * ॥ ६७ ॥

पृथिव्या गोस्वरूपाया यत्काञ्चीस्थानतां गतम् ।
तस्मात्क्षेत्रमिदं पुण्यं काञ्चीक्षेत्रं प्रचक्षते ॥ ६८ ॥

विष्णुनाऽधिष्ठितं क्षेत्रं शिवसान्निध्यकारकम् ।
महाशक्तिप्रभावाढ्यं शक्तिप्राधान्यवैभवात् ॥ ६९ ॥

विनाशरहितं क्षेत्रं तस्मात्सत्यव्रताह्वयम् ।
सरिच्छैलालयांकैश्च क्षेत्रं भास्करसंज्ञितम् ॥ ७० ॥

बिल्ववृक्षविमानाङ्कैः क्षेत्रं तैजसमुच्यते ।
शिवशक्त्यात्मकं क्षेत्रं तथा हरिहरात्मकम् ॥ ७१ ॥

कैलासोऽपि च वैकुण्ठमादिश्रीपुरमन्दिरम् ।
भूमौ तत्रैव लक्ष्यन्ते नान्यक्षेत्रे कदाचन ॥ ७२ ॥

एतच्चतुर्दिङ्मध्यस्थः पुरा तुण्डीरभूभुजा ।
धर्मेण पालितो देशः तस्मात्तुण्डीरमण्डलम् ॥ ७३ ॥

यावत्तुण्डीरभूवृत्तं तावत्काञ्चीतलं स्मृतम् ।
तन्मध्यगामिनी क्षीरसरिच्छ्रेष्ठा महानदी ॥ ७४ ॥

श्रीविद्यापरमेशान्याः स्तनकुम्भसमुद्भवा ।
तत्रत्याश्चोत्तरे पार्श्वे पादयोजनमात्रतः ॥ ७५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काञ्चीक्षेत्रं तपःस्थानं प्रागुक्तं तत्र वर्तते ।
तस्मिन्क्षेत्रे महाशक्तिः त्रिधा रूपेण वर्तते ॥ ७६ ॥

तत्र काञ्चीमहाक्षेत्रे त्वव्यक्तज्योतिरात्मकः ।
स शिवश्शङ्करः शम्भुः महाप्रलयके विभुः ॥ ७७ ॥

चूतबीजाकृतिर्भूत्वा बभावेकाम्रसंज्ञया ।
तथैव भगवान्विष्णुः तेजसा व्यक्तविग्रहः ।
ब्रह्माश्वमेधयागाग्नौ बभौ वरद इत्यपि ॥ ७८ ॥

तस्माद्विष्णुमहादेवौ कामाक्षी शक्तिरेव च* ।
तस्या विलासस्त्रिविधो हरिशक्तीशभेदतः ॥ ७९ ॥

ब्रह्महस्तात्सृष्टिदण्डमादायाभूत्सरस्वती ।
सरिद्रूपा वेगवती पुनस्तद्दण्डकांक्षया ॥ ८० ॥

इयाज वेधास्तत्रैव हयमेधेन माधवम् ।
ब्रह्मयागसमुद्भूतो वरदः स्मितसुन्दरः* ॥ ८१ ॥

वपापरिमलोल्लासिवासिताधरपल्लवः* ।
पुण्यकोटिविमानाङ्के तत्वसोपानभूषिते* ॥ ८२ ॥

नृसिंहाधिष्ठितगुहे हस्तिशैले प्रतिष्ठितः* ।
त्रयस्त्रिंशत्कोटिदेवसेवितः स विराजते* ॥ ८३ ॥

उमालिङ्गनसङ्क्रान्तकुचकङ्कणमुद्रितम् ।
लिङ्गमेकाम्रनाथस्य सैकतं यत्र राजते* ॥ ८४ ॥

शिवबीजसमुद्भूतो वेदशाखाभिरुज्ज्वलः ।
मृकण्डुतनयाधारो रसालः शाखिनां वरः* ॥ ८५ ॥

स रुद्रशालवासित्वाद्रुद्रकोटिरिति स्मृतः ।
सुप्रसन्नो महादेव्या नित्यकल्याणसुन्दरः* ॥ ८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उमया सैकतैर्दिव्यैर्लिङ्गरूपेण निर्मितः ।
वर्तते यदधस्साक्षात् श्रीमदेकाम्रनायकः* ॥ ८७ ॥

हररोमसमुद्भूतसर्वतीर्थसमन्वयात् ।
सर्वतीर्थाह्वयं यत्र कम्पया पूरितं सरः* ॥ ८८ ॥

कामाक्षीति परा शक्तिः सांख्यायनमहामुनेः ।
तपसा स्वयमुद्भूता यत्रैकाम्रेश्वरप्रिया ॥ ८९ ॥

कटाक्षपूरविप्रुड्भिः जीववर्गांश्चतुर्विधान् ।
यथार्हमनुगृह्णाति चतुर्वर्गफलोदयैः ॥ ९० ॥

पञ्चतीर्थसरस्तीरे कामकोष्ठमहीतले ।
सिद्धतीर्थस्य चेशाने तृतीयांशे महाबिलम् ॥ ९१ ॥

जगत्कामकलाकारं भूमेः कुण्डलिनीपदम् ।
यावन्महाबिलं तत्र तावन्मण्डपतां गतम् ॥ ९२ ॥

तत्कामनगरं दिव्यमवन्नं सर्वसिद्धिदम् ।
तपःस्थानं बिलं सूक्ष्मं परमं व्योम तत्स्मृतम् ॥ ९३ ॥

आधिभौतिकमर्मांग(महोग्र) नाभिस्थानं भुवः परम् ।
तदेव ब्रह्मणः शम्भोः शरीरमिति कथ्यते ॥ ९४ ॥

लोकानां व्यंग्यशब्दत्वात् नाभिरित्यभिसंहितम् ।
श्रीपुरस्य त्रिमूर्तीनां ईश्वराणां दिशामपि ॥ ९५ ॥

लोकानां मेरुशैलस्य गोरूपाया (अ)वनेरपि ।
नवद्वारस्य मार्गं तत् भूयोनिस्तन्महाबिलम् ॥ ९६ ॥

कामकोटिस्स्मृतस्सोऽयं कारणादेव चिन्नभः ।
यत्र कामकृतो धर्मो जन्तुना येन केन वा ॥ ९७ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकृद्वाऽपि सुधर्माणां फलं फलति कोटिशः ।
तेनेदं कामकोटीति बिलद्वारं प्रसिद्धिमत् ॥ ९८ ॥

तत्तत्कामप्रदत्वाच्च कामकोष्ठमुदाहृतम् ।
आकाशशरीरं ब्रह्म सनादं बिन्दुसंज्ञितम् ॥ ९९ ॥

बिलरूपेण वै काञ्च्यां प्रत्यक्षं मोक्षदं पुरम् ।
अथापि रुद्रनेत्राग्निनिर्दग्धः काम एकतः ॥ १०० ॥

स सृष्टो लीलया मात्रा नेत्राभ्यां कोटिसंख्यया ।
कामकोटीति विख्यातं काञ्च्यां यच्चिन्मयं नभः ॥ १०१ ॥

अथ कामस्तृतीयोऽर्थः पुरुषार्थेषु विश्रुतः ।
तत्परस्ताच्छ्रुतो मोक्षः कोटिशब्देन शब्दितः ॥ १०२ ॥

कामकोटिः श्रुतो मोक्षः पुरुषार्थचतुर्थकः ।
अर्थोऽथवा स्मृतः कामः कामेशो धनदः स्मृतः ।
तत्कोटिदा पीठशक्तिः कामकोटीति विश्रुता ॥ १०३ ॥

एषा भूमिर्ब्रह्मपुत्री गोरूपेणाखिलं जगत् ।
धृत्वा वसति चाद्यापि तस्या भूमेः गवाकृतेः * ॥ १०४ ॥

वक्त्रं तु गोमुखक्षेत्रं श्रीपुरं शीर्षतां गतम् ।
हिमालयः कण्ठदेशः केदारं कुक्षिदेशगम् ॥ १०५ ॥

वाराणसी पृष्ठदेशो मूलं तत्कमलालयम् ।
काञ्चीदेशः पुरी काञ्ची तन्मध्यं कामकोष्ठकम् ॥ १०६ ॥

तस्य मध्यमिदं द्वारं बिलमेतत्सुविस्तृतम् ।
अथ तत्र सुविख्याते कामकोष्ठधरातले ।
गायत्रीमण्टपे तत्र बिलपीठासने शुभे ॥ १०७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गायत्र्योंकारकोणे सा कामाक्षी विश्वकारणम् ।
पद्मासने निषण्णासौ कामपीठनिवासिनी ॥ १०८ ॥

पाशांकुशेक्षुकोदण्डपञ्चबाणलसत्करा ।
तपनोडुपताटंका मीनकुण्डलधारिणी ॥ १०९ ॥

श्रीचक्रनगराधीशा श्रीविद्या परमेश्वरी ।
सचामररमावाणीसव्यदक्षिणसेविता ॥ ११० ॥

कामकोटीति विख्याता कामाक्षी कामदायिनी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥ १११ ॥

सा भण्डासुरसंहन्त्री शिवमूर्तिः शिवङ्करी ।
त्रिधा सा दृश्यते तत्र कामकोष्ठमहीतले ॥ ११२ ॥

द्विनेत्रा द्विभुजा गौरी दक्षहस्तलसच्छुका ।
लम्बवामकरांभोजा त्रिभङ्गीदक्षकुञ्चिता ॥ ११३ ॥

सा हि स्वर्णमयी मूर्तिः चूतलिङ्गस्य वल्लभा ।
तपस्विनी घनश्यामा सर्वशैवालयेश्वरी ॥ ११४ ॥

द्वितीया च तृतीयासौ महाकामेशवल्लभा ।
पाशांकुशेक्षुकोदण्डपञ्चबाणलसत्करा ॥ ११५ ॥

पूर्णा हि त्रिपुराबिम्बे गौरीबिम्बे कलात्मिका ।
आवाहिता चोत्सवार्हा निर्गुणा च रसालके ।
सगुणा लिङ्गरूपे च पुंरूपा विष्णुविग्रहे ॥ ११६ ॥

पञ्चाशत्कोटिविस्तीर्णे वर्तन्ते पृथिवीतले ।
कामकोटिमहापीठान्युत्तमानि हि तेष्वपि ॥ ११७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चतुष्षष्टिसहस्राणि तेषु चाष्टाष्टकानि हि ।
मातृकासंख्यया तेषु तेषु तत्त्वानुसंख्यया ॥ ११८ ॥

तेषु चाष्टादश श्रेष्ठान्येषु पीठत्रयं वरम् ।
तत्त्रये कामराजाख्यं प्रथमं हि प्रशस्यते ॥ ११९ ॥

तत्पीठे वाग्भवं कूटं हयग्रीवेण पूजितम् ।
जालन्धराख्यं द्वितीयं मध्यकूटं मनोभवम् ॥ १२० ॥

भृगुणाऽभ्यर्चितं पीठं ज्वालामुख्यां तु तद्विदुः ।
ओड्याणाख्यं तृतीयं तु परावीजस्वरूपकम् ॥ १२१ ॥

तत्पीठं कामरूपेऽस्ति व्यासेनोपासितं सदा ।
प्रागुक्तं कामराजाख्यं काञ्चीक्षेत्रे हि वर्तते ॥ १२२ ॥

तां पुरीं कामराजाङ्कमध्यगेश्या सुरक्षिताम् ।
सप्तमोक्षपुरीष्वन्यतमां प्राप स शङ्करः ॥ १२३ ॥

आश्रिताज्ञानतत्कार्यनाशकं देशिकोत्तमम् ।
चिन्मुद्रालङ्कृतकरं यतिराजं नमाम्यहम् ॥ १२४ ॥

इति श्रीशङ्करविजयमकरन्दे अष्टाविंश आस्वादः समाप्तः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ एकोनत्रिंश आस्वादः ॥

### काञ्चीक्षेत्रे शिवकाञ्ची - विष्णुकाञ्चीपुरनिर्माणं एकाम्रेश्वर-वरदराज-कामाक्ष्यालयनिर्माणं च ।

श्रितनिर्मलराजसेनचोलक्षितिपालोद्धृतविप्रदेवशालः ।
वरदस्य तथाऽऽम्रनायकस्याप्युरुवेश्मद्वयकृज्जयाय मे स्यात् ॥ १ ॥

प्रकृतिं च गुहाश्रयां महोग्रां स्वकृते चक्रवरे प्रवेश्य योऽयम् ।
अकृताश्रितसौम्यमूर्तिमार्यां सुकृतं वः स चिनोतु शङ्करार्यः ॥ २ ॥

ईशानविष्ण्वोरभिधानयुग्मात्काञ्चीनगर्यौ समकारयत्सः ।
कामाक्ष्यभिख्यारमणीयमूर्तेः देव्याः प्रतिष्ठां मुनिराडकार्षीत् ॥ ३ ॥

सर्वज्ञः शिष्यसंयुक्तः शङ्करो देशिकेश्वरः ।
भूमिं प्रदक्षिणीकृत्य ततः काञ्चीपुरं गतः ॥ ४ ॥ *

जम्बूद्वीपस्य कुर्वाणे शोभां भारतमण्डले ।
शस्तं काश्मीरनामानं देशं विद्योतयद्भृशम् ।
कामाक्ष्या नाम वाग्देव्याः स्थानं तत्पुरमासवान् ॥ ५ ॥

---

सङ्कलने मूलम्—जगद्गुरुरत्नमालास्तवतः १-२, १०७-१०[illegible] गुरुवंशकाव्यतः ३, गोविन्दनाथीयतः ४-५, शंकराभ्युदयतः ६-१[illegible] ६४-६८, ७२, ७६, ७७, शिवापराधक्षमापणस्तोत्रतः ११ ब्रह्मानन्दीयतः १२-१८, २५-२९, भगवत्पादाभ्युदयतः १९-२१ चिद्विलासीयतः २२-२४, ३०-३१, ५४-६०, १०३-१०४ देवीचतुष्षष्ट्युपचारपूजास्तोत्रतः ३२-५२, प्राचीनशङ्करविजयतः ५[illegible] १०५-१०६, बृहच्छंकरविजयतः ६१-६३, माधवीयतः ६६-६७ कल्याणवृष्टिस्तवतः ६९-७१, श्यामलानवरत्नमालिकातः ७३-७५ त्रिपुरसुन्दरीवेदपादस्तवतः ७८-१०२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पयोऽवगाह्याथ पयोनदीभवं जगाम सत्यव्रतमिन्दिरास्पदम् * ।
रमाधरास्वादरतोऽपि माधवो वपारसं यत्र स बह्वमन्यत ॥ ६ ॥

सरस्यथामज्ज्य समाचरन् क्रियाः निरस्य मोहं निबिडं तपोनिधिः ।
स पुण्यकोटीनिलयं समाश्रयन् स पुण्यकोटीनिलयं समप्यवैत् ॥

स मस्करी काञ्चिपुरीं गरीयसीमथ क्षितेरद्भुतकाञ्चिमैक्षत ।
असावशेषश्रुतिनीविरादरात् पुरारिराराधयते चिराय याम् ॥ ८ ॥

त्रयी यदद्वैतरसालवल्लिकाऽप्यनेकशाखोपचितात्मके उभे ।
तयोरियत्येव भिदा यदादिमा स्फुरत्फला मूर्ध्नि परा तु मूलतः ॥ ९ ॥

कुतूहलेनाथ कुलाद्रिकन्यकाकुचाग्रसीमैणमदेन मुद्रितम् ।
महोनिधिं तत्र महाहिसंगतं विलोकयन्नित्यमसौ व्यजिज्ञपत् ॥ १० ॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥ ११ ॥

सिद्धामृतसरःपार्श्वे तत्रातिष्ठज्जगद्गुरुः ।
आचार्यवैभवं श्रुत्वा सर्वे चागत्य देशिकम् ॥ १२ ॥

धृताञ्जलिपुटा भक्त्या प्रार्थयामासुरादरात् ।
अस्मिन्स्थले पद्मजेन कामाक्षी जगदम्बिका ॥ १३ ॥

भण्डासुरेन्द्रहन्त्री सा योगिनीवृन्दसेविता ।
ललिता परमेशानी पूजिता स्थापिताऽपि च ॥ १४ ॥

ब्रह्मप्रार्थनया ह्यत्र बिले वासं करोति च ।
महाकाली महालक्ष्मीस्तथा देवी सरस्वती ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसन्ति देवीसेवार्थं बिलमध्ये च शङ्कर ।
रात्रौ बिलान्महाकाली बहिर्वीथीगता जनान् ॥ १६ ॥

स्वदृष्टिगान्भक्षयति क्षीयन्ते पुरवासिनः ।
तथा कुरु बिलादेषा नागच्छेच्च बहिर्यथा ॥ १७ ॥

इति तं प्रार्थयामासुस्तथेत्याह यतीश्वरः ।
चकार स्तम्भनं काल्या बिलमध्ये स मन्त्रवित् ॥ १८ ॥

राजसेनेन सुमहत्पृथग्देवालयत्रयम् ।
प्राकारगोपुराद्याढ्यं दिव्यगर्भगृहोज्ज्वलम् ॥ १९ ॥

अर्धमण्टपसंशोभि मणिमण्टपमण्डितम् ।
कारयामास सर्वज्ञः सर्वलक्षणलक्षितम् ॥ २० ॥

तथा पूजोत्सवादींश्च तत्र तत्र प्रवर्तयन् ।
भक्तिं प्रवर्धयामास जनानामधिकाधिकम् ॥ २१ ॥

शिवकाञ्चीति तत्रैकां एकाम्रेशकृताश्रयाम् ।
नाम्ना तत्रैव कामाक्ष्याः पार्श्वे प्रासादमुन्नतम् ॥ २२ ॥

विष्णुकाञ्चीति नाम्नाऽन्यां वरदाधिष्ठितां पुरीम् ।
यथोक्तां कारयामास सर्वलक्षणलक्षिताम् ॥ २३ ॥

तां सर्वां नगरीं पश्यन् सर्वसंपत्समन्विताम् ।
प्रहर्षमतुलं लेभे देशिकेन्द्रोऽपि मानसे ॥ २४ ॥

### कामाक्ष्याः पुरतः श्रीचक्रप्रतिष्ठा ।

दुर्वासास्तु मुनिश्रेष्ठो देवीपूजनतत्परः ।
शङ्करं भगवत्पादं प्रावदत्प्रीतिपूर्वकम् ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मिन्क्षेत्रे परां देवीं कामाक्षीं बिलवासिनीम् ।
आराधयन्पञ्चदशीं जपंस्तिष्ठामि सर्वदा ॥ २६ ॥

बिलोपरि मया देव्या मूर्तिस्तु स्थापिता पुरा ।
श्रीचक्रं स्थापय त्वं तु कामाक्षीप्रीतयेऽनघ ॥ २७ ॥

कामकोटीपीठ इति ख्यातिं यातु जगत्तले ।
इत्युक्त्वा तं समालिंग्य दुर्वासाश्च तिरोऽभवत् ॥ २८ ॥

कामाक्ष्याः पुरतो भूमौ कामकोटीति विश्रुतम् ।
भगवान्भगवत्पादः श्रीचक्रं स्वयमालिखत् ॥ २९ ॥

आज्ञया गुरुनाथस्य राजसेनो महीपतिः ।
कामाक्ष्याः स्वर्णमूर्तिञ्च रमावाणीसमन्विताम् ॥ ३० ॥

सुरम्यां कारयामास शिल्पशास्त्रविशारदैः ।
श्रीचक्रपश्चाद्भागे च कामाक्षीं स्वर्णनिर्मिताम् ।
प्रतिष्ठाप्य यतीशानः स्वयमेनामपूजयत् ॥ ३१ ॥

उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि ।
अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदम्ब सुखीकुरु ॥ ३२ ॥

कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।
भगवति रमणीये रत्नसिंहासनेऽस्मिन् उपविश पदयुग्मं हेमपीठे निधाय॥

दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ३४ ॥

गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतमिश्रम् ।
हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुरीकुरु मातः ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलजद्युतिना करेण जातीफलतक्कोललवङ्गगन्धयुक्तैः ।
अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं विधीयताम् ।' ३६ ॥

निहितं कनकस्य संपुटे पिहितं रत्नपिधानकेन यत् ।
तदिदं जगदम्ब तेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥ ३७ ॥

दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादरात् जननि त्वामहमुष्णवारिभिः ॥ ३८ ॥

बालार्कद्युति दाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ।
मुक्ताभिर्ग्रथितं सुकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥ ३९ ॥

मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।
केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमात्
ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च मुक्तामणिम् ॥ ४० ॥

मातः फालतले तवातिविमले काश्मीरकस्तूरिका-
कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पद्रवं
पादौ चन्दनलेपनादिभिरहं संपूजयामि क्रमात् ॥ ४१ ॥

रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः ।
अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ॥ ४२ ॥

मालतीवकुलहेमपुष्पिकाकाञ्चनारकरवीरकैतकैः ।
कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः
कर्पूराकलितैः शिरैर्मधुयुतैर्गोसर्पिषा लोडितैः ।
श्रीखण्डागरुगुग्गुलुप्रभृतिभिः नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥ ४४ ॥

रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषालोडितैः
दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः ।
आताम्रज्वलदुज्ज्वलप्रविलसद्रत्नप्रदीपैस्तथा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥ ४५ ॥

मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तानिका-
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररंभाफलैः ।
एलाजीरकहिंगुनागरनिशाकुस्तुंभरीसंस्कृतैः
शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्चयन् ॥ ४६ ॥

एलालवङ्गादिसमन्वितानि तक्कोलकर्पूरविमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ४७ ॥

सविनयमथ दत्वा जानुयुग्मं धरण्यां
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ।
मुखकमलसमीपे तेऽम्ब सार्धत्रिवारं
भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ॥ ४८ ॥

अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ ४९ ॥

पदे पदे यत्परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तत्सर्वपापक्षयहेतुभूतं प्रदक्षिणं ते परितः करोमि ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रक्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥ ५१ ॥

एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान् क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ५२ ॥

सर्वज्ञपीठारोहणम् ।

आधाय सौम्यवपुषं प्रकृतिं महोग्रामावाह्य विग्रहतनूमनुचक्रराजम् ।
आह्लादिते च विषये विबुधेषु चाप्तेष्वासादितेषु वशतां चरणौ वहत्सु ॥

सर्वज्ञपीठमारोढुं उत्सेहे देशिकोत्तमः ।
ततोऽशरीरिणी वाणी नभोमार्गाद्व्यजृम्भत ॥ ५४ ॥

भो यते भवता सर्वविद्यास्वपि विशेषतः ।
कृत्वा प्रसंगं विद्वद्भिर्जित्वा तानखिलानपि ॥ ५५ ॥

सर्वज्ञपीठमारोढुं उचितं ननु भूतले ।
इति वाचः समाकर्ण्य किमेतदिति विस्मितः ॥ ५६ ॥

किञ्चिदालोकयन्नास्त किं कुर्यामिति मानसे ।
ताम्रपर्णीसरित्तीरवासिनो विबुधास्तदा ॥ ५७ ॥

षड्दर्शिनीसुधाधार्धिपारदृश्वगुणोन्नताः ।
आगत्य तं देशिकेन्द्रं प्रणिपत्येदमूचिरे ॥ ५८ ॥

भिदा सत्यमिवाभाति त्वया त्वैक्यं निगद्यते ।
देवभेदो मूर्तिभेदः प्रत्यक्षेणात्र लक्ष्यते ॥ ५९ ॥

स्वर्गादिफलभेदश्च सर्वशास्त्रविनिश्चितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्प्रत्यक्षं च मिथ्येति कथयस्यधुना यते ।
इति भेदरतान्वादैश्चक्रे चाद्वैतनिष्ठितान् ॥ ६० ॥

### श्रीसर्वज्ञात्मनः शिष्यतया स्वीकारः ।

श्रीमच्छङ्करदेशिकेन्द्रभणितिभुग्ने च भग्नानने
तातै वर्धननाम्नि सार्धमनुगैः श्रीताम्रपर्णीचरैः ।
सर्वज्ञासनमारुरुक्षति गुरौ धीरं निवर्त्य श्रुतौ
डिम्भः कोऽपि तमूनसप्तमसमो वादैररौत्सीत्त्यहम् ॥ ६१ ॥

तुर्येऽह्न्यथ शङ्करोदितसमाधाने प्रशान्ते शिशौ
तातादेर्धुरि संयियासति च तं दृष्ट्वाऽतिहृष्टान्तरः ।
आषष्ठादप एव भुक्त इतरन्नाख्याति पृष्टोऽप्यसौ
ओमित्येव गदत्यजस्रमिति तद्वृत्तं च तातादवैत् ॥ ६२ ॥

---

(६१) सर्वज्ञपीठारोहणमधिकृत्य द्वेधा कथाक्रमो दृश्यते इति पूर्वमेव सूचितम् (पृ. १३६-१३७) शिवरहस्ये, बृहच्छंकरविजये, प्राचीनशंकरविजये, आनन्दगिरीये, जगद्गुरुरत्नमालास्तवे च काञ्च्यां सर्वज्ञपीठारोहणं, माधवीये सदानन्दीये गुरुवंशकाव्ये च काश्मीरे । काश्मीरमिति काञ्ची प्रसिद्धा इति "भूयः काञ्चीपुरं गतः । जम्बूद्वीपस्य कुर्वाणे शोभां भारतमण्डले । शस्तं काश्मीरनामानं देशं विद्योतयद्भृशम् । कामाक्ष्या नाम वाग्देव्याः स्थानं तत्पुरमाप्तवान्" इति गोविन्दनाथीये । व्यासाचलीयेऽपि "जम्बूद्वीपे शस्यतेऽस्यां पृथिव्यां तत्राप्येतन्मण्डलं भारताख्यम् । काश्मीराख्यं मण्डलं तत्र शस्तं यत्रास्ते सा शारदा वागधीशा' इति सर्वज्ञपीठारोहणकथां उपक्रम्य, "एवं निरुत्तरपदां स विधाय देवीं सर्वज्ञपीठमधिरुह्य मठे स्वकॢप्ते । मात्रा गिरामपि तथोपगतैश्च मिश्रैः संभावितः कमपि कालमुवास काञ्च्याम्" इति उपसंहारः कृत इति काश्मीराख्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मत्वैनं सदृशाधिकारिणमधात्तं ब्रह्मदेशोद्भवं
प्राप्तानुज्ञमपि स्वतो जनयितुर्वाग्मी स वाचंयमम् ।
आख्यामप्यकरोत्स च महादेवाभिधस्याग्रतः
सर्वज्ञाभिधशङ्करार्य इति यं स्वस्याथ पीठे न्यधात् ॥ ६३ ॥

तत्र स्थितान्निगमशेखरदेशिकेन्द्रो वादे विजित्य विविधानपि वावदूकान् ।
पाणौ सनन्दनमसाववलंब्य विद्याभद्रासनं तदधिरोहितुमुच्चचाल ॥ ६४ ॥

शृङ्गारसान्द्रकवितासरणावजित्वा मामङ्ग साहसमिदं सहसा न कुर्याः ।
इत्यूचिषीं विधिवधूं च विजित्य विद्याभद्रासनं विधिरिव स्वयमध्यरुक्षत् ॥

ततो दिविषदध्वनि ध्वनिनिवारिताशावलीधुरन्धरसमीरितत्रिदशपाणिकोणाहतः ।
अरुन्ध हरिदन्तरं स्वरभरैर्भ्रमत्सिन्धुभिः घनाघनघनस्वनप्रथमबन्धुभिर्दुन्दुभिः ॥

कचभरनहनं पुलोमजायाः कतिचिदहान्यपगर्भकं यथा स्यात् ।
गुरुशिरसि तथा सुधाशनाः स्वस्तरुकुसुमान्यथ हर्षतोऽभ्यवर्षन् ॥ ६७ ॥

अद्वैतसिद्धान्तरहस्यमित्थं आचन्द्रतारार्कमनाकुलं सः ।
कृत्वा विकुर्वाणमनाः प्रणम्य तुष्टाव देवीं निगमान्तनीवीम् ॥ ६८ ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्ये स्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् ।

---

काञ्च्या आसीदिति भाति । माधवीये उत्तरदेशगः काश्मीर एव यात्रामध्ये उद्दिष्टः । यत्र शङ्कराचार्यगिरौ शारदामन्दिरपरिसरे शंकर-स्मृतिमण्डपोऽधुना चकास्ति तत्स्मारकतया । काश्मीरे सर्वज्ञपीठरक्षित्र्या वाण्या जये, तस्याः शारदायाः तुष्टायाः भगवत्पादैः साकं शृङ्गगिरि-क्षेत्रमागतायास्तत्र प्रतिष्ठा इति गुरुवंशकाव्ये । मण्डनेन साकं वादे प्रवृत्ते, तत्पत्न्यां उभयभारत्यामपि जितायां, तस्याः शापावसाने, भगवत्पादैः प्रार्थितायाः शृङ्गगिर्यादौ शारदाम्बात्वेन सन्निधानमिति माधवीये ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चापं बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥ ६९ ॥

कल्हारोत्पलमल्लिकामरुवकैः सौवर्णपङ्केरुहैः
जातीचम्पकमालतीवकुलकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः क्लृप्ताः स्रजो मालिकाः
सङ्कल्पेन समर्पयामि वरदे सन्तुष्टये गृह्यताम् ॥ ७० ॥

लक्ष्मीमौक्तिकलक्षकल्पितसितच्छत्रं तु धत्ते रसात्
इन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती ।
वीणामेणविलोचनाः सुमनसां नृत्यन्ति तद्रागवत्
भावैराङ्गिकसात्त्विकैः स्फुटरसं मातस्तदाकर्ण्यताम् ॥ ७१ ॥

इत्थं पञ्चदशाक्षरीमनुगतैर्वर्णैः कृतोपक्रमैः
कामाक्षीं बहिराहितस्थितिमतीं पद्यैः समाराधयन् ।
कंपातीरनिवासिनीं परचितं नन्तुं बिलाभ्यन्तरं
गच्छन् द्वारि कृतासिकां भगवतीं तुष्टाव स श्यामलाम् ॥ ७२ ॥

ओङ्कारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ ७३ ॥

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ७४ ॥

अवटुतटघटितचूलीताडिततालीपलाशताटङ्काम् ।
वीणावादनवेलाकंपितशिरसं नमामि मातङ्गीम् ॥ ७५ ॥

इत्थं तामभिवन्द्य विश्वजननीमीशामथान्तर्विशन्
कल्पानोकहकाननालिसुभगे कंपानदीरोधसि ।
कामाक्षीपदपद्मपूतशिखरं काञ्चित्पुरः काञ्चन-
क्षोणीभृत्कुलधूर्वहं प्रमुमुदे पश्यन् सपद्यञ्जसा ॥ ७६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इष्टामथ स योगीन्द्रश्चाष्टापदगिरिस्थिताम् ।
तुष्टाशयः सावरणां तुष्टाव परदेवताम् ॥ ७७ ॥

अकारादिक्षकारान्तवर्णावयवशालिनी ।
वीणापुस्तकहस्ताऽव्यात् प्रणो देवी सरस्वती ॥ ७८ ॥

तरङ्गभ्रुकुटीकोटिभंग्या तर्जयते जराम् ।
सुधामयाय शुभ्राय सिन्धूनां पतये नमः ॥ ७९ ॥

तस्य मध्ये मणिद्वीपः कल्पकारामभूषितः ।
अस्तु मे ललितावासः स्वस्तिदा अभयङ्करः ॥ ८० ॥

कदम्बमञ्जरीनिर्यद्वारुणीपारणोन्मदैः ।
द्विरेफैर्वर्णनीयाय वनानां पतये नमः ॥ ८१ ॥

तत्र वप्रावलीलीलागगनोल्लङ्घिगोपुरम् ।
मातः कौतूहलं दद्यात् संहार्यं नगरं तव ॥ ८२ ॥

मकरन्दझरीमज्जन्मिलिन्दकुलसंकुलाम् ।
महापद्माटवीं वन्दे यशसा संपरीवृताम् ॥ ८३ ॥

तत्रैव चिन्तामणिधोरणीभिः विनिर्मितं रोपितरत्नशृङ्गम् ।
भजे भवानीभवनावतंसं आदित्यवर्णं तमसः परस्तात् ॥ ८४ ॥

मुनिभिः स्वात्मलाभाय यच्चक्रं हृदि सेव्यते ।
तत्र पश्यामि बुद्ध्या तदक्षरे परमे व्योमन् ॥ ८५ ॥

पञ्चब्रह्ममयो मञ्चः तत्र यो बिन्दुमध्यगः ।
तत्र कामेशे वासाऽयमायुष्मन्तं करोतु माम् ॥ ८६ ॥

नानारत्नगुलुच्छालीकान्तिकिर्मीलितोदरम् ।
विमृशामि वितानं तेऽतिश्लक्ष्णमतिलोमशम् ॥ ८७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्यङ्कतल्पोपरि दर्शनीयं सबाणचापाङ्कुशपाशपाणिम् ।
अशेषभूषारमणीयमीडे त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ८८ ॥

जटारुणं चन्द्रकलाललामं उद्वेललावण्यकलाभिरामम् ।
कामेश्वरं कामशरासनाङ्कं समस्तसाक्षि तमसः परस्तात् ॥ ८९ ॥

तत्र कामेशवामाङ्के खेलन्तीमलिकुन्तलाम् ।
सच्चिदानन्दलहरीं महालक्ष्मीमुपास्महे ॥ ९० ॥

षोढान्यासादिदेवैश्च सेविता चक्रमध्यगा ।
कामेशमहिषी भूयः षोडशी शर्म यच्छतु ॥ ९१ ॥

श्रीचक्रस्थां शाश्वतैश्वर्यदात्रीं पौण्ड्रं चापं पुष्पबाणान् दधानाम् ।
बन्धूकाभां भावयामि त्रिनेत्रां तामग्निवर्णां तपसा ज्वलन्तीम् ॥ ९२ ॥

भण्डमण्डनलीलायां रक्तचन्दनपङ्किलः ।
अंकुशस्तव तं हन्यात् यश्च नो द्वेषते जनः ॥ ९३ ॥

चञ्चद्बालातपज्योत्स्नाकलामण्डलशालिने ।
ऐक्षवाय नमो मातर्बाहुभ्यां तव धन्वने ॥ ९४ ॥

मह्यं द्रुह्यन्ति ये मातस्त्वद्ध्यानासक्तचेतसे ।
तानम्ब सायकैरेभिरव ब्रह्मद्विषो जहि ॥ ९५ ॥

नाकस्त्रीणां किन्नरीणां नृपाणामप्याकर्षत् चेतसा चिन्तनीयम् ।
त्वत्पाणिस्थं कुङ्कुमाभं शिवे यं द्विष्मस्तस्मिन् प्रति मुञ्चामि पाशम् ॥

अभिचारादिभिः कृत्यां यः प्रेरयति मय्युमे ।
तव हुंकारसन्त्रस्ता प्रत्यक्कर्तारमृच्छतु ॥ ९७ ॥

शरणं करवाण्यम्ब चरणं तव सुन्दरि ।
शपे त्वत्पादुकाभ्यां मे नान्यः पन्था अयनाय ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथोपास्तिक्षतिर्न स्यात् तव चक्रस्य सुन्दरि ।
कृपया कुरु कल्याणि तथा मे स्वस्तिरायुषी ॥ ९९ ॥

कदा वसुदलोपेते त्रिकोणनवकान्विते ।
आवाहयामि चक्रे त्वां सूर्याभां श्रियमैश्वरीम् ॥ १०० ॥

हस्ताम्भोजप्रोल्लसच्चामराभ्यां श्रीवाणीभ्यां पार्श्वयोर्वीज्यमानाम् ।
श्रीसम्राज्ञि त्वां सदालोकयेयं सदा सद्भिः सेव्यमानां निगूढाम् ॥

यत्रैव यत्रैव मनो मदीयं तत्रैव तत्रैव तव स्वरूपम् ।
यत्रैव यत्रैव शिरो मदीयं तत्रैव तत्रैव पदद्वयं ते ॥ १०२ ॥

एवं स्तुवंस्तामाराध्य कामाक्षीं ज्ञानरूपिणीम् ।
अथ तस्याश्च पूजायै ब्राह्मणान् विनियुज्य च ॥ १०३ ॥

एकाम्रेश्वरपूजार्थं विप्रानादिश्य भूयसः ।
श्रीमद्वरदराजस्य नमस्यायै न्ययुंक्त सः ॥ १०४ ॥

## कामकोटिपीठ-शारदामठप्रतिष्ठा ।

सर्वज्ञपीठमधिरुह्य ततस्तदग्रे मिश्रान्विजित्य सहसोपनतान्प्रयागात् ।
अध्यास्त काञ्चिमभिमण्डितकामकोटिपीठो मठं निजमवाप्य स शारदाख्यम् ॥

निन्ये योगिसुरेश्वरोपचरितः श्रीकामकोट्याह्वये
लोकाचार्यपदे स्थितः स दिवसान्सर्वज्ञपीठे सुखम् ।
ख्यातस्तत्र तदादि तेन विजितां वाणीमनुस्मारयन्
श्रीमच्छङ्करदेशिकस्य जयति श्रीशारदाख्यो मठः ॥ १०६ ॥

परकीयवपुःप्रवेशशैल्या स्मरतन्त्राणि विदन् वशी न लोभ्यात् ।
अजितातनुभारतीं वशे यः सुकृतं मे सुतरां गुरुः स चीयात् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यातस्तु बुधेषु सर्वदिग्भ्यः प्रदिशन्नाशु पराभवं य एभ्यः ।
भूताखिलवित्पदश्च काञ्च्यामधृतार्तिः स दिशेच्छ्रियं च कांचित् ॥

इति षिपदाद्धिमाद्रिसेन्यं क्रमशो धर्मविचारणाय दिव्यम् ।
वेकाञ्चि च शारदामठं योऽस्म्यधिकं नस्तुलमातनोतु सोऽयम् ॥

इति श्रीशङ्करविजयमकरन्दे एकोनत्रिंश आस्वादः समाप्तः ॥

---

# ॥ त्रिंश आस्वादः ॥

## पीठव्यवस्था तीर्थयात्रा च ।

पृथिवीधवपद्मपादहस्तामलकानन्दगिरीनतिप्रशस्तान् ।
चतुरोऽकृत यश्चतुर्षु पीठेष्वतुलां नश्चतुरो मुदं स देयात् ॥

---

सङ्कलने मूलम्—जगद्गुरुरत्नमालास्तवतः १, भगवत्पादाभ्यु-
यतः २-१२, १६-२०, ४७-४९, मार्कण्डेयसंहितातः १३-१४,
२, गुरुवंशकाव्यतः १५-३५, लक्ष्मीनृसिंहपञ्चरत्नतः २४-
८, पाण्डुरङ्गाष्टकतः ३०-३३, भगवन्मानसपूजातः ३९-४५,
विन्दाष्टकतः ५०-५२, भजगोविन्दतः ५५-६०, बोधेन्द्रसरस्वतीकृत-
ङ्करभाष्यव्याख्या—अद्वैतभूषणतः ६२ ॥

(१) पृथिवीधवाद्याः चत्वारः चतुर्षु पीठेषु प्रथमाचार्यत्वेन
पिता इति जगद्गुरुरत्नमालास्तवे । जगन्नाथ-शृङ्गगिरि-द्वारका-
दरिकाश्रमेषु चतुर्दिग्गतेषु विमला-शारदा-कालिका-ज्योतिष्मतीपदाङ्कितेषु
तामलक-पृथ्वीधर-पद्मपाद-तोटकान् पीठाधिपतींश्चक्र इति तद्व्याख्यायां
षमायाम् । तत्र प्रमाणं प्राचीनशङ्करविजयगताः श्लोका इमे-
कैलासाद्विनिवर्तने प्रथमतो योऽयं बदर्याश्रमे ज्योतिष्मत्यभिधो
रधायि सुमहान् पीठस्तदाख्ये मठे । तस्मिंस्तोटकमेव पूर्वनिहितं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याधात् जगन्नाथगं तं हस्तामलकं सनन्दनमपि न्यास्थत् प्रतिद्वारकम् ।" श्रीसंज्ञेऽथ मठेऽनुतुङ्गविहिते श्रीशारदासंज्ञिते पीठे तं पृथिवीधवं च निहितं प्रागेव कुर्वन् स्थिरम्" । "निन्ये योगिसुरेश्वरोपचरितः श्रीकामकोट्याह्वये लोकाचार्यपदे स्थितः स दिवसान् सर्वज्ञपीठे सुखम्"।

पीठाधिपत्यविषये भूयसा विसंवादो दृश्यते। ज्योतिष्मतीपीठे तोटक इत्यत्र परं न विसंवादः। आनन्दगिरीये शृङ्गगिरौ पद्मपादः, काञ्च्यां सुरेश्वर इति द्वयोरेव पीठयोः तदाचार्ययोश्च स्मरणम्। माधवीये 'कतिचन विनिवेश्याथर्श्यशृंगाश्रमादौ' इति संग्रहः। व्यासाचलीये 'एकः शाखी शङ्कराख्यश्चतुर्धा स्थानं भेजे पापशान्त्यै जनानाम्। शिष्यैः स्कन्धैः शिष्यशाखैर्महद्भिः ज्ञानं पुष्पं यत्र मोक्षप्रसूतिः ॥ गामाक्रम्य पदेऽधिकाञ्चि निबिड स्कन्धैश्चतुर्भिः तथा व्यावृण्वन् भुवनान्तरं' इति अस्पष्टं सूचनम्। गुरुवंशकाव्ये जगन्नाथे पद्मपादः, द्वारकायां हस्तामलकः, शृङ्गगिरौ सुरेश्वरश्च स्थापित इति। हुल्सूचाख्येन शृंगगिरिजगद्गुरुमठीयग्रन्थागारादुद्धृत्य प्रकाशिते कोशे 'तत्र स्थित्वा द्वादशाब्दं (शङ्करः) यतिं पृथ्वीधराभिधम्। विद्यापीठाधिपं कृत्वा' इति शङ्करेण साक्षात्पृथ्वीधर एव स्थापित इति स्मर्यते। कृष्णराजेन्द्रकृत-शृंगगिरिमठगुरुपरंपरास्तोत्रे 'गुरुः श्रीशङ्कराचार्यः षण्मतस्थापनप्रभुः। विश्वरूपाचार्ययोगी (पृथ्वीधराचार्ययोगी - सुरेश्वराचार्ययोगी इत्यप्यत्र पाठभेदो दृश्यते।) नित्यबोधघनाभिधः' इति दृश्यते। पृथ्वीधर एव हस्तामलक इति गोवर्धनमठजगद्गुरुपरंपरानाममालास्तोत्रे 'पृथ्वी-धराह्वयं श्रीमद्धस्तामलकयोगिनम्' इति। सुधन्वलेखेऽपि 'पृथ्वी-धराभिधेयहस्तामलकाचार्यान्' इति दृश्यते। भगवत्पादानां साक्षात् शिष्यभूतो हस्तामलकः कथं सुरेश्वरशिष्य इति काचिदनुपपत्तिरुद्भाव्ये-तात्र। जगद्गुरुरत्नमालास्तवकाराः सदाशिवब्रह्मेन्द्रास्तु 'स्थिरबोधघन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतापपद्मार्गः गुरुपूर्व्यां धर्मविश्वरूपनाम्नोः' इति नित्यबोधघनश्चैव पृथ्वीधव इति नामान्तरमिति निर्दिशन्ति ॥

द्वारकामठाधिपतिभिः ७२ तमैः श्रीराजराजेश्वरशङ्कराश्रम श्रीपादैः 'अस्या मातृकाया अतिजीर्णतया गलिताक्षरप्रायत्वात् विश्वरूपाचार्यपर्यन्तानप्याचार्यान् अन्तर्भाव्य पत्रिकेयं प्रकाशिता अभिनवा' इत्युपोद्घातेन साकं प्रकाशिते विमर्शे सुरेश्वरो द्वारकायां. हस्तामलकः शृङ्गगिरौ, तोटकः ज्योतिर्मठे, पद्मपादो गोवर्धने च पीठाधिपतिरिति निरूप्यते। तैरेव प्रकाशिते शङ्करशिष्यनृपसुधन्वालिखिते लेखे युधिष्ठिरशके २६६३, आश्विनशुक्ल १५ तिथ्यङ्किते 'ब्रह्मक्षत्राद्यस्मत्प्रमुखनिखिलविनेयलोकसंप्रार्थनया चतस्रो धर्मराजधान्यो जगन्नाथ-बदरी-द्वारका - शृङ्गर्षिक्षेत्रेषु भोगवर्धन- ज्योतिः- शारदा- शृङ्गेरी मठापरसंज्ञकाः स्थापिताः। तत्रोत्तरदिशो योगिजनप्राधान्येन धर्ममर्यादारक्षणं सुकरमेवेति ज्योतिर्मठे श्रीतोटकापरनाम्नः प्रतर्दनाचार्यान्, अथ शृङ्गर्ष्याश्रमे शृङ्गर्षिसमस्वभावान् पृथ्वीधराभिधेयहस्तामलकाचार्यान्, भोगवर्धने स्वत एवाभिमतत्वेन अत्यन्तोग्रस्वभावानपि सर्वज्ञकल्पपद्मपादापरनामसनन्दनाचार्यान्, अथ बौद्धकापालिकादिसकलवादिभूयिष्ठपश्चिमस्यां दिशि वादिदैत्याङ्कुरः पुनर्मा भवत्विति, शारदापीठे किल द्वारकायां जैनैरुत्सादितवज्रनाभनिर्मितभगवदालयादिदुर्दशां दूरीकृत्य भगवद्भिः त्रिलोकसुन्दरनाम्ना पुनः सन्निबद्धभगवदालयश्रीकृष्णादिसकलमर्यादासुसंस्कृतायां अधिगताशेषलौकिक - वैदिकतत्त्व-विश्वविख्यातकीर्ति-सर्वज्ञानमयान् विश्वरूपापरनामसुरेश्वराचार्यांश्च अस्मत्सर्वलोकाभिमतिपूर्वकमभिषिच्य, एवं चतुर्भ्य आचार्येभ्यः चतस्रो दिशः आदिष्टा भारतवर्षस्य'। इति स्पष्टं आचार्य-स्थानसंकेतो लक्ष्यते ॥

गोवर्धनमठ जगद्गुरुनाममालास्तोत्रे प्रथमाचार्यत्वेन पद्मपादा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो वेदविरुद्धानि विरुद्धानीतरेतरम्।
विरुद्धानि सति क्षोदे निजाभ्युपगमैरपि ॥ २ ॥

---

चार्याणामभिषेकः स्पष्टं वर्ण्यते, यः सन्दर्भो मूल एव पश्चादुद्ध्रियते। तत्तत्पीठपरम्परागतैराचार्यैरद्यतनैः स्वप्रथमाचार्यत्वेन स्मर्यमाणास्तु—शृंगगिरौ द्वारकायां च सुरेश्वराचार्याः, जगन्नाथे पद्मपादाचार्याः। हस्तामलकाचार्यास्तु न कुत्रापीति तत् तेषां भूषणमेव ब्रह्मविद्वरिष्ठानाम्। काञ्च्यां कामकोटिपीठे सुरेश्वराचार्याः तदनु सर्वज्ञात्ममुनय इति क्रमः स्मर्यते। एकस्यत्र पीठेषु त्रिष्वाचार्यत्वं कथं घटेतेति तत्रोपपत्तिविचारे—'भाष्यव्याख्य'प्रकरणगतं संप्रधार्यैव वृत्तं मेधावी स प्रथितधिषणं प्राह तं वृत्तिकारम्। न त्वां न्यस्याम्यधिमठमिह क्वापि पीठाधिपत्ये त्रातुं सर्वांस्त्वमसि त इतस्त्वां गुरुं संगिरन्ताम्' इति बृहच्छंकरविजयवचनं मार्गं निर्दिशतीव। शृंगगिरौ प्रथमाचार्यत्वेन निवेशिताः सुरेश्वराचार्याः पृथ्वीधरं (नित्यबोधघनापराभिधं) तत्र प्रतिष्ठाप्य, भगवत्पादान् विजययात्रायामनुससुः, पुनः द्वारकायां निवेशितास्त एव ब्रह्मस्वरूपाचार्यान् तत्र निवेश्य भगवत्पादामनुससुः; काञ्च्यां च 'पीठे न्यस्य सुरेश्वरं समवितुं सर्वज्ञसंज्ञं मुनिं' इति प्राचीनशङ्करविजयोक्तरीत्या सर्वज्ञात्मचरणानां स्थापनपर्यन्तं ते पीठाधिपतय आसन्निति ग्रहणे सर्वमुपपद्येतेति भाति॥

गोवर्धनपीठजगद्गुरुपरंपरानाममालायां भगवत्पादानां शिष्याः अपीठगाश्च नामतो गृह्यन्ते—यथा "चित्सुखं भारतीवंशं सुबोधञ्च प्रभाकरम्। उदङ्कं दृढभक्तं च मेधातिथिमुनीश्वरम। नित्यानन्दं शुद्धकीर्तिं योगानन्दयतीश्वरम्। ब्रह्मस्वरूपं सुमतिं गुरोः शिष्यान्नमाम्यहम्। सुधन्वानं राजसेनं पूर्णवर्माणमेव च। वृषदेवं च नृपतीन् गुरुभक्तान् भजे सदा॥ अद्वैताचार्यसच्छिष्यान् षोडशैतानपीठगान्। शङ्कराचार्यबोधेन्दुकलाभूतान् समाश्रये॥" इति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवैदिकानि तान्येष मतानि द्वैतवादिनाम् ।
धर्मशास्त्ररथारूढो वेदखड्गधरो विभुः ॥ ३ ॥
यथा श्वापदयूथानि लीलयाऽऽखेटयेन्नृपः ।
तथा विद्राव्य विज्ञानचक्रवर्ती यतीश्वरः ॥ ४ ॥
जगन्निरीतिकं चक्रे शङ्करः शङ्करेहितः ।
निर्विशेषं परं तत्वं गोचरीकर्तुमक्षमाः ॥ ५ ॥
ये भक्तिमन्तः श्रद्धाढ्याः मन्दास्तेष्वनुकम्पया ।
षण्मतस्थापनं कृत्वा सर्वाननुग्रहीद्विभुः ॥ ६ ॥
शिवविष्ण्वंबिकाभानुगणेशस्कन्दमूर्तिषु ।*
यत्र यस्य भवेत्प्रीतिः देवतायामुपासितुम् ॥ ७ ॥
स देवतां तां भजतां श्रद्धाभक्तिपुरस्सरम् ।
श्रुतिप्रसिद्धाः षडिमाः देवताः कामितप्रदाः ॥ ८ ॥
फलाभिसन्धिमुत्सृज्य भजतां मोक्षदाश्च ताः ।
श्रुतिस्मृतिसदाचारविरुद्धान्यत्र यानि वा ॥ ९ ॥
वर्जनीयान्यवद्यानि तानि तन्त्रोदितान्यपि ।
तानि पाषण्डमोहार्थमूचुर्हरिहरादयः ॥ १० ॥
श्रुतिघण्टापथे मोक्षमभिनिष्क्रामति स्थिते ।
किमर्थं वाऽतिदुर्गेण चञ्चूर्यध्वे कदध्वना ॥ ११ ॥

---

(७) गणाधिपकपालिष्विति मूले पाठः । आनन्दगिरीयेऽन्यत्र च कापालिकस्यैव शैवादिषण्मतेऽवन्तर्भावः दृश्यते, न तु कौमारस्य । परं वृद्धव्यवहारः सकौमाराणामेव षण्मतत्वं न सकापालिकानाम् । कापालिकमतसंग्रहीता आनन्दगिरिरपि पूर्वपक्षवृत्त्यैवेति विशदयति । कौमारग्रहणे मार्कण्डेयसंहिता प्रमाणम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुशिष्टाः षडप्येवं भजन्तः स्वेष्टदेवताम् ।
तमेव परमाचार्यममन्यन्त पृथक्पृथक् ।
ततः श्रीशङ्कराचार्यो जगद्गुरुरितीर्यते ॥ १२ ॥

आदित्यं जगदम्बिकां हरिमिभेन्द्रास्यं महेशं गुहं
पूजायै परिपूर्णमानसतया मेने यतिः शङ्करः ।
शिष्येभ्यश्च ददौ मुदा सुविमलां श्रीशैवपञ्चाक्षरीं
विद्यावैदिकमार्गदर्शनगुरुः श्रीषण्मतस्थापकः ॥ १३ ॥

अद्वैतमतनिविष्टैः पञ्चायतनार्चनं प्रकर्तव्यम् ।
एवं निर्णयमतनोद्वैदिकमार्गप्रवर्तको योगी ॥ १४ ॥

शैवादयः षड्यमिनो यतीशं संप्रार्थ्य तं स्वस्वमतोदयाय ।
अनुग्रहं प्राप्य जगद्गुरोश्च ते प्रस्थिताः स्वस्वमतप्रवीणाः ॥ १५ ॥

भूचक्रवाले संस्थाप्य श्रौतमद्वैतदर्शनम् ।
रक्षार्थं प्रचयार्थं च तस्य योगी व्यचिन्तयत् ॥ १६ ॥

अद्य निष्कण्टकीभूता समुद्भूतेन सर्वतः ।
तत्वज्ञानेन वसुधा सस्येनेव विराजते ॥ १७ ॥

एतावता न मन्येऽहमात्मनः कृतकृत्यताम् ।
गते तु मयि सर्वं च पुनरप्याकुलीभवेत् ॥ १८ ॥

---

(१५) शैवादयः शैवशाक्तगाणपत्यवैष्णवसौरकापालिकाः षट् यमिनः परमतकालानलाचार्य - त्रिपुराकुमाराचार्य - गिरिजाकुमाराचार्य लक्ष्मणाचार्य-दिवाकराचार्य-वटुकनाथाचार्याः (गुरुवंशकाव्यव्याख्यातः)। कथेयं अनन्तानन्दगिरिविरचिते शङ्करविजये ६७-७२ प्रकरणेषु विस्तततया दृश्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्विद्यामठानन्यानपि काष्ठासु कारयन् ।
विद्याप्रवचनं शिष्यैरास्माकैस्तत्र तत्र च ॥ १९ ॥

प्रयोज्यास्मत्संप्रदायमविच्छिन्नं च कारये ।
पारंपर्यागते सम्यगुपदेशक्रमे सति ॥ २० ॥

न विच्छिद्येत सद्धर्म इति चक्रे मतिं शुभाम् ।
पुनः प्रतस्थे क्षेत्रादियात्रायै शङ्करो गुरुः ॥ २१ ॥

अहोबिलनृसिंहाख्यस्थले श्रीशङ्करो गुरुः ।
नृसिंहयन्त्रोद्धरणं चकार जगतां मुदे ॥ २२ ॥

पश्यन्ननिमिषं देवं भक्तानुग्रहतत्परम् ।
चेतः प्रबोधयामास तत्पदाब्जनिषेवणे ॥ २३ ॥

त्वत्प्रभुजीवप्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं
प्रतिबिम्बालङ्कृतिधृतिकुशलो बिम्बालङ्कृतिमातनुते ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २४ ॥

शुक्तौ रजतप्रतिभा जाता कटकाद्यर्थसमर्था चेत्
दुःखमयी ते संसृतिरेषा निर्वृतिदाने निपुणा स्यात् ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २५ ॥

आकृतिसाम्यात् शाल्मलिकुसुमे स्थलनलिनत्वभ्रममकरोः
गन्धरसाविह किमु विद्येते विफलं भ्राम्यसि भृशविरसेऽस्मिन् ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्रक्चन्दनवनितादीन् सुखदान् मत्वा तत्र विहरसे
गन्धफलीसदृशा ननु तेऽमी भोगानन्तरदुःखकृतः स्युः।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २७ ॥

तव हितमेकं वचनं वक्ष्ये शृणु सुखकामो यदि सततं
स्वप्ने दृष्टं सकलं हि मृषा जाग्रति च स्मर तद्वदिति।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ २८ ॥

भीमरथ्यास्तटे रम्ये कृतावासं जगत्पतिम्।
पाण्डुरङ्गं महायोगपीठे दृष्ट्वा ननाम तम् ॥ २९ ॥

महायोगपीठे तटे भीमरथ्या वरं पुण्डरीकाय दातुं मुनीन्द्रैः।
समागत्य तिष्ठन्तमानन्दकन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३० ॥

तटिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशम्।
वरं त्विष्टकायां समन्यस्तपादं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३१ ॥

प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां धृतो येन तस्मात्।
विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३२ ॥

अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम्।
प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३३ ॥

पाण्डुरङ्गं स्तुवन्नेवं भगवत्पादशङ्करः।
तल्लीलाभिर्हृतस्वान्तस्तत्रोवास दिनत्रयम् ॥ ३४ ॥

वाराणसीं योगिवरोऽधिगम्य भुजैरिव श्रीहरिरेष शिष्यैः।
सहात्मना पञ्च मठानमीषां प्रकल्प्य तस्थौ कतिचिद्दिनानि ॥ ३५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततश्च रुक्मिणीकान्तविहारमहितां शुभाम् ।
प्रत्यक्सागरकल्लोलवेल्लितां द्वारकामगात् ॥ ३६ ॥

श्रीकृष्णस्य प्रपौत्रेण वज्रेण परिकल्पितम् ।
श्रीकृष्णसद्म विध्वस्तं दुष्टैर्जैनमतानुगैः ॥ ३७ ॥

कारयामास भूपेन विनीतेन सुधन्वना ।
प्राकारोत्तुङ्गशृङ्गाढ्यं रम्यं कनकरञ्जितम् ।
तत्र गोविन्दमाराध्य तुष्टाव यतिपुङ्गवः ॥ ३८ ॥

पयोऽम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन्
मणिव्रातभ्राजत्कनकवरपीठं भज हरे ।
सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैः
गृहाणेदं दूर्वाफलजलवदर्घ्यं मुररिपो ॥ ३९ ॥

त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिरं
भजस्वेमं पञ्चामृतफलरसाप्लावमघहन् ।
द्युनद्याः कालिन्द्या अपि कनककुम्भस्थितमिदं
जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ४० ॥

तटिद्वर्णे वस्त्रे भज विजयकान्ताधिहरण
प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले ।
ललाटे पाटीरं मृगमदयुतं धारय हरे
गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४१ ॥

दशाङ्गं धूपं सद्वरद चरणाग्रेऽर्पितमिदं
मुखं दीपेनेन्दुप्रभविरजसं देव कलये ।
इमौ पाणी वाणीपतिनुत सकर्पूररजसा
विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदा तृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं
सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् ।
यशोदासूनो तत्परमदययाशान सखिभिः
प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥

सचूर्णं ताम्बूलं मुखशुचिकरं भक्षय हरे
फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम् ।
सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं
प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ४४ ॥

नमस्कारोऽष्टाङ्गः सकलदुरितध्वंसनपटुः
कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इयम् ।
तव प्रीत्यै भूयादहमपि च दासस्तव विभो
कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ४५ ॥

कृष्णं जलदनीलं तं स्तुवन् भक्त्या गुरूत्तमः ।
क्षेत्रोत्तमे मठं तत्र सामवेदप्रधानकम् ।
निर्माय गोमतीतीर्थे श्रीसिद्धेश्वरसन्निधौ ॥ ४६ ॥

---

(४६) मठाम्नायविषये—आम्नायाः प्रथमतस्त्रिधा विभज्यन्ते पूर्वाम्नायमध्यमाम्नायोत्तराम्नायभेदेन । तत्र पूर्वाम्नायाश्चत्वारः पश्चिमाम्नायः पूर्वाम्नायः दक्षिणाम्नायः उत्तराम्नाय इति द्वारकामठ गोवर्धनमठ-शृंगगिरिमठ ज्योतिर्मठाख्याः । मध्यमाम्नाय एकः शारदा (कामकोटि) मठः । उत्तराम्नायास्त्रयः ऊर्ध्वाम्नायः प्रत्यगाम्नायः निष्कलाम्नाय इति । प्रत्याम्नायं संज्ञा मठ पीठ क्षेत्र तीर्थं देव शक्ति वेद संप्रदाय योगपट्ट ब्रह्मचारि महावाक्य प्रथमाचार्याख्याः त्रयोदश विशेषाः स्मर्यन्ते । मठाम्नायविषयेऽपि विसंवादो दृश्यते । अत्र सुषमानुसारेण ते त्रयोदश निरूप्यन्ते । भेदस्तु अर्धचन्द्रमध्ये निर्दिष्टः । संज्ञा - पश्चिमाम्नायः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरेश्वरं प्रतिष्ठाप्य तत्र व्याख्यानदेशिकम् ।
सशिष्यः प्राप मधुरामभीष्टं स्थानमीशितुः ॥ ४७ ॥

तत्र श्रीबालकृष्णस्य बाललीलायितेषु यत् ।
एकान्तसाक्षि तत्साक्षात्कर्तुं गोकुलमाययौ ॥ ४८ ॥

वृन्दावनं बालकृष्णपादधूलीपवित्रितम् ।
दर्शंदर्शं कुतुकितः तत्तल्लीलागतस्मृतिः ।
जगावनन्यभावेन तन्वोत्पुलकया हरिम् ॥ ४९ ॥

गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं
शश्वद्गोखुरनिर्धूतोद्गतधूलीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥ ५० ॥

कान्तं कारणकारणमादिमनादिं कालघनाभासं
कालिन्दीगतकालियशिरसि सुनृत्यन्तं मुहुरत्यन्तम् ।

---

मठः द्वारकामठः (शारदामठः इति शारदामठाम्नाये) पीठः कालिका-पीठः, क्षेत्रं द्वारका, तीर्थं गोमती, देवः सिद्धेश्वरः, शक्तिः भद्रकाली, वेदः सामवेदः, संप्रदायः, कीटवारः, योगपट्टः आश्रमः (तीर्थाश्रमौ इति शारदामठाम्नाये) ब्रह्मचारी स्वरूपब्रह्मचारी, महावाक्यं तत्त्वमसि, प्रथमाचार्यः पद्मपादः (हस्तामलक इति मठाम्नाये, सुरेश्वर इति विमर्शे) । तत्त्वमस्यादिमहावाक्यान्येव तीर्थं, तत्र अवगाहनशीलस्तीर्थः । आश्रमग्रहणे प्रौढः आशापाशविवर्जितः यातायात-विनिर्मुक्तः आश्रमः इति योगपट्टव्याख्या, कीटादयो जीवजन्तवो भूतानुकम्पया वार्यन्त इति कीटवारः इति संप्रदायव्याख्या, स्वस्वरूपज्ञः स्वधर्मपरिपालकः स्वानन्दक्रीडः स्वरूपब्रह्मचारीति विवरणं मठाम्नाये । अविगतमिति गोत्रनाम शारदामठाम्नाये दत्तम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ।। ५१ ।।

वृन्दावनभुवि वृन्दारकगणवृन्दाराधितपादाब्जं
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् ।
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं
वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ।। ५२ ।।

श्रीकृष्णलीलापूतेऽत्र क्षेत्रे वृन्दावने गुरुः ।
निनाय कतिचिन्मासान् तद्ध्यानधृतमानसः ।। ५३ ।।

मार्गे कश्चिद्वैयाकरणः पदनिष्पत्त्यध्ययनधुरीणः ।
कर्तव्यान्तरनिश्चिन्तोऽसौ बोधित आसीच्छङ्करगुरुणा ।। ५४ ।।

भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते ।
संप्राप्ते सन्निहिते काले न हि न हि रक्षति डुकृञ्करणे ।। ५५ ।।

योगरतो वा भोगरतो वा सङ्गरतो वा सङ्गविहीनः ।
यस्य ब्रह्मणि रमते चित्तं नन्दति नन्दति नन्दत्येव ।। ५६ ।।

भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता ।
सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमेन न चर्चा ।। ५७ ।।

कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः ।
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ।। ५८ ।।

त्वयि मयि सर्वत्रैको विष्णुः व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ।। ५९ ।।

---

(५५) भजगोविन्दापराभिधोऽयं मोहमुद्गरः द्वादशमञ्जरिका चतुर्दशमञ्जरिकेति द्विभागा; पूर्वा भगवत्पादप्रोक्ता उत्तरा तच्छिष्यप्रोक्तेति श्रूयते ।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरुचरणाम्बुजनिर्भरभक्तः संसाराद्‌चिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ ६० ॥

मोहध्वान्तनिराकृतिकुशलैः पद्यैर्वैयाकरणस्यैवः ।
उपदेशोऽभूद्विद्यानिपुणैः श्रीमच्छङ्करभगवच्चरणैः ॥ ६१ ॥

यमाश्रिता गिरां देवी नन्दयत्यात्मसंश्रितान् ।
तमाश्रये श्रिया जुष्टं शङ्करं करुणानिधिम् ॥ ६२ ॥

इति श्रीशङ्करविजयमकरन्दे त्रिंश आस्वादः समाप्तः ॥

---

## ॥ एकत्रिंश आस्वादः ॥

---

पीठप्रतिष्ठा, कैलासाहृतशिवलिङ्गप्रतिष्ठा च ।

आदौ शिवस्ततो विष्णुः ततो ब्रह्मा ततः परम् ।
वसिष्ठश्च ततः शक्तिः ततः षष्ठः पराशरः ॥ १ ॥

ततो व्यासः शुकः पश्चाद्गौडपादाभिधस्ततः ।
गोविन्दार्यगुरुस्तस्माच्छङ्कराचार्यसंज्ञकः ॥ २ ॥

---

सङ्कलने मूलं—हुल्सूच् कोशतः १-३, भगवत्पादाभ्युदयतः ४, ५, ४८. मार्कण्डेयसंहितातः ६, १९-२१, २३, चिद्विलासीयतः ७-९, जगन्नाथाष्टकतः ११-१२, गोवर्धनजगद्गुरुपरंपरानाममालास्तोत्रतः १३-१८, गोविन्दनाथीयतः २२, बालबोधसंग्रहतः २४, ३७, त्रिपुरीतः २५, अनुभवोल्लासतः २६-३४. सहजाष्टकतः ३५. चिदानन्दात्मकस्तोत्रतः ३६, सोपानपञ्चकतः ३८-४२, ज्योतिर्मठीयमठाम्नायमहानुशासनतः ४३-४७, मठाम्नायसेतुतः ४४-४७, संक्षेपशारीरकतः ४९, ५१, ५२, ५५, नैष्कर्म्यसिद्धिचन्द्रिकातः ५०, रामनाथद्विवेदीकृतसंक्षेपशारीरकोपोद्घाततः ५२.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पद्मपादः सुरेशश्च हस्तामलकतोटकौ ।
वेदान्तशिक्षागुरव आचार्याः पान्तु मां सदा ॥ ३ ॥

ततो जगाम बदरीं भाष्यप्रणयनस्थलीम् ।
नद्यामलकनन्दायां निर्वर्तितनिजक्रियः ॥ ४ ॥

तपस्यन्तावृषी तत्र नरनारायणौ स्तुवन् ।
श्रीमठं तत्र निर्माय तत्राथर्वणमुख्यकम् ।
विदधे तोटकाचार्यं व्याख्यातारं जगद्गुरुः ॥ ५ ॥

---

(५) मठपरिसर एव श्रीशङ्कराचार्यगुहा, (यत्र बदरीवासकाले शीते आचार्या न्यवसन्) तूत (कीमू) वृक्षः (यदधः छायायामुपविश्य भाष्यरचना कृता) दण्डधारा (पद्मपादेन श्रीनगराधिपगृहे भैक्षस्वीकरणात्प्राक् दण्डाघातेन प्रवर्तितं स्रोतः) नृसिंहमन्दिरं, पूर्णागिरिदेवीमन्दिरम्, तोटकाचार्यगुहा, शङ्करतपोवनं, तप्तकुण्डं, इत्यादिकं प्रसिद्धं क्षेत्रतीर्थजातं शङ्करचरितसंबन्धि सुदर्शं विद्यते। कालिदासीयः शंकरविजयग्रन्थः गढवाल इतिहासे उदाह्रियते। उदाहृतः श्लोकोऽयं— 'गत्वैकादशवार्षिको बदरिकारण्ये सुपुण्याश्रमे पञ्चाब्दान्तः अकुण्ठया निजधिया भाष्याणि यः षोडश। निर्माय प्रथयांचकार बदरीनारायणार्चां तथा श्रीज्योतिर्मठमाबबन्ध स गुरुः श्रीशंकरो वन्द्यते॥' इति। प्रसिद्धः कालिदासो नैतद्ग्रन्थकर्ता भवितुमर्हति। संज्ञाद्याः त्रयोदश विशेषा एवं—संज्ञा उत्तराम्नायः, मठः ज्योतिर्मठः, (श्रीमठः इति नामान्तरं इति ज्योतिर्मठाम्नाये) पीठनाम ज्योतिष्मती, क्षेत्रं बदरिकाश्रमः तीर्थं अलकनन्दा, देवो नारायणः, शक्तिः पूर्णा गिरिः, वेदोऽथर्वणः, संप्रदायः आनन्दवारः, योगपट्टः गिरिः, (गिरिपर्वतसागराः इति मठाम्नाये,) ब्रह्मचारी आनन्दब्रह्मचारी, महावाक्यं अयमात्मा ब्रह्म, प्रथमाचार्यः तोटकः। (गोत्रं भृगुगोत्रं इति मठाम्नाये।) गिरिवनवासी गीताध्ययनतत्परः गम्भीराचलबुद्धिश्च इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तिलिङ्गं तु केदारे नीलकण्ठे वरेश्वरम् ।
प्रतिष्ठाप्य महायोगी परां प्रीतिमवाप सः ॥ ६ ॥

जगन्नाथमथ प्राप दीनानाथान् सनाथयन् ।
साक्षाद्विसृज्य वैकुण्ठं यत्रैवोत्कण्ठते हरिः ॥ ७ ॥

महोदधिर्यत्र तीर्थं जगन्नाथपुरोभुवि ।
द्वारकावासिनो विष्णोस्तनुरद्यापि वर्तते ॥ ८ ॥

अवाप क्षेत्रराजं तमवलोक्य समन्ततः ।
दिनानि कतिचित्तत्र निवासमकरोन्मुदा ॥ ९ ॥

तत्रांभोधौ कृतस्नानो जगन्नाथेश्वरं हरिम् ।
प्रार्थयामास नयनपथगामी भवत्विति ॥ १० ॥

भुजे सव्ये वेणुं शिरसि शिखिपिञ्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं च विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ११ ॥

रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ १२ ॥

---

गिरिः, पर्वतमूलवासी, प्रौढज्ञाता सारासारज्ञ इति पर्वतः, तत्वसागर-गम्भीरः ज्ञानरत्नपरिग्रहः मर्यादानुल्लङ्घीति सागरः, आनन्दं सांसारिक-भोगविलासं वारयतीत्यानन्दवारः, स्वानन्दं ब्रह्म तत्र रमत इति स्वानन्दब्रह्मवारीति संज्ञा व्याख्याताः मठाम्नाये ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र श्रीशङ्कराचार्यवर्येणाशाजयान्तरे ।
बौद्धादीन् कुमतान् जित्वा विवादे युक्तिसंमिते ॥ १३ ॥

महोदधेस्तटे क्षेत्रे पुरुषोत्तमसंज्ञके ।
जगन्नाथं दारुमयं प्रतिष्ठाप्य यथाविधि ॥ १४ ॥

भूतेन्द्रियांगनेत्राब्दे (२६५५) युधिष्ठिरशकस्य वै ।
वैशाखे शुक्लगे पक्षे दशम्यां शोभने दिने ॥ १५ ॥

गोवर्धनमठे रम्ये विमलापीठसंज्ञके ।
पूर्वाम्नाये भोगवारे श्रीमत्काश्यपगोत्रजः ॥ १६ ॥

माधवस्य सुतः श्रीमान् सनन्दन इति श्रुतः ।
प्रकाशब्रह्मचारी च ऋग्वेदी सर्वशास्त्रवित् ॥ १७ ॥

श्रीपद्मपादः प्रथमाचार्यत्वेनाभ्यषिच्यत ।
श्रीमत्परमहंसादिबिरुदैरखिलैः सह ॥ १८ ॥

---

(१३) संज्ञाद्या विशेषाः—संज्ञा-पूर्वाम्नायः, मठः गोवर्धनमठः पीठः विमलापीठः, क्षेत्रं-पुरुषोत्तमक्षेत्रम्, तीर्थं महोदधिः, देवः जगन्नाथः, शक्तिः विमला, वेदः शुक्लयजुः (ऋग्वेद इति मठाम्नाये) संप्रदायः भोगवारः, योगपट्टः अरण्यः, (वन-अरण्यौ इति मठाम्नाये) ब्रह्मचारी प्रकाशब्रह्मचारी, महावाक्यं प्रज्ञानं ब्रह्म, आचार्यः—हस्तामलक इति सुषमायां, पद्मपाद इति मठाम्नाये । (काश्यपगोत्रमिति मठाम्नाये) निर्जने वने आशाबन्धमुक्तो वसतीति वननामा, सर्वं त्यक्त्वाऽरण्ये वसतीति अरण्यः, भोगो विषयासक्तिः, स वार्यते इति भोगवारः । स्वयंज्योतिः विजानाति योगयुक्तिविशारदः तत्त्वज्ञान-प्रकाशेन इति प्रकाशब्रह्मचारी इति मठाम्नाये संज्ञाव्याख्या ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीशङ्करार्ययोगी शृङ्गगिरिस्थानमगमदखिलेशः ।
श्रीशारदाख्यपीठे शिवलिङ्गं भोगनामकं चक्रे ॥ १९ ॥

शिवलिङ्गं प्रतिष्ठाप्य चिदम्बरसभातले ।
मोक्षदं सर्वजन्तूनां भुवनत्रयसुन्दरम् ॥ २० ॥

वैदिकान् दीक्षितान् शुद्धान् शैवसिद्धान्तपारगान् ।
पूजार्थं युयुजे शिष्यान् पुण्यारण्यविहारिणः ॥ २१ ॥

सर्वज्ञः शिष्यसंयुक्तः शङ्करो देशिकेश्वरः ।
भूमिं प्रदक्षिणीकृत्य भूयः काञ्चीपुरीं गतः ॥ २२ ॥

काञ्च्यां श्रीकामकोटौ तु योगलिङ्गमनुत्तमम् ।
प्रतिष्ठाप्य सुरेशार्यं पूजार्थं युयुजे गुरुः ।
यथाधिकारमाचार्यः सर्वाननुशशास ह ॥ २३ ॥

---

(१९) संज्ञाद्या विशेषाः – संज्ञा-दक्षिणाम्नायः, मठः शृङ्गगिरि-मठः, पीठः शारदापीठः, क्षेत्रं रामेश्वरम्, (रामक्षेत्रमिति मठाम्नाये) तीर्थं तुङ्गभद्रा, देवः वराहः, शक्तिः शारदा, (कामाक्षीति मठाम्नाये) वेदः कृष्णयजुर्वेदः, संप्रदायः भूरिवारः, योगपट्टः भारती (सरस्वती-पुरी-भारत्यरण्यतीर्थ-तीर्थाश्रममुखानि सर्वनामानीति शृङ्गगिरिमठाम्नाये। सरस्वती भारती पुरी इति मठाम्नाये) ब्रह्मचारी चैतन्यब्रह्मचारी, महावाक्यं अहं ब्रह्मास्मि, प्रथमाचार्यः पृथिवीधव इति सुषमायां, (सुरेश्वर इति मठाम्नाये) स्वरज्ञानरतः नित्यं स्वरवादी, संसारसागरा-सारहन्ता इति सरस्वती, सर्वभारं परित्यजन्, दुःखभाराज्ञः, विद्या-भारपूर्ण इति भारती, ज्ञानतत्वपूर्णः पूर्णतत्त्वपदास्थितः, परब्रह्मरतः इति पुरी, भूरि सुवर्णाद्यर्थाधिक्यं वारयति इति भूरिवारः, चिन्मात्रं चैत्यरहितं शिवमजरं ब्रह्म जानाति इति चैतन्यब्रह्मचारी ॥

(२३) संज्ञाद्या विशेषाः — संज्ञा मौलाम्नायः, मठः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## आचार्याणामनुशासनम् ।

शरणं न भवति जननी न पिता नो मित्रसोदराश्चान्ये।
शरणं देशिकचरणं दयया मम शिरसि नित्यविन्यस्तम् ॥ २४॥

यदंघ्रिकमलद्वन्द्वं द्वन्द्वतापनिवारणम् ।
तारकं विपदां वृन्दात् तं गुरुं प्रणमाम्यहम् ॥ २५ ॥

पुत्रमित्रकलत्रादौ धीविकारे रिपौ सदा ।
ममत्वं परबुद्धिं त्वमुभयं ह्यङ्ग मा कुरु ॥ २६ ॥

---

श्रीशारदामठः, पीठः कामकोटिपीठः, क्षेत्रं सत्यव्रतकाञ्ची, तीर्थं कम्पासरः, देवः एकाम्रनाथः, शक्तिः कामकोटी, वेदः ऋग्वेदः, संप्रदायः मिथ्यावारः, योगपट्टः इन्द्रसरस्वती, ब्रह्मचारी सत्यब्रह्मचारी (प्रज्ञानब्रह्मचारीति मठाम्नायसेतौ) महावाक्यं ओं तत्सत्, (महावाक्यचतुष्कोपेतम) प्रथमाचार्यः शङ्करभगवत्पादाः। इन्द्रशब्दः इन्द्रो मायाभिः पुरुरूप ईयते इति श्रुतेः परब्रह्मवाची, तदभेदं सरस्वत्यामाचष्ट इति, 'आद्याच्छंकरसद्गुरोः परममुं पीठं च तच्छासनात् धीरः प्राप सुरेश्वरो यतिवरः स्मर्ये तदीयक्रमे। नो साक्षात् गुरुनाम वाच्यमिति तत्तुल्यार्थमिन्द्रं पदं व्यावृत्तान्यसरस्वतीकमदधात् पूर्वं गुरुस्तत्परः' इति, 'सुरेश्वराचार्यगुरुक्रमादिदं सरस्वतीनाम तदर्थवाचिना। सहेन्द्रशब्देन पुनः प्रवृत्तिना प्रगृह्यते तन्मठपीठगोप्तृभिः' इति च व्याख्यायते। वासनादेहस्तुतौ तु 'यो वै मण्डनमिश्रविद्वदधिपस्यापाद्य सन्न्यासितां तन्मूर्ध्नि व्यसनापनोदनविधावाकर्षयन्नश्विनौ । भैषज्यं कलयांबभूव कुपितस्येन्द्रस्य वज्रायुधं चूर्णीकृत्य पुनर्ददौ हरिपदे चक्रे तमेनं भजे' इतीतिहासरीत्या सुरेश्वराय इन्द्रेण दत्तमपदानरूपं तदीयं नाम, तत्परंपरागतानन्वेतीति च। 'येषामोंतत्सदित्यन्तं महावाक्यचतुष्टयम्। गोविन्दभगवत्पादोपदिष्टं वर्तते चिरात्' इति महावाक्यस्वरूपम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनात्मकेष्वहंबुद्धिं देहप्राणेन्द्रियादिषु ।
प्राणान्तेऽपि च साधो त्वं जन्महेतुं हि मा कुरु ॥ २७ ॥

परनिन्दास्तुती साधो परद्रव्येऽपि रागिताम् ।
अत्यासक्तिं च सर्वेषु दुष्टसंगं च मा कुरु ॥ २८ ॥

विद्यायामाश्रमे वर्णे कुले वयसि संपदि ।
कदापि वासनाद्वारा ह्यहङ्कारं च मा कुरु ॥ २९ ॥

एक एव चिदानन्दः सर्वभूतेषु चात्मनि ।
इति तत्त्वं विजानानो वैरं सर्वेषु मा कुरु ॥ ३० ॥

कामक्रोधादिकं सर्वं त्यक्त्वा वासनया सह ।
अन्तः शीतलया बुद्ध्या सर्वेषु समतां कुरु ॥ ३१ ॥

चित्तवृत्तिष्वसत्यासु पञ्चकोशेष्वनात्मसु ।
यन्मयोऽहं तदन्तस्स्थः तन्मयः सर्वदा भव ॥ ३२ ॥

मज्ज्ञानान्तः प्रलीयन्ते सरसीव तटद्रुमाः ।
पञ्चभूतानि तत्कार्यं इति मत्वा सुखी भव ॥ ३३ ॥

ब्रह्मात्मके च चिद्व्योम्नि ब्रह्मात्मकतयाखिलम् ।
संपश्यन् सततं साधो जीवन्मुक्तः सुखी भव ॥ ३४ ॥

न वेत्ता न वित्तिर्न वेद्यं विकल्पो न सोऽहं न सङ्कल्पलेशोऽहमात्मा ।
न च ब्रह्म नो कर्म नोऽकर्मकोऽहं यथाऽहं तथाहं विकल्पो न कश्चित् ॥

तदा नापि बद्धो न मुक्तो न रागी विरागी न सङ्गी तदा नो वियोगी ।
न भोगी न योगी न संसाररोगी चिदानन्दसिन्धौ यदाहं निमग्नः ॥

गुरुकरुणयैकनावा प्राक्तनभाग्यानुकूलमारुतया ।
रागद्वेषतरङ्गैः तुङ्गस्संसारसागरस्तीर्णः ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयतां
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिष्क्रम्यताम् ॥ ३८ ॥

संगः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ।
सद्विद्वानुपसृप्यतां प्रतिदिनं तत्पादुके सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ ३९ ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्तु विरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ४० ॥

क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतां
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४१ ॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ४२ ॥

अस्मत्पीठसमारूढः परिव्राडुक्तलक्षणः ।
अहमेवेति विज्ञेयो यस्य देव इति श्रुतेः ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुधन्वनः समौत्सुक्यनिवृत्त्यै धर्मसेतवे ।
देवराजोपचारांश्च यथावत्तत्र कल्पयेत् ॥ ४४ ॥

केवलं धर्ममुद्दिश्य विभवो ब्राह्मचेतसाम् ।
विहितश्चोपकाराय पद्मपत्रनयं व्रजेत ॥ ४५ ॥

सुधन्वाद्या महाराजा हालाद्याश्च महीश्वराः ।
धर्मपारंपरीमेतां पालयन्तु निरन्तरम् ॥ ४६ ॥

आसेतोरा हिमाद्रेश्च सेव्या मत्पीठमंश्रयाः ।
तथा मच्छिष्यपीठीयाः सर्वेऽप्याचार्यसम्मिताः ॥ ४७ ॥

इत्येवमनुशिष्टास्ते नित्यकर्मपरायणाः ।
पञ्चयज्ञपरा नित्यं देवतातिथिपूजकाः ।
वेदमार्गैकनिरता जाताः सर्वे मुमुक्षवः ॥ ४८ ॥

सर्वज्ञात्मश्रीचरणैः संक्षेपशारीरकप्रणयनम् ।

श्रीदेवेश्वरपादपङ्कजरजस्संपर्कपूताशयः
सर्वज्ञात्मगिरांकितो मुनिवरः संक्षेपशारीरकम् ।
चक्रे सज्जनबुद्धिवर्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥ ४९ ॥

वस्तुख्यातिविघाति वादितिमिरं नैष्कर्म्यसिद्धिस्फुट-
व्याख्याचन्द्रिकया विधूय सुधियां सद्दृष्टिमुन्मीलयन् ।
अन्तः संभृतशान्तिवेदनसुधोद्द्योतः समुद्योतते
सर्वज्ञाश्रमचन्द्रमास्त्रिजगतीसर्वज्ञचूडामणिः ॥ ५० ॥

शक्तो गुरोश्चरणयोर्निकटे निवासान्नारायणस्मरणतश्च निरन्तरायः ।
शारीरकार्थविषयावगतिप्रधानं संक्षेपतः प्रकरणं कृतवान् प्रहृष्यन् * ॥ ५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्दृष्ट्वाऽथ स ऊचिवानतितरां हृष्टो गुरुश्शङ्करः
नाम्ना यद्यपि लोक एष भविता संक्षेपशारीरकः।
स्वीयैरन्यनिबन्धदुर्लभतरैरोजःप्रसादादिभिः
सर्वानेव गुणैस्तथापि बृहतो ग्रन्थान् विजेष्यते ॥ ५२ ॥

वाग्विस्तरा यस्य बृहत्तरङ्गा वेलातटं वस्तुनि तत्वबोधः ।
रत्नानि तर्कप्रसरप्रकाराः पुनात्वसौ व्यासपयोनिधिर्नः ॥

वक्त्रारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चितांघ्रिम् ॥ ५४ ॥

यदीयसंपर्कमवाप्य केवलं वयं कृतार्था निरवद्यकीर्तयः ।
जगत्सु ते तावितशिष्यपंक्तयो जयन्ति देवेश्वरपादरेणवः ॥५५॥

इति श्रीशङ्करविजयमकरन्दे एकत्रिंश आस्वादः समाप्तः ॥

---

(५३-५५) संक्षेपशारीरके ६-८ श्लोकाः । मधुसूदनसरस्वती-श्रीपादाः एनं ग्रन्थं व्याख्यातवन्तः। तद्व्याख्यायामेषु श्लोकेष्ववतारिका—व्याख्यांशाः—'अतः परं सूत्रभाष्यवार्तिककारान् गुरुपूर्वक्रमेण पूजयति त्रिभिः ।' सत्संप्रदायेन भाष्यकर्तारं शङ्करावतारं श्रीशङ्कराचार्यं प्रणमति ।' 'इदानीं स्वगुरुं वार्तिककारं पूजयति — यदीयेति'। 'देवेश्वरस्य सुरेश्वराचार्यस्य ते पादरेणवो जयन्ति सर्वोत्कर्षेण वर्तन्ते । तान्प्रत्यस्मि प्रणत इत्यर्थः । सुरपदस्थाने देवपदप्रयोगः साक्षाद्गुरुनामा-ग्रहणाय, गुरोर्नाम न गृह्णीयादिति स्मृतेः ॥'

वक्त्रारमासाद्येति श्लोके सरस्वती स्वार्थसमन्विता इति पदं रस्यं; यतीनां दशनामस्वेकं सरस्वती, तन्नामापि भगवत्पादानासाद्य सार्थकं बभूवेति व्यज्यते ॥

Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ॥ द्वात्रिंश आस्वादः ॥

भगवत्पादानां ब्रह्मीभावः ।

भगवत्पादपादाब्जद्वन्द्वं द्वन्द्वनिबर्हणम् ।
सुरेश्वरादिसद्भृङ्गैः अवलम्बितमाभजे ॥ १ ॥

उद्धृत्य वेदपयसः कमलामिवाब्धेः आलिङ्गिताखिलजगत्प्रभवैकमूर्तिम् ।
विद्यामशेषजगतां सुखदामदाद्यः तं शङ्करं विमलभाष्यकृतं नमामि ॥ २ ॥

वेदान्ताम्भोगभीरा नयमकरकुला ब्रह्मविद्याब्जषण्डा
पाषण्डोत्तुङ्गवृक्षप्रमथननिपुणा मालवीचीतरङ्गा ।
यस्यास्योत्था सरस्वत्यखिलभवभयध्वंसिनी शङ्करस्य
गङ्गा शम्भोः कपर्दादिव निखिलगुरोर्नौमि तत्पादपद्मम् ॥ ३ ॥

लब्ध्यन्तवध्वा गुरुवाग्वयस्याविवेकचूडामणिभूषितायाः ।
पाणिग्रहस्तत्पुरुषापरोक्षानुभूतिवद्ब्रह्मसदः सतां हव् ॥ ४ ॥

---

सङ्कलने मूलम्—गुर्वष्टकतः १, प्रकाशात्मश्रीचरणानां २, ज्ञानघनपादानां ३, श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणानां ४, वासनादेह-स्तुतितः ५, ललितापञ्चरत्नतः ९-१३, श्रीमत्क्रमस्तवतः १४-१६, सौन्दर्यलहरीतः १७-४१, व्यासाचलीयतः ४२, ४९-५०, ५७, केरलीयशङ्करविजयतः ४३-४८, शिवरहस्यतः ५१, बृहच्छंकरविजयतः ५२-५३, पुण्यश्लोकमञ्जरीतः ५४, प्राचीनशङ्करविजयतः ५५, जगद्गुरुरत्नमालास्तवतः ५६, शङ्कराचार्याष्टोत्तरशतनामस्तोत्र-चतुर्विंशति-नामावली-सहस्रनाम-भाष्यस्वामिकृत सहस्रनाम-पैङ्गानाडु गणपति-शास्त्रिकृताष्टोत्तरशतनामतः [नामानि संबुद्ध्येकवचनान्ततया कृतानि] ५८-८५, शङ्करपूजाकल्पतः ८६, मूकपञ्चशतीतः ८७-८९, मार्कण्डेय-संहितातः ९० ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योे वै मण्डनमिश्रविद्वदधिपस्यापाद्य सन्न्यासितां
तन्मूर्ध्नि व्यसनापनोदनविधावाकर्षयन्नश्विनौ।
भैषज्यं कलयांबभूव कुपितस्येन्द्रस्य वज्रायुधं
चूर्णीकृत्य पुनर्ददौ हरिपदे चक्रे तमेनं भजे॥ ५॥

ततः काञ्च्यां महापुर्यां निवसन्नेकदा गुरुः।
ज्ञात्वा निजशरीरान्तं सह शिष्यैः प्रसन्नधीः॥ ६॥

कम्पायां विधिवत्स्नात्वा नत्वैकाम्रनिवासिनम्।
कामाक्षीसदनं प्राप चक्रे तस्य प्रदक्षिणम्॥ ७॥

गोपुरेणान्तराविश्य नत्वा देवीं यतीश्वरः।
सौन्दर्यलहरीमुख्यैः स्तोत्रैस्तुष्टाव निर्वृतः॥ ८॥

प्रातः स्मरामि ललितावदनारविन्दं बिम्बाधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मन्दस्मितं मृगमदोज्ज्वलफालदेशम्॥

प्रातर्भजामि ललिताभुजकल्पवल्लीं रत्नाङ्गुलीयलसदङ्गुलिपल्लवाढ्याम्।
माणिक्यहेमवलयाङ्गदशोभमानां पाशेक्षुचापकुसुमेषुसृणीर्दधानाम्॥

प्रातर्नमामि ललिताचरणारविन्दं भक्तेष्टदाननिरतं भवसिन्धुपोतम्।
पद्मासनादिसुरनायकपूजनीयं पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम्॥

---

(५) सुरेश्वराचार्यः कदाचित् शिरसि व्रणशोथेनापीड्यत। मर्त्यवैद्यभैषज्येऽकिञ्चित्करे निरूपिते देवभिषजौ अश्विनौ भगवत्पादैरुपस्थीयमानौ प्रसन्नौ सुरेश्वरमरुजमकुरुताम्। इन्द्रः स्वानुमतिं विना मर्त्याय भैषज्यं कृतवतोरश्विनोः शिरसोर्वज्रमपातयत्। आचार्या भिषजतोरश्विनोः त्राणाय, वज्रमापतन्तं चूर्णीकृतवन्तः स्वतेजसा। इन्द्रो भीतः शरणं ययौ गुरुवरम्। आत्मनः पदवीमुद्रां आत्मनो नाम च आचार्यवरायार्पयत्, आचार्यवरस्तु सुरेश्वराय अर्पयामासेति इतिवृत्तं प्रख्यायते॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति ।
श्रीशाम्भवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥

प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम् ॥

बिन्दुत्रिकोणवहिरष्टककोणबाह्यदिक्कोणदिक्परचतुर्दशकोणयुक्तम् ।
वृत्ताष्टषोडशदलानतवृत्तलोकभूपूश्चतुर्मुखमहं प्रणमामि चक्रम् ॥ १४ ॥

त्रैलोक्यमोहनमयीं परमेश्वरीं तां त्रैलोक्यकारणमयीं परमेश्वरीं ताम् ।
त्रैलोक्यविस्मयमयीं परमेश्वरीं तां चक्रेश्वरीं शुभकरीं परिपूजयामि ॥

स्तोत्रं त्वमेव परमेश्वरि गीयसे चेत्
स्तोता त्वमेव परमेश्वरि गीयसे चेत् ।
स्तुत्या त्वमेव परमेश्वरि गीयसे चेत्
किं स्तूयसे खलु वदा परमेश्वरि त्वम् ॥ १६ ॥

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १७ ॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ १८ ॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः ।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥ २१ ॥

शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां
वरत्रासत्राणस्फटिकगुटिकापुस्तककराम् ।
सकृन्न त्वा नत्वा कथमिव सतां सन्निदधते
मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः ॥ २२ ॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः
वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः ।
स कर्ता काव्यानां भवति महतां भङ्गिरुचिभिः
वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ २३ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरुम्बामृतरसं
हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टान् दृष्ट्या सुखयति सुधाधारसिरया ॥ २४ ॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणां
इति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रयाणां देवानां त्रिगुणजनितानां तव शिवे
भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥ २६ ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिताः
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ २८ ॥

शिवे शृङ्गाराद्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ २९ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ३० ॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता !' ३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
 ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
 ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ३२ ॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
 तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
 पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ३३ ॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशीं
 अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे
 निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ॥ ३४ ॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
 शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारुणतया
 शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ३५ ॥

अराला केशेषु प्रकृतिसरला मन्दहसिते
 शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे ।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
 जगत् त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ३६ ॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदः
 हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा
 महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection.

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ३८ ॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरं जीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ ३९ ॥

निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निराघाटज्ञाने नियमपरचित्तैकनिलये ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतपदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥ ४० ॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ ४१ ॥

प्रागष्टमाद्विदितवेद्यमुदूढबाल्यं सर्वज्ञसंज्ञमथ हंसितमात्मनैव ।
श्रीकामकोटिबिरुदे न्यदधात्स्वपीठे गुप्तं स्वशिष्यतिलकेन सुरेश्वरेण ॥

*अथ निश्चित्य मनसा श्रीमान् शङ्करदेशिकः ।
मठे श्रीशारदाभिख्ये सर्वज्ञं निदधन्मुनिम् ॥ ४३ ॥

सुरेश्वरं वृत्तिकृतमन्तिकस्थं सदाऽऽदरात् ।
समं संस्थाप्य तस्मै स्वं वक्तुं भाष्यं समन्वशात् ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वशिष्यपारंपर्येण लिङ्गं स्वं योगनामकम् ।
सेवयैनं कामकोटिपीठे सार्धं वसेति च ॥ ४५ ॥

इत्याज्ञां संप्रदायास्मै त्यक्तपीठमठस्पृहः ।
कामाक्ष्या निकटे जातु सन्निविश्य जगद्गुरुः ॥ ४६ ॥

देहिभिर्दुर्भजं भेजे देहं तत्रैव सन्त्यजन् ।
अखण्डज्योतिरानन्दमक्षरं परमं पदम् ॥ ४७ ॥

स एव शङ्कराचार्यो गुरुर्मुक्तिप्रदः सताम् ।
अद्यापि मूर्तं चैतन्यमिव तत्रैव तिष्ठति ॥ ४८ ॥

इत्थं स शङ्करगुरुः कृतकृत्यभावात् भावान्प्रकाश्य निगमान्तगिरां निगूढान् ।
काञ्च्यां विमुच्य वपुराद्दृतमिच्छयैव स्वस्यैव धाम्नि परमे स्वत एव लिल्ये ॥

---

(४८–५७) काञ्च्यां भगवत्पादानां ब्रह्मीभावप्रतिपादका इमे । अनन्तानन्दगिरीये 'ततः परं सर्वलोकगुरुः ... स्वलोकं गन्तुमिच्छुः काञ्चीनगरे मुक्तिस्थले कदाचिदुपविश्य स्थूलशरीरं सूक्ष्मेऽन्तर्धाय मद्रूपो भूत्वा, सूक्ष्मं कारणे विलीनं कृत्वा चिन्मात्रो भूत्वा अङ्गुष्ठमात्रपुरुषः तदुपरि पूर्णमखण्डमण्डलाकारं आनन्दं प्राप्य सर्वजगव्यापकचैतन्यमभवत् । सर्वव्यापकचैतन्यरूपेणाद्यापि तिष्ठति । स एव शङ्कराचार्यो गुरुर्मुक्तिप्रदः सताम्' इति । शंकराभ्युदये – 'कम्पातीरनिवासिनीमनुदिनं कामेश्वरीमर्चयन् ब्रह्मानन्दमविन्दत त्रिजगतां क्षेमंकरः शंकरः' इति ॥ ब्रह्मानन्दीये यथा — 'पूर्णेऽब्देऽथ त्रयस्त्रिंशे जन्ममासि च तद्दिने । समाधौ संस्थितो भूत्वा भगवत्पाददेशिकः । त्यक्त्वा च पार्थिवं देहं स्वयंज्योतिस्स्वरूपवान् । भित्वा च ब्रह्मरन्ध्रं तु सर्वव्यापकचेतने । शिवे शुद्धे परे भूम्नि लयमाप तथैव च' । माधवीये तु, 'पारिकांक्षीश्वरः ... प्राप केदारकम् ॥ इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिबृढैः स्तूयमानः प्रसूनैः, दिव्यैरभ्यर्च्यमानः सरसिरुहभुवा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गामाक्रम्य पदेऽधिकाञ्चि निबिडं स्कन्धैश्चतुर्भिस्तथा
व्यावृण्वन् भुवनान्तरं परिहरंस्तापं समोहज्वरम् ।
यः शाखी द्विजसंस्तुतः फलति तत्स्वाद्यं रसाढ्यं फलं
तस्मै शङ्करपादपाय महते तन्मस्त्रिसन्ध्यं नमः ॥ ५० ॥

तद्योगभोगवरसिद्धिविमुक्तिनामलिङ्गार्चनात्प्राप्तजयः स्वकाश्रमे ।
प्राप्तान्विजित्य तरसाऽक्षतशास्त्रवादैः मिश्रान् स काञ्च्यामथ सिद्धिमाप ॥ ५१ ॥

अद्वैतमातुहिनभूधरमा च सेतोराधाय सर्वसुमनश्चयसंमतार्थम् ।
त्यक्ताङ्कनाद्यवगुणान्यपि षण्मतानि शैवादिमानि च निरुध्य यथाऽधिकारम् ॥

वाणीं विजित्य च वियद्विशदामदेहां सर्वज्ञपीठमधिरुह्य च तत्र काञ्च्याम् ।
विद्वद्वरार्चितपदो यमिसार्वभौमो देव्याः पुरः परतरे पुरुषे विलिल्ये ॥ ५३ ॥

महेशांशाज्जातो मधुरमुपदिष्टाद्वयनयो
महामोहध्वान्तप्रशमनरविः षण्मतगुरुः ।
फले (३२) स्वस्मिन् स्वायुष्यपि शरचराब्देऽपि (२६२५) च कलेः
विलिल्ये रक्ताक्षिण्यधिवृषसितैकादशि परे ॥ ५४ ॥

---

दत्तहस्तावलम्बः । आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः शृण्वन्नालोकशब्दं समुदितमृषिभिर्धाम नैजं प्रतस्थे' ॥ इति । सदानन्दीये तु 'सशिष्यो बदरीवनम् । जगाम शंकराचार्यो हर्षेण महतावृतः ॥ ... आरुह्योक्षाणमग्र्यं स नैजं धाम परं ययौ' ॥ इति । माधवीयःशंकरविजयव्याख्या — अद्वैतराज्यलक्ष्मीकारास्तु — तुङ्गमीशावतारमित्यत्र व्याख्याने, 'गौरीरमणावतारत्वं तु श्रीशंकराचार्यस्योक्तं शिवरहस्ये नवमांशे षोडशाध्याये । 'स्कन्द उवाच — तदा गिरिजया पृष्ट' इत्यारभ्य 'तान्वै विजित्य तरसाऽक्षतशास्त्रवादैर्मिश्रान् स काञ्च्यामथ सिद्धिमाप' इति शिवरहस्यं प्रस्तूय, अन्ते लिखन्ति—'एतत्कथाजालं बृहच्छंकरविजय एव श्रीचिद्विलासानन्दगिरिविरचिते द्रष्टव्यमिति दिक्' इति ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्यब्दैश्च शरेक्षणाध्वनयनैः (२६२५) सत्कामकोटिप्रथे
पीठे न्यस्य सुरेश्वरं समवितुं सर्वज्ञसंज्ञं मुनिम् ।
कामाक्ष्याः सविधे स जातु निविशन्नुन्मुक्तलोकस्पृहो
देहं स्वं व्यपहाय देह्यसुगमं धाम प्रपेदे परम् ॥ ५५ ॥

परमन्तिकसत्सुरेश्वराद्यैः परमाद्वैतमतं स्फुटं प्रवेद्य ।
परिकाञ्चिपुरं परे विलीनः परमायास्तु शिवाय सद्गुरुर्नः ॥

पीठे तिष्ठति कामकोटिबिरुदे यः शारदाख्ये मठे
देहीवादिमशङ्करार्यनियमव्रातो व्रतिष्ठोऽधुना ।
नेपालादिनृपालमौलिविधृतश्रीशासनो नः शिवं
देयादेष जगद्गुरुः स विपुलानन्दाकृतिः शङ्करः ॥ ५७ ॥

**स्वामिन्! जय!! विजयी भव!!!**

श्रीशङ्कराचार्यवर्य ब्रह्मज्ञानप्रदायक ।
अज्ञानतिमिरादित्य सुज्ञानांबुधिचन्द्रमः ॥ ५८ ॥

ज्ञानमुद्राञ्चितकर शिष्यहृत्तापहारक ।
षण्मतस्थापनाचार्य त्रयीमार्गप्रकाशक ॥ ५९ ॥

---

चिद्विलासीये तु 'इत्युक्त्वा शंकराचार्यकरपल्लवमादरात् । अवलम्ब्य कराग्रेण दत्तात्रेयः स तापसः । प्रविवेश गुहाद्वारं दत्वाऽऽज्ञां जनसन्ततेः । क्रमाज्जगाम कैलासं प्रमथैः परिवेष्टितम्' इति । गुरुवंशकाव्ये तु 'दत्तात्रेयं भुवनविनुतं वीक्ष्य नत्वा न्यगादीत् वृत्तं स्वीयं सकलमपि तान् प्रेषितान् दिक्षु शिष्यान् । सोऽपि श्रुत्वा मुनिपतिरदादाशिषो विश्वरूपाचार्यादिभ्यः सुखमवसतां तत्र तौ भाषमाणौ' ॥ इति श्लोकेन शंकरकथा परिसमाप्यते ॥

कैलासादवतरन् शम्भुः वृषशैले उद्भूत्, कालट्यां जज्ञे । तद्वत् काञ्च्यां, श्रीराम इव सरय्वां, श्रीकृष्ण इव प्रभासे योगेन तनुं विलाप्य केदारे (दत्तात्रेयाश्रमेऽन्यत्र वा) उद्भूतः ब्रह्मेन्द्रशैलाद्यादिभिः प्रत्युपस्थितः कैलासं जगामेति सम्पन्नम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसन्नवदनांभोज परमार्थप्रकाशक ।
काषायवसनोपेत भस्मोद्धूलितविग्रह ॥ ६० ॥

ज्ञानात्मकैकदण्डाढ्य कमण्डलुलसत्कर ।
अद्वैतस्थापनाचार्य भगवत्पादसंज्ञक ॥ ६१ ॥

अष्टवर्षचतुर्वेदिन् द्वादशाखिलशास्त्रवित् ।
कम्रमुक्तिगृहद्वारकवाटघ्नपदाम्बुज ॥ ६२ ॥

श्रीमत्कैलासनिलय सच्छिवांशावतारक ।
कालटीक्षेत्रनिवसदार्यांबागर्भसंश्रित ॥ ६३ ॥

शिवादिगुरुवंशाब्धिराकापूर्णसुधाकर ।
पितृदत्तान्वर्थभूतशङ्कराख्यासमुज्ज्वल ॥ ६४ ॥

अभ्यस्तवेदवेदाङ्ग निखिलागमपारग ।
दरिद्रब्राह्मणीदत्तभिक्षामलकतोषित ॥ ६५ ॥

स्वर्णधारास्तुतिप्रीतरमानुग्रहभाजन ।
स्वर्णामलकसद्वृष्टिप्रसादानन्दितद्विज ॥ ६६ ॥

सरिद्गत्यातपश्रान्तमातृदुःखापनोदक ।
नक्रग्रहव्याजमातृमतपारमहंस्यक ॥ ६७ ॥

शप्तगन्धर्वनक्रत्वपरिहर्तृपदाम्बुज ।
चिन्तनामात्रसान्निध्यकरणाश्वासिताम्बक ॥ ६८ ॥

सोमोद्भवातटीक्लृप्तसौम्यगोविन्दसेवन ।
गोविन्दार्यमुखावाप्तमहावाक्यचतुष्टय ॥ ६९ ॥

योगसिद्धिगृहीतेन्दुभवापूरकमण्डलो ।
गुर्वनुज्ञातविश्वेशदिदृक्षागमनोत्सुक ॥ ७० ॥

चण्डालाकारविश्वेशप्रश्नानुप्रश्नहर्षित ।
विश्वेशानुग्रहावाप्तभाष्यप्रथननैपुण ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राशीकृतौपनिषदयाथार्थ्यस्फुटभाष्यकृत् ।
यद्वूहप्रोक्तगीतायाथातथ्यविवेचक ॥ ७२ ॥

यदृच्छाकृतवाक्यार्थहृष्यत्सत्यवतीसुत ।
मन्दाकिनीझरीरम्यभाष्यपावितभूतल ॥ ७३ ॥

मस्करित्वकृतस्वांबायज्ञस्थापितसत्पथ ।
त्रिरधीतात्मीयभाष्यसनन्दनसमाश्रय ॥ ७४ ॥

कुकूलानलकूटस्थकुमारिलकृतानते ।
कर्मैकपथिकादण्डमण्डनान्त्याश्रमप्रद ॥ ७५ ॥

कञ्जयोन्यवतारश्रीसुरेश्वरसुदेशिक ।
राजताद्रिवरानीतरम्यस्फाटिकलिङ्गक ॥ ७६ ॥

यत्नामेधमहामौनवटुवादकसन्निधे ।
यथावत्तत्ववज्ज्ञातृहस्तामलकसद्गुरो ॥ ७७ ॥

यथोक्तवृत्तनामाढ्यस्वकशिष्यसमाश्रित ।
रामेश्वरादिमेर्वन्तप्रतिष्ठापितसन्मत ॥ ७८ ॥

ककुब्जयमहायात्रापवित्रितमहीतल ।
महितद्वैतसाम्राज्यरक्षादुर्गमठाग्रयकृत् ॥ ७९ ॥

मठस्थापितसच्छिष्यधृतमुक्तिनिकेतन ।
शारदास्थापनापूतऋश्यशृङ्गगिरिस्थक ॥ ८० ॥

केदारेशप्रतिष्ठातः नेपालवरलिङ्गकृत् ।
चिदम्बरसमान्यस्तमोक्षलिङ्ग यतीश्वर ॥ ८१ ॥

ऋष्यशृङ्गाश्रमन्यस्तभोगलिङ्ग महायशः ।
श्रीचक्रात्मकताटङ्कपोषिताम्बामनोरथ ॥ ८२ ॥

काञ्च्यां श्रीचक्रराजाख्ययन्त्रस्थापनदीक्षित ।

CC-0. Mumukshu Bhawan V[redacted]

सर्वज्ञपीठाध्यारोहलुप्तसर्वज्ञसंशय ।
कैलासयात्रासंप्राप्तचन्द्रमौलिप्रपूजक ॥ ८४ ॥

सौन्दर्यलहरीमुख्यबहुस्तोत्रविधायक ।
सत्यव्रतसमाख्यातकाञ्चयन्तरितविग्रह ॥ ८५ ॥

काञ्चीपुराभरणकामदकामकोटिपीठाभिषिक्तवरदेशिकसार्वभौम ।
सार्वज्ञयशक्त्यधिगताखिलमन्त्रतन्त्रचक्रप्रतिष्ठितिविजृंभितचातुरीक ॥

स्वामिन्! जय!! विजयीभव!!!

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥ ८७ ॥

कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥ ८८ ॥

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥ ८९ ॥

महात्रिपुरसुन्दरीरमणचन्द्रमौलीश्वर-
प्रसादपरिलब्धवाङ्मयविभूषिताशान्तरम् ।
निरन्तरमुपास्महे निरुपमात्मविद्यानदी-
नदीनपतिमभं मनसि शङ्करार्यं गुरुम् ॥

इति श्रीशङ्करविजयमकरन्दे द्वात्रिंश आस्वादः समाप्तः ॥

---

श्रीशङ्करविजयमकरन्दः समाप्तः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

